॥ श्रीः ॥

हरिदास-संस्कृत-ग्रन्थमाला
१३८

व्याकरणमध्यमायाः

# सोत्तरा-प्रश्नावली

( चतुर्थं खण्डम् )



चौखम्बा संस्कृत सीरीज आफिस, वाराणसी

॥ श्रीः ॥

❀ हरिदास-संस्कृत-ग्रन्थमाला ❀

१३८



व्याकरणमध्यमा

# सोत्तरा प्रश्नावली

( दिवाद्यादि-कृदन्तान्ता )

( चतुर्थ खण्डम् )

सम्पादकः—

पं० श्री रामचन्द्र झा व्याकरणाचार्यः






चौखम्बा संस्कृत सीरीज आफिस, वाराणसी-१

सं. २०१५ ] मूल्यं ४॥) [ ई. १९५९

# आमुख

नवीन पाठ्यक्रम के अनुसार इस बार प्रश्नोत्तरी का कलेवर बदल दिया गया है। बहुधा ऐसा देखा जाता है कि शास्त्रार्थ का अंश जिन जिन प्रयोगों में छिपा रहता है, परीक्षक बार-बार उन्हें ही पूछते हैं। इसी लिये एक ही प्रकार के प्रश्न लगातार चार-चार वर्षों तक प्रश्नपत्र में देखे जाते हैं। परीक्षकों को कुछ प्रश्न पूछने का अभ्यास-सा बन गया है। नियमावली में शास्त्रार्थवर्जित सिद्धान्तकौमुदी निर्धारित है, परन्तु परीक्षक को प्रायः यह ज्ञात ही नहीं है। अस्तु।

इसबार प्रकरण के अनुसार ही प्रश्नोत्तर हो जाने से अध्ययन के समय से ही विद्यार्थी यदि इस प्रश्नोत्तरी का मनन करते रहेंगे तो गुरुमुख से पाठ श्रवण मात्र करने पर भी उन्हें ग्रन्थाशय सरलरूपेण समझ में आ जायगा और परीक्षा उत्तीर्ण करना तो अन्यथासिद्ध ही हो जायगा।

जिस ई० में जो-जो प्रश्न पूछे गये हैं उन-उन प्रश्नों के आगे कोष्ठक में उन-उन ई० का अंकनिर्देश कर दिया गया है। प्रश्नों के अविकल रूप ( प्रश्नपत्र ) २१२ पृष्ठ के आगे छापे गये हैं। विद्यार्थियों को चाहिये कि वे प्रश्नोत्तरी पढ़ते समय प्रश्न का स्वरूप प्रश्नपत्र में अवश्य देख लिया करें। इससे प्रश्नोत्तराशय समझने में उन्हें सरलता होगी।

# प्रकरण-सूची


| | | | पृष्ठ |
|---|---|---|---|
| १. दिवादि प्रकरणम् | ... | ... | १ |
| २. स्वादि प्रकरणम् | ... | ... | ८ |
| ३. तुदादि प्रकरणम् | ... | ... | ११ |
| ४. रुधादि प्रकरणम् | ... | ... | १८ |
| ५. तनादि प्रकरणम् | ... | ... | २१ |
| ६. क्र्यादि प्रकरणम् | ... | ... | २५ |
| ७. चुरादि प्रकरणम् | ... | ... | २६ |
| ८. ण्यन्त प्रकरणम् | ... | ... | ३८ |
| ९. सन्नन्त प्रकरणम् | ... | ... | ४९ |
| १०. यङन्त प्रकरणम् | ... | ... | ६० |
| ११. यङ्लुगन्त प्रकरणम् | ... | ... | ६५ |
| १२. नामधातु प्रकरणम् | ... | ... | ७४ |
| १३. कण्ड्वादि प्रकरणम् | ... | ... | ९२ |
| १४. प्रत्ययमाला प्रकरणम् | ... | ... | ९५ |
| १५. आत्मनेपद प्रकरणम् | ... | ... | ९६ |
| १६. परस्मैपद प्रकरणम् | ... | ... | ११० |
| १७. भावकर्म प्रकरणम् | ... | ... | ११४ |
| १८. कर्मकर्तृ प्रकरणम् | ... | ... | १२३ |
| १९. लकारार्थ प्रकरणम् | ... | ... | १२९ |
| २०. कृत्य प्रकरणम् | ... | ... | १३७ |
| २१. पूर्वकृदन्त प्रकरणम् | ... | ... | १४९ |
| २२. उणादि प्रकरणम् | ... | ... | १८७ |
| २३. उत्तरकृदन्त प्रकरणम् | ... | ... | ,, |

॥ श्रीः ॥

## व्याकरण-मध्यमा

# सोत्तरा-प्रश्नावली

( चतुर्थं खण्डम् )

### अथ मङ्गलाचरणम्

ओङ्कारं मुरलीधरं प्रभुवरं वृन्दावनाधीश्वरं
भक्ताभीष्टफलप्रदं सुरवरैरासेव्यपादाम्बुजम् ।
वन्दे रासविहारिणं निजजनानन्दप्रदं माधवं
श्रीराधादिसमस्तगोपवनितासंसेव्यमानं प्रभुम् ॥

## अथ दिवादिप्रकरणम्

दीव्यति ( ई० ५७ )—दिव्धातोर्लटि तिपि सार्वधातुकसंज्ञायां शपि प्राप्ते तं प्रबाध्य 'दिवादिभ्यः श्यन्' इति श्यनि अनुबन्धलोपे 'हलि च' इति दीर्घे 'दीव्यति' इति सिद्धम् ।

नर्तिष्यति ( ई० ३४ )—नृत्धातोर्लृटस्तिपि 'स्यतासी लृलुटोः' इति स्यप्रत्यये तस्यार्धधातुकत्वेन 'सेऽसिचि कृतचृतछृदतृदनृतः' इति इटि अनुबन्धलोपे 'पुगन्तलघूपधस्य च' इति गुणे रपरत्वे 'आदेशप्रत्यययोः' इति षत्वे उक्तं रूपं सिद्धम् । इडभावपक्षे 'नर्त्स्यति' इति च भवति ।

त्रेसतुः ( ई० ३३, ५८ )—'त्रसी उद्वेगे' अस्माद्धातोर्लिटि तसि तस्योऽतुसि द्वित्वेऽभ्यासत्वे 'वा जॄभ्रमुत्रसाम्' इति एत्वे अभ्यासलोपे च कृते सस्य रुत्वे विसर्गे 'त्रेसतुः' इति ।

सुषुविषे ( ई० ४५, ४७ )—'षूङ् प्राणिप्रसवे' इत्यस्माद्धातोर्लिटि 'धात्वादेः षः सः' इति सत्वे लिटः स्थाने थासि 'थासः से' इति तस्य सेभावे

'लिटि धातोरनभ्यासस्य' इति द्वित्वे अभ्यासंज्ञायां ह्रस्वत्वे 'आर्धधातुकस्येड्वलादेः' इति प्राप्तमिटं प्रबाध्य 'स्वरतिसूतिसूयतिधूञूदितो वा' इति विकल्पे प्राप्ते तमपि 'श्र्युकः किति' इति निषेधे क्रादिनियमात्रित्येटि अनभ्यासस्य सस्य षत्वे 'अचिश्नुधातु–' इति उवङि 'सुषुविषे' इति ।

दीयते ( ई० ४४ )—'दीङ्' धातोर्लटि आत्मनेपदे तप्रत्यये शपं प्रबाध्य 'दिवादिभ्यः श्यन्' इति श्यनि टेरेत्वे उक्तं रूपं सिद्धम् ।

दिदीये ( ई० ४४, ४९, ५३, ५५ )—'दीङ् क्षये' इत्यस्माद्धातोर्लिटि तत्स्थाने तप्रत्यये तस्य ऐसादेशे 'लिटि धातोरि'ति द्वित्वे अभ्यासत्वे 'ह्रस्वः' इति ह्रस्वत्वे 'दि दी ए' इति स्थिते 'दीङो युडचि क्ङिति' इति युटि उक्तं रूपं सिद्धम् । युटं प्रबाध्य 'एरनेकाचः—' इति यण् तु न, 'वुग्युटावुवङ्यणोः सिद्धौ वक्तव्यौ' इयि वार्तिकनिषेधात् ।

अदास्त ( ई० ३८, ४१, ४४ )—'दीङ् क्षये' अस्माद्धातोर्लुङि तत्स्थाने आत्मनेपदे तप्रत्यये 'लुङ्लङ्–' इत्यडागमे मध्ये च्लौ तस्य सिजादेशे 'मीनातिमिनोतिदीङां ल्यपि च' इत्यनेन आत्वे 'अदास्त' इति सिद्धम् । न च आत्वे कृते दारूपत्वात् 'दाधाघ्वदाप्' इति घुसंज्ञायां सत्यां 'स्थाघ्वोरिच्च' इत्यनेन इत्वं कुतो नेति वाच्यम् , 'स्थाघ्वोरीत्वे दीङः प्रतिषेधः' इति वार्तिकेन तन्निषेधात् । वस्तुतस्तु दीङोऽनुकरणे दारूपासंभवेन घुत्वाऽभावादित्वस्य शङ्कैव नोदेतीति तत्त्वविदः । अत एव 'प्रनिदाता' इत्यादौ 'नेर्गदनद–' इति णत्वं नेति ।

दिध्ये ( ई० २६ )—'धीङ् आधारे' अस्माद्धातोर्लिटि तत्स्थाने आत्मनेपदे तप्रत्यये 'लिटिधातोरि'ति द्वित्वे अभ्यासंज्ञायां ह्रस्वे 'अभ्यासे चर्च' इति जश्त्वे 'लिटस्तझयोरेशिरेच्' इति तस्य एशादेशे अनुबन्धलोपे यणि उक्तं रूपं सिद्धम् ।

अमास्त ( ई० ४० )—मिङ्धातोर्लुङि आत्मनेपदे तप्रत्यये अडागमे मध्ये च्लौ तस्य सिचि 'मिनातिमिनोतिदीङां ल्यपि च' इत्यात्वे 'अमास्त' इति ।

लाता ( ई० ३५ )—'लीङ् श्लेषणे' इत्यस्माद्धातोर्लुटस्तादेशे 'स्यतासी लृलुटोः' इति तासिप्रत्यये 'लुटः प्रथमस्य डारौ रसः' इति तस्य डादेशे अनुबन्धलोपे डित्वसामर्थ्यादभस्यापि टेर्लोपे 'विभाषा लीयते' इति विभाषया आत्वे 'लाता' इति । पक्षे गुणे 'लेता' इति च भवति ।

अयाञ्चक्रे ( ई० ४१ )—'इक् गतौ' इत्यस्माद्धातोर्लिटि 'इजादेश्च गुरुमतोऽनृच्छः' इत्यनेन आमि गुणे अयादेशे लिटो लुकि 'कृञ्चानुप्रयुज्यते लिटि' इति लिट्परककृञोऽनुप्रयोगे सति लिटः स्थाने तप्रत्यये तस्य एशादेशे द्वित्वे अभ्यासत्वे 'उरत्' इत्यत्वे रपरत्वे हलादिशेषे चुत्वे यणि अनुस्वारे परसवर्णे च कृते 'अयाञ्चक्रे' इति ।

अशात् ( ई० ५२, ५७ ) 'शो तनूकरणे' इत्यस्माद्धातोर्लुङस्तिपि 'लुङ्लङ्' इत्यडागमे मध्ये च्लौ तस्य सिचि 'विभाषा घ्राधेट्शाच्छासः' इति सिचो लुकि 'आदेच उपदेशेऽशिति' इत्यात्वे 'इतश्च' इति तिप इकारलोपे 'अशात्' इति । सिज्लोपाभावपक्षे आत्वे कृते आदन्तत्वात् 'यमरमनमातां सक् च' इति इटि सकि च कृते 'अस्तिसिचोऽपृक्ते' इति तिपस्तकारस्य ईटि 'इट ईटि' इति सलोपे 'अशासीत्' इति सिद्धं भवति ।

अभ्यस्यत् ( ई० ३८ )—अभ्युपसर्गात् 'षो अन्तकर्मणि' इत्यस्माद्धातोर्लङि 'धात्वादेः षः सः' इति सत्वे लङस्थाने तिपि अडागमे 'दिवादिभ्यः श्यन्' इति श्यनि 'ओतः श्यनि' इत्योकारस्य लोपे 'प्राक्सिताद्ड्व्यवायेऽपि' इति नियमात् 'उपसर्गात्सुनोति' इति षत्वे यणि उक्तं रूपं सिद्धम् ।

जायते ( ई० ४२, ५० )—'जनी प्रादुर्भावे' इति धातोर्लटि तत्स्थाने आत्मनेपदे तप्रत्यये 'दिवादिभ्यः श्यन्' इति श्यनि 'ज्ञाजनोर्जा' इति आदेशे 'टित आत्मनेपदानां टेरे' इति टेरेत्वे 'जायते' इति ।

अजनि ( ई० ४३, ४९, ५५, ५८ )—'जनी प्रादुर्भावे' इति धातोर्लुङस्तादेशे 'लुङ्लङ्—' इत्यडागमे मध्ये च्लौ 'दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्' इति विभाषया च्लेश्चिणि अनुबन्धलोपे 'अजन् इ त' इति स्थिते 'अत उपधायाः' इति वृद्धौ प्राप्तायां 'जनिवध्योश्च' इति निषेधे 'चिणो लुक्' इति तलोपे 'अजनि' इति । चिणोऽभावपक्षे च्लेः सिचि 'आर्धधातुकस्येड्वलादेः' इति सिचः इटि षत्वे ष्टुत्वे 'अजनिष्ट' इति च भवति ।

अदीपि ( ई० ३५ )—'दीपी दीप्तौ' इति धातोर्लुङस्तादेशे 'लुङ्लङ्—' इत्यडागमे मध्ये च्लौ 'दीपजनबुध—' इति च्लेश्चिणि अनुबन्धलोपे 'चिणो लुक्' इति चिणः परस्य तशब्दस्य लोपे 'अदीपि' इति । चिणभावपक्षे च्लेः सिचि इटि षत्वे ष्टुत्वे 'अदीपिष्ट' इति च सिद्धं भवति ।

अपूरि ( ई० ४१ )—'पूरी आप्यायने' इति धातोर्लुङस्तादेशे 'लुङ्लङ्—' इत्यडागमे मध्ये च्लौ 'दीपजनबुधपूरितायिप्यायिभ्योऽन्यतरस्याम्' इति च्लेश्चिणि 'चिणो लुक्' इति तशब्दस्य लोपे 'अपूरि' इति। पक्षे च्लेः सिचि इटि षत्वे ष्टुत्वे 'अपूरिष्ट' इति।

ननद्ध ( ई० ३३ )—'णह् बन्धने' इति धातोर्लिटि 'णो नः' इति धातोर्णस्य नत्वे लिटः सिपि सिपस्थलि 'लिटि धातोः–' इति द्वित्वे अभ्यासत्वे हलादिशेषे 'ऋतो भारद्वाजस्य' इति इटि 'थलि च सेट्' इति एत्वाभ्यासलोपयोः कृतयोः 'नेहिथ' इति। इडभावपक्षे 'नहो धः' इति हस्य धत्वे 'झषस्तथोर्धोऽधः' इति थस्य धत्वे 'झलां जश् झशि' इति पूर्वधकारस्य दकारे 'ननद्ध' इति।

प्रण्यपादि ( ई० ३४, ५६ )—प्र नि इत्युपसर्गात् 'पद् गतौ' इति धातोर्लुङस्तादेशे अडागमे मध्ये च्लौ 'चिण् ते पदः' इति च्लेश्चिणि 'चिणो लुक्' इति तलोपे 'अत उपधायाः' इति वृद्धौ यणि णत्वे 'प्रण्यपादि' इति।

अबोधि ( ई० ३४ )—बुधधातोर्लुङस्तादेशे 'लुङ्लङ्—' इत्यडागमे मध्ये च्लौ 'दीपजनबुध–' इति च्लेश्चिणि 'चिणो लुक्' इति तकारस्य लोपे 'पुगन्तलघूपधस्य च' इति गुणे 'अबोधि' इति। चिणभावपक्षे च्लेः सिचि 'झलो झलि' इति सलोपे 'झषस्तथोर्धोऽधः' इति तस्य धत्वे 'झलां जश् 'झशि' इति धस्य जश्त्वेन दकारे 'अबुद्ध' इति।

स्रष्टा ( ई० ३४ )—सृज् धातोर्लुटस्तादेशे 'स्यतासी लृलुटोः' इति तासि तकारस्य डात्वे डित्वसामर्थ्यादभस्यापि टेर्लोपे 'सृ दृशोर्झल्यमकिति' इत्यमि 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' इति षत्वे ष्टुत्वे 'स्रष्टा' इति।

सृक्षीष्ट ( ई० ४६ )—'सृज विसर्गे' इति धातोराशीर्लिङि तस्थाने आत्मने पदे तप्रत्यये 'लिङः सीयुट्' इति सीयुडागमे 'सुट् तिथोः' इति सुटि 'लिङ्सिचावात्मनेपदेषु' इति कित्वाद् गुणाभावे 'सृजदृशोर्झल्यमकिति' इति अमभावे च कृते 'व्रश्चभ्रस्ज—' इति जस्य षत्वे षस्य कत्वे 'आदेशप्रत्यययोः' इति षत्वे ष्टुत्वे उक्तं रूपं जातम्।

असृष्ट (ई० ३४)—सृज्धातोर्लुङस्तादेशे 'लुङ्लङ्–' इत्यडागमे मध्ये च्लौ च्लेः सिचि 'लिङ्सिचावात्मने पदेषु' इति सिचः कित्वात् गुणाभावे 'सृज दृशो'रित्यस्याप्यप्राप्ते 'झलो झलि' इति सलोपे 'व्रश्चभ्रस्ज–' इति षत्वे ष्टुत्वे 'असृष्ट' इति।

राधोऽकर्मकादेव श्यन् ( ई० ४७ )—'राधोऽकर्मकाद् वृद्धावेवे'ति पाठः। तत्र राधेरर्थान्तरेऽपि श्यन्नुपपत्तये एवकारस्य भिन्नक्रमत्वमवश्यं वाच्यम्। एवं सति वृद्धावित्यस्य किं प्रयोजनमिति जिज्ञासायाम्, अकर्मकक्रिया एवंविधेति प्रदर्शनार्थं तदावश्यकं न तु परिसंख्यानार्थमित्युत्तरम्। उदाहरणं यथा—'यन्मह्यमपराध्यति, द्रुह्यतीत्यर्थः। 'विराध्यन्तं क्षमेत कः' द्रुह्यन्तमित्यर्थः।

रराधतुः ( ई० ३७ )—राध्धातोर्लिटि तसोऽतुसि द्वित्वे अभ्यासत्वे हलादिशेषे ह्रस्वे सस्य रुत्वे विसर्गे 'रराधतुः' इति। नन्वत्र 'राधो हिंसायाम्' इति एत्वाभ्यासलोपौ कथन्नेति चेन्न, तत्र हिंसार्थकस्य सकर्मकस्य ग्रहणाद्, अत्राकर्मकस्य दैवादिकस्याप्रसक्तेः।

रराधिथ ( ई० ४५ )—राध्धातोर्लिटि सिपि तस्य 'परस्मैपदानामि'ति थलादेशे 'लिटि धातोः—' इति द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'आर्धधातुकस्येड्वलादेः' इति इटि उक्तं रूपं सिद्धम्। अत्र 'राधो हिंसायाम्' इत्यनेन एत्वाभ्यासलोपौ तु न भवतः, हिंसार्थकस्य सकर्मकतया अस्य वृद्ध्यर्थकत्वेनाऽकर्मकत्वात्।

विध्यति ( ई० ५० )—'व्यध् ताडने' इति धातोर्लटि तिपि 'दिवादिभ्यः श्यन्' इति श्यनि, श्यनो ङित्वात् 'ग्रहिज्ये'ति सम्प्रसारणे पूर्वरूपे 'विध्यति' इति।

अश्लिक्षत् ( ई० ४२, ४४, ४६, ५२, ५४, ५५ )—'श्लिष् आलिङ्गने' इति धातोर्लुङि तिपि अडागमे मध्ये च्लौ तस्य 'पुषादिद्युताद्य्लृदितः परस्मैपदेषु' इति प्राप्तमङं बाधित्वा 'श्लिषः' इत्यनेन क्सादेशे 'षढोः कः सि' इति षस्य कत्वे 'आदेशप्रत्यययोः' इति सस्य षत्वे 'अश्लिक्षत्' इति। ननु अस्माद्धातोः कर्मणि लुङि च्लौ 'चिण्भावकर्मणोः' इति च्लेश्चिण् प्राप्तस्तस्यैव क्सादेशोऽयमपवादः स्यान्न तु 'पुषादिद्युतादी'त्यस्येति चेन्न, 'पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इति न्यायेन पुषादीत्यस्यैवापवादत्वात्। नच 'शल इगुपधादनिटः क्सः' इत्यनेनैव क्सादेशे सिद्धे 'श्लिषः' इति क्सादेशविधानं किमर्थमिति वाच्यम्, योगविभागसामर्थ्येन तस्यापि 'आलिङ्गने' एवेति नियमात्।

. अश्लिक्षत् ( ई० ३९ )—अत्र पुषादित्वादङि प्राप्ते 'निरवकाशो विधिरपवादः' इति वचनेन अपवादत्वात् 'श्लिषः' इति सूत्रेण च्लेः क्सः। नच कर्मणि लुङि 'चिण् भावकर्मणोः' इत्यनेन प्राप्तस्य चिणोऽपि 'श्लिषः' इत्यनेन बाधः

स्याविति बाध्यम्, पुरस्तादपवादन्यायेन पुषाद्यङ एव बाधकत्वात्। एवञ्च 'श्लिषः' इति सूत्रेण आलिङ्गनरूप धात्वर्थे क्से सिद्धे 'आलिङ्गने' इति योगविभागेन श्लिष्धातोरालिङ्गनेऽर्थे एव क्सो नान्यत्रेति नियम्यते। तथा च—यदि 'शल इगुपधादनिटः क्सः' इति सूत्रविहितस्य क्सस्य 'आलिङ्गने' इत्यनेन नियमो न स्यात् तदा पुनरपि योगविभागो व्यर्थ एव, स च व्यर्थः सन् 'शलः' इत्यादि सूत्रविहितस्यापि क्सस्य नियमं करोति। ततश्च अनालिङ्गने 'समश्लिषज्जतु काष्ठम्' इत्यत्र अङ्। कर्मणि प्रत्यये तु चिण् सिद्ध्यति।

**ररन्धतुः** ( ई० ३५ )—'रध्' धातोर्लिटि तसि तसोऽतुसि 'लिटि धातोः–' इति द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'ररधतुस्' इति स्थिते 'एत्वाभ्यासलोपौ बाधित्वा 'रधिजभोरचि' इति परत्वान्नुमि संयोगात्परत्वेन अकित्वान्नलोपाभावे सस्य रुत्वे विसर्गे 'ररन्धतुः' इति।

**ररन्धिव** ( ई० ३४ )—रध्धातोर्लिटि वसि वसो वादेशे द्वित्वादिकार्ये 'रधिजभोरचि' इति नुमि 'रधादिभ्यश्च' इति विभाषया इटि 'ररन्धिव' इति। पक्षे एत्वाभ्यासलोपयोः कृतयोः 'रेध्व' इति।

**रधिता** ( ई० ४४, ५३, ५६ )—हिंसासंराध्यर्थक 'रध्'धातोर्लुटि तिपि तिपो डादेशे डित्वसामर्थ्यादभस्यापि टेर्लोपे मध्ये तासि प्रत्यये 'रधादिभ्यश्च' इति विभाषया इटि 'रधिजभोरचि' इति नुम्प्राप्ते 'नेटयलिटि रधेः' इति निषेधे 'रधिता' इति। इडभावपक्षे 'रद्धा' इति।

**अरधत्** ( ई० ४५ )—रध्धातोर्लुङि तिपि अडागमे मध्ये च्लौ 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' इत्यनेन च्लेरङि 'रधिजभोरचि' इति नुमि 'अनिदिताम्–' इति नलोपे 'अरधत्' इति।

**ननंष्ठ** ( ई० ३६ )—णश्धातोर्लिटि थलि 'णो नः' इति धातोर्णस्य नत्वे 'रधादिभ्यश्च' इति वेटि 'लिटि धातोः–' इति द्वित्वे अभ्यासत्वे 'थलि च सेटि' इत्येत्वे अभ्यासलोपे च कृते 'नेशिथ' इति। इडभावपक्षे 'ननश्थ' इति स्थिते 'मस्जिनशोर्झलि' इति नुमि 'व्रश्चभ्रस्ज' इति षत्वे ष्टुत्वे नस्यानुस्वारे 'ननंष्ठ' इति। 'नशेर्वा' इति कुत्वमिह न शक्यं, पदान्त एव तद्विधानात्।

**तृप प्रीणने** ( ई० ४६ )—अत्र प्रीणनं तृप्तिः तर्पणं च, आद्येऽकर्मकः, द्वितीये सकर्मकः, नाग्निस्तृप्यति काष्ठानाम्, पितॄनताप्सीत्, इत्युभयदर्शनात्।

अतर्पीत् ( ई० ३७,४१ )—तृप्धातोर्लुङि तिपि अडागमे मध्ये च्लौ 'स्पृशमृशकृषतृप' इति विभाषया च्लेः सिचि सस्य 'रधादिभ्यश्च' इति इटि 'अस्तिसिचोऽपृक्ते' इति तस्य ईटि 'इट ईटि' इति सलोपे सवर्णदीर्घे 'अतर्पीत्' इति। 'रधादिभ्यश्च' इति विकल्पपक्षे 'वदव्रज' इति वृद्धौ 'अताप्सीत्' इति 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' इत्यम्पक्षे यणि 'अत्राप्सीत्' इति। 'पुषादिद्युताद्य्लृदितः परस्मैपदेषु' इत्यङ्पक्षे 'अतृपत्' इति च सिद्धं भवति।

अशमत् ( ई० ५८ )—'शमु उपशमे' इति धातोर्लुङि तिपि अडागमे मध्ये च्लौ पुषादित्वात् च्लेरङि 'अशमत्' इति।

श्राम्यति ( ई० ४८ )—'श्रमु तपसि खेदे च' इति धातोर्लटि तिपि 'दिवादिभ्यः' इति श्यनि 'शमामष्टानां दीर्घः श्यनि' इति दीर्घे उक्तं रूपं सिद्धम्।

चक्षन्थ ( ई० ४२ )—'क्षमू सहने' इति धातोर्लिटि थलि द्वित्वादिकार्ये ऊदित्वाद्वेटि 'चक्षमिथ' इति पक्षे अनुस्वारे परसवर्णे 'चक्षन्थ' इति।

आस्थत् ( ई० ३७, ४१, ४७, ५४, ५६, ५७ )—'असु क्षेपणे' इति धातोर्लुङि तिपि अडागमे 'आटश्च' इति वृद्धौ मध्ये च्लौ 'अस्यतिवक्तिख्यातिभ्योऽङ्' इति च्लेरङि 'अस्यतेस्थुक्' इति थुकि अनुबन्धलोपे 'आस्थत्' इति। न चात्र पुषादित्वादेव अङ्सिद्धौ 'अस्यतिवक्ति'त्यादिवचने अस्यति ग्रहणं व्यर्थमेवेति वाच्यम्, 'पर्यास्तत' इत्यत्र आत्मनेपदे अङर्थं तद्ग्रहणस्यावश्यकत्वात्। पुषादीत्यादिना तु न निर्वाहः, तत्र परस्मैपदेष्वित्युक्तेः।

यसति ( ई० ५७ )—'यसु प्रयत्ने' इति धातोर्लटि तिपि 'यसोऽनुपसर्गात्' इति विकल्पपक्षे शपि 'यसति' इति सिद्धम्। श्यन्पक्षे तु 'यस्यति' इति।

मेद्यति ( ई० ५० )—'ञिमिदा स्नेहने' इति धातोर्लटि तिपि श्यनि 'मिदेर्गुणः' इति गुणे 'मेद्यति' इति।

द्युतादिपाठात् ( ई० ३८ )—अयम्भावः, भ्वादौ द्युतादिगणे पाठेनैव 'अमिदत्' 'अमेदिष्ट' इति रूपद्वयसिद्धौ दिवादिगणे तत्पाठो 'अमेदीत्' इति रूपनिवारणार्थः। इत्थञ्च गणद्वयपाठेन यदि रूपद्वयसिद्धिरेव इष्टा तदा 'द्युतादिभ्यः पृथगात्मनेपदिषु भ्वादौ पाठेन 'अमेदिष्ट' इति, पुषादौ दिवादिगणे पाठेन च 'अमिदत्' इति रूपं च सिद्धं भवतीति द्युतादिगणे तत्पाठो निष्फल एवेति।

इति दिवादिप्रकरणम्।

# अथ स्वादिप्रकरणम्

**सुन्वन्ति** ( ई० ४२ )—'षुञ् अभिषवे' इति धातोर्लटि झौ 'धात्वादेः षः सः' इति सत्वे झेरन्तादेशे 'स्वादिभ्यः श्नुः' इति श्नुप्रत्यये अनुबन्धलोपे 'अचि श्नुधातु—' इति उवङि प्राप्ते तमप्रबाध्य 'हुश्नुवोः सार्वधातुके' इति यणि 'सुन्वन्ति' इति ।

**असावीत्** ( ई० ३३ )—षुञ्धातोर्लुङि 'धात्वादेः षः सः' इति सत्वे लुङ-स्तिपि 'लुङ्लङ्—' इत्यडागमे मध्ये च्लौ च्लेः सिचि 'स्तुसुधूञ्भ्यः परस्मैपदेषु' इति सस्य इटि 'अस्तिसिचोऽपृक्ते' इत्यनेन तस्य च ईटि 'इट ईटि' इति सलोपे सवर्णदीर्घे 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धौ आवादेशे 'असावीत्' इति । आत्मनेपदे तु गुणे षत्वे ष्टुत्वे 'असोष्ट' इति ।

**सिन्वन्ति** ( ई० ४३ )—'षिञ् बन्धने' इति धातोर्लटि 'धात्वादेः षः सः' इति सत्वे लटः स्थाने झौ तस्य अन्तादेशे 'स्वादिभ्यः श्नुः' इति श्नुप्रत्यये श्नोः शित्वात् सार्वधातुकत्वेन 'सार्वधातुकमपित्' इति ङित्वात् धातोर्गुणाभावे झिप्रत्ययाश्रितङित्वेन च श्नोरुकारस्य गुणाभावे 'हुश्नुवोः सार्वधातुके' इति यणि उक्तं रूपं सिद्धम् ।

**मासीष्ट** ( ई० ४१ )—'डुमिञ् प्रक्षेपणे' इति धातोराशीर्लिङि आत्मनेपदे तप्रत्यये 'लिङः सीयुट्' इति सीयुटि अनुबन्धलोपे 'सुट् तिथोः' इति सुटि 'लोपो व्योर्वलि' इति यलोपे 'मिनातिमिनोतिदीङां ल्यपि च' इत्यनेन आत्वे षत्वे ष्टुत्वे 'मासीष्ट' इति सिद्धम् ।

**अमासीत्** ( ई० ५८ )—डुमीञ् प्रक्षेपणे' इति धातोर्लुङि तिपि अडागमे मध्ये च्लौ श्चेः सिचि 'मिनातिमिनोतिदिङां ल्यपि च' इत्यात्वे 'यमरमनमातां सक् च' इति सकि इटि च कृते 'अस्तिसिचोऽपृक्ते' इति तस्य च ईटि 'इट ईटि' इति सिचः सस्य लोपे सवर्णदीर्घे उक्तं रूपं सिद्धम् ।

**अमास्त** ( ई० ४० )—मिञ्धातोर्लुङि आत्मनेपदे तप्रत्यये अडागमे मध्ये च्लौ च्लेः सिचि 'मीनातिमिनोति—' इत्यात्वे 'अमास्त' इति ।

**प्रणिचिकाय** ( ई० ४९, ५६ )—'प्र-नि' इत्युपसर्गात् 'चिञ् चयने' इति धातोर्लिटि तिपि णलि द्वित्वे अभ्यासत्वे 'विभाषा चेः' इति अभ्यासात्परस्य चिञः

चस्य कुत्वे 'अचोञ्णिति' इति वृद्धौ आयादेशे णत्वे 'प्रणिचिकाय' इति । कुत्वाभावे 'चिचाय' इति ।

स्तृषीष्ट ( ई० ५३ )—'स्तृञ् आच्छादने' इति धातोराशीर्लिङि लिङस्तादेशे सीयुटि 'सुट् तिथोः' इति सुटि 'ऋतश्च संयोगादेः' इति विभाषया इटि 'गुणोर्तिसंयोगाद्योः' इति गुणे उभयोः सकारयोः पर्यायेण षत्वे ष्टुत्वे 'स्तरिषीष्ट' इति । इडभावपक्षे 'उश्च' इति कित्वाद् गुणाभावे 'स्तृषीष्ट' इति ।

स्तरिष्ट—स्तृधातोर्लुङि लुङस्तादेशे अडागमे मध्ये च्लौ च्लेः सिचि 'ऋतश्च संयोगादेः' इति विभाषया इटि गुणे रपरत्वे सस्य षत्वे ष्टुत्वे 'स्तरिष्ट' इति । इडभावपक्षे 'ह्रस्वादङ्गात्' इति सिचः सस्य लोपे 'उश्चे'ति कित्वाद् गुणनिषेधे 'अस्तृत' इति ।

विवरिथ ( ई० ३६ )—'वृञ् वरणे' इति धातोर्लिटि थलि द्वित्वादिकार्ये कृते 'आर्धधातुकस्य–' इति इटि गुणे 'ववरिथ' इति । अत्र क्रादिनियमादिट्निषेधः कुतो नेति न शङ्क्य, 'बभूथाततन्थजगृम्भववर्थेति निगमे' इति वेदे एवेत्युक्तत्वात् ।

वरिषीष्ट ( ई० ३७ )—वृञ्धातोराशीर्लिङि तङि सीयुटि, सुटि 'लिङ्सिचावात्मनेपदेषु' इति विभाषया इटि 'वृतो वा' इति दीर्घे प्राप्ते 'न लिङि' इति निषेधे गुणे रपरत्वे उभयोः सकारयोः पर्यायेण षत्वे ष्टुत्वे 'वरिषीष्ट' इति । इडभावपक्षे 'उश्चे'ति कित्वाद् गुणाभावे 'वृषीष्ट' इति ।

दुधविथ ( ई० ३६ )—'धूञ् कम्पने' इति धातोर्लिटि सिपि थलि 'लिटि धातोः' इति द्वित्वे अभ्यासत्वे ह्रस्वे 'अभ्यासे चर्च' इति जश्त्वे 'स्वरतिसूति–' इति विभाषया इटि 'सार्वधातुकार्धधातुकयोः' इति गुणे अवादेशे 'दुधविथ' इति । इडभावपक्षे गुणे 'दुधोथ' इति ।

दुधविथ ( ई० ४६ )—ञकारेत्संज्ञकधूधातोर्लिटि सिपि थलि 'लिटि धातोः' इति द्वित्वे अभ्यासत्वे ह्रस्वे 'अभ्यासे चर्च' इति जश्त्वे 'स्वरतिसूति–' इति विभाषया इटि सार्वधातुकयोः' इति गुणे अवादेशे 'दुधविथ' इति । इडभावपक्षे गुणे 'दुधोथ' इति ।

दुधविव ( ई० ४६ )—ञकारेत्संज्ञकधूधातोर्लिटो वसि वसो वादेशे द्वित्वे अभ्यासत्वे ह्रस्वे 'अभ्यासे चर्च' इति अभ्यासधकारस्य जश्त्वे 'असंयोगाल्लिट् कित्' इति

इति पुरस्तादपवादा अनन्तरान् विधीन् बाधन्ते नोत्तरान्' इति न्यायेन 'स्वरति-सूति' इति परत्वात् प्राप्तस्य इटो निषेधेपि क्रादिनियमात् नित्ये इटि 'अचिश्नु-धातु–' इति उवङि 'दुधुविव' इति ।

**अधावीत्** ( ई० ५८ )—अकारेत्संज्ञकधूधातोर्लुङि तिपि अडागमे 'इतश्च' इति तिप इकारलोपे मध्ये च्लौ च्लेः सिँचि 'स्तुसुधूञ्भ्यः–' इति परत्वान्नित्ये इटि 'अस्तिसिचोऽपृक्ते' इति तस्य ईटि 'इट ईटि' इति सलोपे सवर्णदीर्घे 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धौ अवादेशे 'अधावीत्' इति ।

**प्रहिणोति** ( ई० ४८, ५५ )—प्रेत्युपसर्गात् 'हि गतौ' इति धातोर्लटि तिपि 'स्वादिभ्यः श्नुः' इति श्नुप्रत्यये गुणे भिन्नपदत्वाण्णत्वेऽप्राप्ते 'हिनुमीना' इति णत्वे 'प्रहिणोति' इति ।

**जिघाय** ( ई० ३८, ४८, ५४ )—'हि गतौ' इति धातोर्लिटि तिपि णलि द्वित्वे अभ्यासत्वे 'अभ्यासे चर्च' इति जश्त्वे 'हेरचङि' इति अभ्यासात् परस्य हस्य घत्वे 'अचोञ्णिति' इति वृद्धौ आयादेशे 'जिघाय' इति ।

**आप्नुवन्ति** ( ई० ५० )—'आप्लृ व्याप्तौ' इति धातोर्लटि झौ अन्तादेशे 'स्वादिभ्यः श्नुः' इति श्नौ उवङि 'आप्नुवन्ति' इति । संयोगपूर्वकत्वात् 'हुश्नुवो'-रिति न यण् ।

**अपरेधतु** ( ई० ४४, ५७ )—अपोपसर्गक 'राध संसिद्धौ' इति धातोर्लिटि तसि तसोऽतुसि द्वित्वादिकार्ये कृते 'राधो हिंसायाम्' इति एत्वाभ्यासलोपयोः सस्य रुत्वे विसर्गे उक्तं रूपं सिद्धम् ।

**आनशे** ( ई० ४१ )—'अशू व्याप्तौ' इति धातोर्लिटि तङि 'लिटस्तझयोः' इत्येशि द्वित्वे अभ्यासत्वे हलादिशेषे 'अत आदेः' इत्यभ्यासस्य दीर्घे 'अश्नोतेश्च' इति नुटि 'आनशे' इति ।

**आष्ट** ( ई० ३८ )—'अशू व्याप्तौ' इति धातोर्लुङि लङः तादेशे आटि 'आटश्च' इति वृद्धौ मध्ये च्लौ च्लेः सिचि ऊदित्वादिटि षत्वे ष्टुत्वे 'आशिष्ट' इति । इडभावपक्षे 'झलो झलि' इति सिचो लोपे 'आष्ट' इति ।

**देभतुः** ( ई० ४५, ४७, ४८, ५३, ५४, ५५ )—'दम्भु दम्भने' उपदेशे 'दम्भ' इति । तस्माल्लिटि तसि तसोऽतुसि द्वित्वेऽभ्यासत्वे 'श्रन्थिग्रन्थिदम्भिस्व-

ञ्जीनां लिटः कित्वं वा' इति कित्वपक्षे 'अनिदिताम्–' इति नलोपे तस्य आभीयत्वादसिद्धत्वेन 'अत एकहल्मध्ये–' इत्यस्याप्राप्तया 'दम्भेश्च' एत्वाभ्यासलोपौ वक्तव्यौ' इत्यभ्यासलोपयोः कृतयोः सस्य रुत्वे विसर्गे 'देभतुः' इति। पक्षे 'ददम्भतुः' इति।

**देभिथ** ( ई० ४४, ४६ )—'दम्भ' धातुः उपदेशो 'दन्भ' इति। तस्माल्लिटि सिपि थलि 'दम्भ् थ' इति स्थिते द्वित्वेऽभ्यासत्वे 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्वं वा' इति वार्तिकेन विभाषया कित्वे 'अनिदिताम्–' इति नलोपे नलोपस्यासिद्धत्वात् 'अत एकहल्मध्ये–' इत्यस्याप्राप्त्या 'दम्भेश्च एत्वाभ्यासलोपौ वक्तव्यौ' इत्येत्वे अभ्यासलोपे च कृते 'आर्धधातुकस्येड्वलादेः' इति इटि 'देभिथ' इति। अत्र न्यासकारादयस्तु 'श्रन्थिग्रन्थि–' इत्यादिना लिटः कित्वमपिद्विषयकमेवेति मन्यन्ते, तन्मते कित्वाभावात् नलोपाभावे द्वित्वादिकार्ये 'ददम्भिथ' इति।

इति स्वादिप्रकरणम्।

# अथ तुदादिप्रकरणम्

**बभर्ज** ( ई० ४१ )—'भ्रस्ज् पाके' इति धातोर्लिटि तिपि णलि 'भ्रस्जोरोपधयोरमन्यतरस्याम्' इति रेफाकारादुपरि सकारात् प्राक् रेफागमे अर्थात् भकारादुपरि रेफस्य जकारात् प्राक् सकारस्य च निवृत्तौ 'भर्ज् अ' इति स्थिते द्वित्वेऽभ्यासत्वे 'अभ्यासे चर्च' इति जश्त्वे' 'बभर्ज' इति।

ननु 'भ्रस्जोरोपधयोः—' इति सूत्रेण रमागमे सति भकारादुपरि रेफस्य जकारात् प्राक् सकारस्य निवृत्तिः कथमिति चेत्सत्यम्, स्थानषष्ठीनिर्देशेन रोपधयोः निवृत्तेः। रमोऽभावपक्षे तु सस्य श्चुत्वेन शत्वे 'झलां जश् झशि' इति शस्य जश्त्वेन जत्वे 'बभ्रज्ज' इति।

**बभर्जिथ** ( ई० ३८ )—भ्रस्ज्धातोर्लिटि सिपि थलि द्वित्वादिकार्ये 'भ्रस्जोरोपधयोरमन्यतरस्याम्' इति रमागमे 'एकाच उपदेशेऽनुदात्तात्' इति इड्निषेधे भारद्वाजमते विकल्पेन इटि 'बभर्जिथ' इति। इडभावपक्षे द्वित्वादिकार्ये कृते 'भ्रस्जोरोपधयोः—' इति रमि स्थानषष्ठीनिर्देशात् रोपधयोश्च निवृत्तौ 'व्रश्चभ्रस्ज—' इति षत्वे ष्टुत्वे 'बभर्ष्ठ' इति। रमागमाभावपक्षे द्वित्वादिकार्ये कृते भारद्वाजमतेन

विभाषया इटि सस्य श्चुत्वेन शत्वे 'झलां जशोन्ते' इति तस्य जत्वे बभ्रज्जिथ' इति। रमभावे इडभावे च द्वित्वादिकार्ये कृते 'स्कोः संयोगाद्योरन्ते च' इति सलोपे 'व्रश्चभ्रस्ज—' इति षत्वे ष्टुत्वे 'बभ्रष्ठ' इति चतुर्थं रूपम्।

**भृज्ज्यात्** ( ई० ५३,५७ )—भ्रस्ज्धातोराशीर्लिङि तिपि अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे यासुटि उटि गते 'किदाशिषि' इति यासुटः कित्वात् क्ङिति 'भ्रस्जोरोपधयोः' इति रमागमं बाधित्वा पूर्वविप्रतिषेधेन पूर्वं कित्वात् 'ग्रहिज्या' इति सम्प्रसारणे पूर्वरूपे 'स्कोः संयोगाद्योरन्ते च' इति यासः सकारस्य लोपे 'भृस्ज् या त्' इति स्थिते धातोस्सकारस्य श्चुत्वेन शकारे 'झलांजश् झशि' इति शस्य जत्वे 'भृज्ज्यात्' इति सिद्धम्।

**अभार्क्षीत्** ( ई० ४५ )—भ्रस्ज्धातोर्लुङि तिपि अडागमे मध्ये च्लौ सिचि 'भ्रस्जोरोपधयोः—' इति रमागमे 'व्रश्चभ्रस्ज–' इति षत्वे 'षढोः कः सि' इति षस्य कत्वे सस्य षत्वे तिप इकारलोपे इटि 'वदव्रज–' इति वृद्धौ 'अभार्क्षीत्' इति। रमोऽभावे 'स्कोः–' इति सलोपे 'व्रश्च–' इति जस्य षत्वे षस्य कत्वे सिचः सस्य षत्वे 'वद-व्रज–' इति वृद्धौ 'अभ्राक्षीत्' इति। आत्मनेपदे तु 'अभर्ष्ट' अभ्रष्ट' इति।

**क्रष्टा**—कृष्धातोर्लुटि तिपि 'स्यतासी लृलुटोः, इति तासिप्रत्यये इकारलोपे 'लुटः प्रथमस्य डारौरसः' इति तिपो डादेशे डित्वसामर्थ्यादभस्यापि टेर्लोपे 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' इति विभाषया 'अ'मागमे यणि ष्टुत्वे 'क्रष्टा' इति। अमोऽभावे 'पुगन्तलघूपधस्य च' इति गुणे ष्टुत्वे 'कर्ष्टा' इति च भवति।

**अक्राक्षीत्** ( ई० ३८, ४८, ५५ )—कृष्धातोर्लुङि परस्मैपदे तिपि अनु-बन्धलोपे 'लुङ्लुङ्' इत्यडागमे च्लौ 'स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः' इति वार्तिकेन च्लेः सिचि इचि गते 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' इति वैकल्पिकेन अमि यणि अनुबन्धलोपे 'वदव्रजहलन्तस्याचः' इति वृद्धौ 'षढोः कः सि' इति धातोः षस्य कत्वे 'आदेशप्रत्यययोः' इति सिचः सस्य षत्वे 'अस्तिसिचोऽपृक्ते' इति अपृक्तसंज्ञकस्य तस्य ईटि अनुबन्धलोपे 'अक्राक्षीत्' इति। अमोऽभावे वृद्धौ रपरत्वे 'अकार्क्षीत्' इति। सिजभावपक्षे 'शल इगुपधादनिटः क्सः' इति च्लेः क्सादेशे अटि षस्य कत्वे षत्वे कित्वाद्गुणाऽभावे 'अकृक्षत्' इति रूपत्रयं सिद्धं भवति।

**अकृष्ट** ( ई० ४८ )—कृष्धातोर्लुङि अडागमे लुङस्तादेशे च्लौ 'स्पृशमृश-कृष' इति विभाषया च्लेः सिचि इचि गते 'लिङ्सिचावात्मनेपदेषु' इति कित्वादम-

गुणयोरभावे 'अकृष् स् त' इति स्थिते 'झलो झलि' इति सलोपे ष्टुत्वे 'अकृष्ट' इति। सिजभावे अटि 'शल इगुपधादनिटः क्सः' इति च्लेः क्सादेशे अनुबन्धलोपे 'अ कृष् स त' इति स्थिते कित्वादमृगुणयोरभावे 'षढोः कः सि' इति धातोः षकारस्य कत्वे सस्य षत्वे 'अकृक्षत' इति।

**मुञ्चति**—मुच्धातोर्लटि तिपि 'तुदादिभ्यः शः' इति शप्रत्यये 'शेमुचादीनाम्' इति नुमि अनुस्वारे परसवर्णे च कृते 'मुञ्चति' इति।

**अमुचत्**—मुच् धातोर्लुङि प्रथमपुरुषैकवचने परस्मैपदे लुङस्तिपि अनुबन्धलोपे 'इतश्च' इति इकारलोपे 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे च्लौ 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' इति च्लेरङि ङित्वाद् गुणाऽभावे 'अमुचत्' इति।

**अलिपत्**—लिप्धातोर्लुङि प्रथमपुरुषैकवचने परस्मैपदे लुङस्तिपि अनुबन्धलोपे 'इतश्च' इति इकारलोपे 'लुङ् लङ्' इत्यडागमे अनुबन्धलोपे च्लौ 'लिपिसिचिह्वश्च' इति च्लेरङि अनुबन्धलोपे ङित्वात् गुणाभावे 'अलिपत्' इति।

**वव्रश्च** ( ई० ३९, ४३, ४५ )—व्रश्च्धातोर्लिटि तिपि णलि द्वित्वे अभ्यासत्वे 'लिट्यभ्यासस्योभयेषाम्' इत्यभ्यासरेफस्य सम्प्रसारणे 'उरत्' इति अत्वे हलादिशेषे 'वव्रश्च' इति।

नच 'व्र र् व्रश्च् अ' इति स्थिते अभ्यासवकारस्यापि पुनः सम्प्रसारणं कुतो नेति वाच्यम्, उरदत्वस्य 'अचः परस्मिन्—' इति स्थानिवत्वेन 'न सम्प्रसारणे' इति निषेधात्।

**वव्रश्चिथ** ( ई० ४६,५४ )—ऊकारोकारेत्संज्ञक-छेदनार्थक-'व्रश्च्-धातोर्लिटि तत्स्थाने सिपि तस्य 'परस्मैपदाना'मित्यादिना थलादेशेऽनुबन्धलोपे'लिटि धातोरनभ्यासस्य' इत्यनेन द्वित्वेभ्यासस्संज्ञायाम् 'असंयोगाल्लिट् कित्' इत्यनेन लिटः कित्वात्तस्मिन्परे 'लिट्यभ्यासस्योभयेषाम्' इत्यनेनाभ्यासस्य रेफस्य सम्प्रसारणे पूर्वरूपे 'उरत्' इत्यत्वे रपरत्वे हलादिशेषे ऊदित्वात्, 'स्वरतिसूतिसूयतिधूञूदितो वा' इत्यनेन वैकल्पिकेडागमे सति 'वव्रश्चिथ' इति सिद्धम्। इडभावपक्षे 'व्रश्चे'ति षत्वे ततः ष्टुत्वे सति 'वव्रष्ठ' इति रूपम्। ऋकारस्य पूर्वं सम्प्रसारणे कृते वस्य पुनः सम्प्रसारणन्तु न भवति 'उरदि'त्वस्य' 'अचः परस्मिन्नि'ति स्थानिवद्भावेन 'न सम्प्रसारणे सम्प्रसारणम्' इति निषेधात्। नचोरदित्यस्य परनिमित्त-

कत्वाऽभावात्कथं स्थानिवत्त्वमिति वाच्यम् , 'आपादपरिसमाप्तेरङ्गाधिकार' इत्यभ्युपगम्य 'अङ्गाक्षिप्तप्रत्ययनिमित्तकत्वाभ्युपगमात् । नच पूर्वं वस्यैव सम्प्रसारणं कुतो न विधीयत इति वाच्यम् , 'न सम्प्रसारणे' इति निषेधादेव पूर्वं ऋकारस्यैव सम्प्रसारणत्वाऽवगमादिति दिक् ।

**व्यचिता** ( ई० ४१ )—व्याजीकरणार्थक-'व्यच्'-धातोर्लुटि तत्स्थाने तिपि अनुबन्धलोप 'स्यतासीलृलुटोः' इत्यनेन तासिप्रत्यये 'लुटः प्रथमस्य डारौरसः' इत्यनेन तिपो डादेशे डित्वाट्टिलोपे 'आर्धधातुकस्येड्वलादेः' इत्यनेन इडागमेऽनुबन्धलोपे सति 'व्यचिता' इति सिद्धम् । नच व्यचेः कुटादित्वमनसीति व्यचेः कुटादित्वात् 'गाङ्कुटादिभ्यः' इत्यनेन ङित्वात् ग्रहिज्येति सम्प्रसारणमत्र कथन्न भवतीति वाच्यम् , अनसीति पर्युदासेन कृन्मात्रविषय एव व्यचेः कुटादित्वाऽवगमात् ।

**व्यचेः कुटादित्वमिति** ( ई० ३४ )—ननु व्यचेः 'कुटादित्वमनसि' इति व्यच्धातोः कुटादित्वात् 'गाङ्कुटादिभ्योऽञ्णिन्ङित्' इत्यनेन तासादेर्ङिद्वद्भावे तस्मिन् परे व्यचो यकारस्य 'ग्रहिज्ये'त्यनेन सम्प्रसारणे लुटि 'विचिते'त्यादि कथन्नेति चेन्न, अनसीति पर्युदासेन असभिन्नाऽससदृशस्य कृत्वेनैव तत्र ग्रहणात् । तथा च असभिन्नकृत्प्रत्यये परे एव तत्प्रवृत्तिरिति भावः ।

**अव्याचीत्** ( ई० ५६ )—'व्यच् व्याजीकरणे' अस्माद्धातोर्लुङि तिपि अटि अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे च्लौ च्लेः सिचि इचि गते 'आर्धधातुकस्येड्वलादेः' इति सस्य इटि 'अस्तिसिचोऽपृक्ते' इति अपृक्तसंज्ञकस्य तस्य ईटि 'अतो हलादेर्लघोः' इति वृद्धौ 'इट ईटि' इति सलोपे सवर्णदीर्घे 'अव्याचीत्' इति । वृद्धयभावे 'अव्यचीत्' इति च सिद्धं भवति ।

**आनर्च्छ** ( ई० ३७, ४९, ५३ )—ऋच्छधातोर्लिटस्तिपि णलि अनुबन्धलोपे लिटि धातो'रिति द्वित्वे 'ऋच्छ् ऋच्छ् अ' इति स्थिते अभ्याससंज्ञायाम् 'उरत्' इत्यभ्यासस्य ऋवर्णस्य अत्वे रपरत्वे 'हलादिः शेषः' इत्यभ्यासरेफस्य छस्य च लोपे 'अ ऋच्छ् अ' इति स्थिते 'तस्मान्नुड्द्विहलः' इति द्विहल्ग्रहणस्याऽनेकहलुपलक्षणत्वान्नुटि अनुबन्धलोपे 'आ न् ऋच्छ् अ' इति दशायाम् 'ऋच्छत्यृताम्' इति गुणे रपरे 'आनर्च्छ' इति सिद्धम् ।

**लोभिता**—लुभ्धातोर्लुटि तिपि तासि तस्याऽर्धधातुकत्वे 'तीषसहलुभरुषरिषः' इति विकल्पेन इटि अनुबन्धलोपे 'पुगन्तलघूपधस्य च' इति गुणे तिपो

डादेशे डित्वसामर्थ्यादभस्यापि टेर्लोपे 'लोभिता' इति । इडभावे 'झषस्तथोर्धोऽधः' इति तस्य धत्वे 'झलां जश् झशि' इति भस्य बत्वे गुणे 'लोब्धा' इति सिद्धम् ।

**तृम्फति**—'तृम्फ्' धातुरुपदेशे 'तृन्फ्' इति । तस्माल्लटि तिपि 'तुदादिभ्यः शः' इति शपं प्रबाध्य शप्रत्यये शस्याऽपित्वेन 'सार्वधातुकमपित्' इति ङित्वे 'अनिदिताम्' इति नलोपे 'शे तृम्फादीनां नुम्वाच्यः' इति वार्तिकेन नुमि अनुबन्धलोपे अनुस्वारे परसवर्णे 'तृम्फति' इति ।

**आनर्फ** ( ई० ३८ )—हिंसार्थक-'ऋफ्'-धातोर्लिटि तत्स्थाने तिपि तस्य णलादेशे अनुबन्धलोपे द्वित्वेऽभ्याससंज्ञायाम् 'उरत्' इत्यत्वे रपरत्वे हलादिशेषे च कृते 'अत आदेः' इत्यनेनाभ्यासदीर्घे 'तस्मान्नुड्द्विहलः' इत्यनेन नुडागमे अनुबन्धलोपे गुणे 'आनर्फ' इति सिद्धम् ।

**निःस्फुरति** ( ई० ५८ )—निर् इत्युपसर्गात् स्फुर्धातोर्लटि तिपि 'तुदादिभ्यः शः' इति शप्रत्यये 'स्फुरतिस्फुलत्योर्निर्निविभ्यः' इति सूत्रेण विभाषया षत्वे रेफस्य विसर्गे 'निःष्फुरति' इति । षत्वाभावे 'निःस्फुरति' इति ।

**ङित्वं स्वरार्थम्** ( ई० ३८ )—तुदादौ 'मृङ् प्राणत्यागे' इति पठितम्, तत्र 'म्रियतेर्लुङ्लिङोश्च' इत्यात्मनेपदं विहितं, तत्रेयं जिज्ञासा समुदेति यत् किमर्थमनेन आत्मनेपदं विधीयते, ङित्वादेव 'अनुदात्तङितः—' इति आत्मनेपदं स्यादिति चेन्न, 'लुङ् लिङोः शितश्च प्रकृतभूतान्मृङस्तङ् नान्यत्रे'ति नियमार्थं सूत्रस्यावश्यकत्वात् । ननु चेत् पित्वस्य तर्हि किं फलमिति चेन्न, 'तास्यनुदात्तेन्ङिद्दुपदेशाल्लसार्वधातुकमनुदात्तम्' इति स्वरार्थं तस्यावश्यकत्वात् ।

**रियति** ( ई० ४१ )—रि गतौ' इति धातोर्लटि तिपि 'तुदादिभ्यः शः' इति शप्रत्यये कृते 'अचि श्नुधातुः—' इति इयङि 'रियति' इति ।

**चकरतुः** ( ई० ५० )—कृधातोर्लिटस्तसि तसोऽतुसि द्वित्वे अभ्यासत्वे ह्रस्वे 'उरत्' इत्यत्वे रपरत्वे हलादिशेषे 'कुहोश्चुः' इति चुत्वे 'च कृ अतुस्' इति स्थिते 'ऋच्छत्यृताम्' इति गुणे रपरे सकारस्य रुत्वे विसर्गे 'चकरतुः' इति सिद्धम् ।

**उपास्किरत्** ( ई० ३८ )—'उप्' इत्युपसर्गात् कृधातोर्लङस्तिपि शप्रत्यये 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे तिप इकारलोपे 'ॠत इद्धातोः' इति इत्वे रपरत्वे 'उप अ किर् त्' इति दशायाम् 'अभ्यासव्यवायेऽपि 'सुट् कात्पूर्वः' इति

वक्तव्यम्' इति वार्तिकबलात् अड्व्यवधाने सत्यपि ककारात्पूर्वं सुटि अनुबन्धलोपे सवर्णदीर्घे 'उपास्किरत्' इति सिद्धम् ।

**प्रतिस्किरति** ( ई० ५७ )—'प्रति' उपसर्गात् कॄधातोर्लटि तिपि 'तुदादिभ्यः शः' इति शप्रत्यये इत्वे रपरत्वे 'हिंसायां प्रतेश्च' इति सुटि 'प्रतिस्किरति' इति ।

**गिलति** ( ई० ५६ )—गॄ धातोर्लटस्तिपि शप्रत्यये अनुबन्धलोपे 'ॠत इद्धातोः' इति इत्वे रपरत्वे 'अचि विभाषा' इति वैकल्पिके लत्वे 'गिलति' इति । लत्वाभावे 'गिरति' इति च सिद्धं भवति ।

**गलीता** ( ई० ४५ )—निगरणार्थक-'गॄ' धातोर्लुटि तत्स्थाने तिप्यनुबन्धलोपे मध्ये तासिप्रत्यये गुणे रपरत्वे 'लुटः प्रथमस्य डारौरसः' इत्यनेन तिपो डादेशे डित्वाट्टिलोपे 'आर्धधातुकस्येड्वलादेः' इत्यनेनेडागमे 'वृतो वा' इत्यनेन वैकल्पिके इटो दीर्घे 'अचि विभाषा' इत्यनेन वैकल्पिके लत्वे सति 'गलीता' इति सिद्धम् । दीर्घाभावे-गलिता, लत्वाभावे दीर्घे 'गरीता' दीर्घाभावे तु 'गरिते'ति रूपाणि ।

**अप्राक्षीत्** ( ई० ३७ )—प्रच्छ्धातोर्लुङि लुङस्तिपि 'लुङ्लङ्' इत्यडागमे अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे च्लौ च्लेः सिचि इचि गते 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' इति छस्य षत्वे 'षढोः कः सि' इति षस्य कत्वे 'अस्तिसिचोऽपृक्ते' इति अपृक्तसंज्ञकस्य तस्य ईटि 'वदव्रजे'ति वृद्धौ 'अप्राक्षीत्' इति सिद्धं भवति ।

**ममङ्क्थ** ( ई० ४४, ४७ )—मस्ज्धातोर्लिटि सिपि थलि अनुबन्धलोपे द्वित्वे अभ्यासत्वे 'हलादिः शेषः' इत्यभ्यासस्यान्त्यहलो लोपे 'म मस्ज् थ' इति भूते 'स्तो श्चुना श्चुः' इति सस्य श्चुत्वेन शत्वे 'झलां जश् झशि' इति शस्य जस्त्वेन जत्वे 'ऋतो भारद्वाजस्य' इति विभाषया इटि झलादित्वाऽभावान्नुमोऽभावे 'ममज्जिथ' इति । इडभावे तु 'मस्जिनशोर्झलि' इति सूत्रेण 'मस्जेरन्त्यात्पूर्वो नुम्वाच्यः' इति वार्तिकबलात् सकारात् परे नुमि अनुबन्धलोपे 'म मस् न् ज् थ' इति दशायां 'स्कोः संयोगाद्योरन्ते च' इति सलोपे 'म मन् ज् थ' इति भूते 'चोः कुः' इति जस्य कुत्वेन गत्वे 'खरि च' इति गस्य कत्वे नस्यानुस्वारे परसवर्णे 'ममङ्क्थ' इति च सिद्धं भवति ।

**ममङ्क्थ**—मस्ज्धातोर्लिटि सिपि 'परस्मैपदानाम्' इति सिपो थलि, 'लिटि धातोः' इति द्वित्वे पूर्वस्याभ्याससंज्ञायां 'हलादिः शेषः' इति लोपे इडभावपक्षे 'मस्जिनशोर्झलि' इति 'मस्जेरन्त्यात्पूर्वो नुम्वाच्यः' इति वचनेन नकारात्पूर्वं नुमि 'स्कोः संयोगाद्योरन्ते च' इति सकारलोपे 'चोः कुः' इति कुत्वे चर्त्वे नकारस्यानुस्वारे परसवर्णे च कृते सिद्धं रूपम् । इट्पक्षे तु 'ममज्जिथ' इति ।

**विच्छायति** ( ई० ३७ )—गत्यर्थक-विच्छ्धातोः 'गुपूधूपविच्छपणिपनिभ्य आयः' इत्यनेन आय्प्रत्यये 'सनाद्यन्ता धातवः' इत्यनेन धातुसंज्ञायां लटि तत्स्थाने तिपि अनुबन्धलोपे शपमपवाद्य 'तुदादिभ्यः शः' इत्यनेन शप्रत्यये शकारस्येत्संज्ञायां लोपे पररूपे 'विच्छायति' इति सिद्धम् ।

**विविच्छ** ( ई० ४४ )—गत्यर्थक 'विच्छ्' धातोर्लिटि 'गुपूधूपविच्छपणिपनिभ्य आयः' इत्यनेन वैकल्पिकेन आयप्रत्ययविधानादात्तदभावपक्षे तत्स्थाने तिपि परस्मैपदानामित्यादिना णलि 'लिटि धातोरनभ्यासस्य' इत्यनेन द्वित्वेऽभ्याससंज्ञायां हलादिशेषे 'विविच्छ' इति सिद्धम् ।

**अम्राक्षीत्** ( ई० ४०, ५३ )—'मृशधातोर्लुङि तिपि अटि अनुबन्धलोपे च्लौ 'स्पृशमृशकृषतृपदृपां च्लेः सिज्वा वाच्यः' इति वार्तिकेन विकल्पेन च्लेः सिचि इचि गते 'अनुदात्तस्य चर्दुपधस्यान्यतरस्याम्' इति विभाषया अमि मलोपे ऋकारस्य यणि 'इतश्च' इति तिप इकारलोपे 'व्रश्चभ्रस्जसृजमृजयजराजभ्राजच्छशां षः' इति शस्य षत्वे 'वदव्रजहलन्तस्याचः' इति वृद्धौ 'षढोः कः सि' इति षस्य कत्वे 'आदेशप्रत्यययोः' इति सिचः सस्य षत्वे 'अस्तिसिचोऽपृक्ते' इति तस्य ईटि अनुबन्धलोपे 'अम्राक्षीत' इति । अमोऽभावे उक्तसूत्रेण विभाषया च्लेः सिचि कृते 'अमृश् स् त्' इति स्थिते ईटि 'वदव्रजे'ति वृद्धौ रपरत्वे 'व्रश्चे'ति षत्वे कत्वे सिचः सस्य च षत्वे 'अमार्क्षीत्' इति । सिजभावे तु 'शल इगुपधादनिटः क्स' इति च्लेः क्सादेशे धातोः शस्य 'व्रश्चे'ति षत्वे कत्वे सिचः सस्य च षत्वे कित्वाद्वृद्ध्यभावे 'अमृक्षत्' इति च सिद्धं भवति ।

**विशरण** ( ई० ३७ )—विशरणगत्यवसादनार्थक-लृकारेत्संज्ञक 'सद्' धातुर्हि भ्वादौ ज्वलादिगणे, तथा तुदादौ च पठितः । पुनरत्र पाठस्येदमेव फलम्—शब्विकरणाच्छत्रन्तात् ङीपि 'आच्छीनद्योर्नुम्' इत्यनेन विकल्पेन नुमि सति 'सीदन्ती सीदती' इति रूपद्वयं भवति, अन्यथा 'शप्श्यनोर्नित्यम्' इत्यनेन नित्यनुमापत्ता-

चेत्कमेव रूपमापद्येत। न चैवं तर्हि ज्वलादौ पाठः किमर्थ इति वाच्यम्, 'साद' इत्यादौ 'ज्वलतिकसन्तेभ्यः' इत्यनेन णप्रत्ययार्थन्तदावश्यकत्वात्। अन्यच्चोभयत्र पाठे फलं यथा—शपि सति 'अनुदात्तौ सुप्पितौ' इत्यनेनानुदात्तः, शे तु 'प्रत्ययः' इति आद्युदात्तः स्यात्।

विन्दति ( ई० ५० )—'विद्लृ लाभे' इति धातोर्लटि तिपि 'तुदादिभ्यः शः' इति शप्रत्यये 'शे मुचादीनाम्' इति नुमि 'विन्दति' इति।

वेदिता—लृकारेत्संज्ञक-लाभार्थक-'विद्'-धातोर्लुटि तत्स्थाने तिप्यनुबन्धलोपे मध्ये 'स्यतासीलृलुटोः' इत्यनेन तासि प्रत्यये 'लुटः प्रथमस्य डारौरसः' इति तिपो डादेशे डित्वाट्टिलोपे लघूपधगुणे व्याघ्रभूतादिमतेन सेट्कत्वात् 'आर्धधातुकस्येड्वलादेः' इत्यनेन इडागमेऽनुबन्धलोपे 'वेदिता' इति भाष्यादिमतेऽनिट्कत्वादिडभावे चर्त्वे वेत्तेति रूपम्।

तुदादौ 'मृङ्प्राणत्यागे' ( ई० ४४ )—पठितम्। तत्र 'म्रियतेर्लुङ्लिङोश्च' इत्यनेनात्मने पदं विहितन्तत्र जिज्ञासा समुदेति यत्-किमर्थमात्मनेपदं विधीयते ङित्त्वात् 'अनुदात्तङित आत्मनेपदम्' इत्यनेनैव सिद्धेरिति चेत्? मैवम्, लुङ्लिङोः शितश्च प्रकृतभूतान्मृङस्तङ् नान्यत्रेति नियमाय सूत्रस्यावश्यकत्वात्। तर्हि ङित्त्वस्य किं फलमिति चेत्? 'तास्यनुदात्तेन्ङिददुपदेशाल्लसार्वधातुकमनुदात्तम्' इति स्वरार्थत्वात्।

इति तुदादिप्रकरणम्।

# अथ रुधादिप्रकरणम्

रुन्धः (ई० ४१, ४२, ४६, ४७, ५१, ५२, ५४)—रुध्धातोर्लटस्तसि शपमपवाद्य श्नमि अनुबन्धलोपे 'रु न ध् तस्' इति स्थिते श्नमो नकारान्तर्गताकारस्य लोपे णत्वस्यासिद्धत्वात् नस्यानुस्वारे परसवर्णे 'झषस्तथोर्धोऽधः' इति तसस्तकारस्य धत्वे 'झरो झरि सवर्णे' इति धातोर्धस्य लोपे सस्य रुत्वे विसर्गे 'रुन्धः' इति। परसवर्णे कृते णत्वन्तु न, परसवर्णस्यासिद्धत्वात्। अनुस्वारे कर्तव्ये अल्लोपस्यासिद्धत्वन्तु न 'न पदान्त-' इति निषेधात्।

**अरुणः** ( ई० ३७ )—रुध्धातोर्लङि सिपि अटि श्नमि णत्वे हल्ङ्यादिना सलोपे धस्य जश्त्वे 'दश्चे'ति दस्य रुत्वे रेफस्य विसर्गे 'अरुणः' इति। रुत्वाभावे चर्त्वे 'अरुणत्' इति।

**हिनस्ति** ( ई० ३८ )—'हिसि हिंसायाम्' इति धातोर्लटस्तिपि 'इदितो नुम्धातोः' इति धातोरिदित्वान्नुमि श्नमि अनुबन्धलोपे 'हि न न् स् ति' इति भूते 'श्नान्नलोपः' इति श्नमः परस्य नस्य लोपे 'हिनस्ति' इति जातम्।

**शिण्ड्ढि** ( ई० ४१, ४४, ४८, ५२, ५३, ५५ )—ऌकारेत्संज्ञक 'शिष्' धातोर्लोटः सिपि शपमपवाद्य श्नमि अनुबन्धलोपे 'सेर्ह्यपिच्च' इति सेर्ह्यादेशे 'शिनष् हि' इति जाते 'हुझल्भ्यो हेर्धिः' इति हेर्धित्वे 'श्नसोरल्लोपः' इत्यलोपे 'शिन्ष् धि' इति दशायां 'झलांजश् झशि' इति षस्य जस्त्वेन डकारे 'ष्टुना ष्टुः' इति धस्य ढत्वे 'शिन्ड् ढि' इति स्थिते 'झरो झरि सवर्णे' इति लोपे नस्यानुस्वारे परसवर्णे च कृते 'शिण्ढि' इति। डलोपाभावे तु 'शिण्ड्ढ' इति बोध्यम्।

**ओदनं भुङ्क्ते** ( ई० ४१, ४४ )—'भुजोनवने' भुजः, अनवने, इति पदच्छेदः। अवनं = रक्षणं, तद्भिन्ने अर्थे भुज्धातोरात्मनेपदं स्यादित्यर्थः। तेन भोजनेऽर्थे भुज्धातोरात्मनेपदे सति 'ओदनं भुङ्क्ते' इति भवति। रक्षणे तु 'महीं भुनक्ति ( रक्षति )' इति परस्मैपदं स्यात्।

**तृणेढि** ( ई० ४१,४९,५६ )—'तृह् हिंसायाम्' इति धातोर्लटस्तिपि शपमपवाद्य श्नमि अनुबन्धलोपे 'ऋवर्णान्नस्य णत्वं वाच्यम्' इति श्नमो नस्य णत्वे 'तृणह्ति' इति स्थिते 'तृणह इम्' इति इमि अनुबन्धलोपे 'तृण इ ह् ति' इति दशायाम् 'आद्गुणः' इति गुणे 'हो ढः' इति हस्य ढत्वे 'झषस्तथोर्धोऽधः' इति तिपस्तकारस्य धकारे धस्य ष्टुत्वेन ढकारे 'ढो ढे लोपः' इति पूर्वढकारस्य लोपे 'तृणेढि' इति जाताम्।

**अतृणेट्** ( ई० ३८,४५ )—तृह्धातोर्लङि लङस्तिपि 'लुङ्लङ्' इत्यटि अनुबन्धलोपे तिप इकारलोपे 'अ तृह् त्' इति दशायां शपमपवाद्य श्नमि 'तृणह इम्' इति इमागमे अनुबन्धलोपे 'ऋवर्णान्नस्य णत्वं वाच्याम्' इति नस्य णत्वे 'आद्गुणः' इति गुणे 'अतृणेह्त्' इति जाते 'हो ढः' इति हस्य ढत्वे हल्ङ्यादिना तलोपे 'झलां जशोऽन्ते' इति ढस्य डत्वे 'वाऽवसाने' इति डस्य चर्त्वे 'अतृणेट्' इति।

**औनत्** ( ई० ३८ )—'उन्दी क्लेदने' अस्माद्धातोर्लङि तिपि शपमपवाद्य श्नमि अनुबन्धलोपे 'उनन् द् ति' इति जाते 'आडजादीनाम्' इत्यादि अनुबन्धलोपे 'आटश्च' इति वृद्धौ 'श्नान्नलोपः' इति धातोर्नस्य लोपे 'औनद् ति' इति स्थिते 'इतश्च' इति इकारलोपे 'हल्ङ्याब्भ्यः' इति तलोपे 'वाऽवसाने' इति दस्य चर्त्वे 'औनत्' इति । चर्त्वाऽभावे 'औनद्' इति च भवति ।

**अनजानि**—अञ्ज्धातोर्लोटस्थाने मिपि श्नमि अनुबन्धलोपे 'श्नान्नलोपः' इति धातोरुपदेशनकारस्य लोपे 'मेर्निः' इति मेर्न्यादेशे 'आडुत्तमस्य पिच्च' इत्यादि अनुबन्धलोपे 'अनजानि' इति सिद्धम् ।

**आनक्** ( ई० ३७ )—अञ्ज्धातोर्लङरितिपि श्नमि 'इतश्च' इति तिप इकारलोपे 'श्नान्नलोपः' इति नलोपे 'आडजादीनाम्' इत्यादि 'आटश्च' इति वृद्धौ 'हल्ङ्याब्भ्यः' इति तलोपे 'चोः कुः' इति जस्य कुत्वेन गकारे 'वाऽवसाने' इति चर्त्वे 'आनक्' इति । चर्त्वाभावे 'आनग्' इति च भवति ।

**आञ्जीत्** ( ई० ४५, ५७ )—अञ्ज्धातोर्लुङरितिपि अनुबन्धलोपे 'इतश्च' इति तिप इकारलोपे 'आडजादीनाम्' इत्यादि वृद्धौ च्लौ च्लेः सिचि इचि गते 'अञ्जेः सिचि' इति सिचो नित्यमिटि 'अस्तिसिचोऽपृक्ते' इति तस्य ईटि 'इट ईटि' इति सलोपे 'सवर्णदीर्घे' 'आञ्जीत्' इति सिद्धम् ।

**उद्विजिता** ( ई० ३८ )—उत्पूर्वात् 'ओविजी भयचलनयोः' इत्यस्माद्धातोर्लुटि लुटस्तादेशे तासिप्रत्यये इडागमे अनुबन्धलोपे 'लुटः प्रथमस्य डारौरसः' इति डादेशे डित्वसामर्थ्यादभस्यापि टेर्लोपे 'विज इट्' इति ङित्वाद् गुणाऽभावे 'उद्विजिता' इति सिद्धम् ।

**अरिक्त** ( ई० ४० )—'रिचिर् विरेचने' इति धातोर्लुङि आत्मनेपदपक्षे तप्रत्यये अडागमे मध्ये च्लौ च्लेः सिचि 'झलो झलि' इति सलोपे 'चोः कुः' इति कुत्वे 'अरिक्त' इति । परस्मैपदे तु इरित्वाद्च्लेरङि 'अरिचत्' इति । अङभावे ईटि 'वदव्रज' इति वृद्धौ कुत्वे षत्वे 'अरैक्षीत्' इति ।

**इन्धे** ( ई० ३६ )—ञिकारेत्संज्ञक-दीप्त्यर्थक-इन्ध्-धातोर्लटि तत्स्थाने आत्मनेपदे तप्रत्यये, सार्वधातुकसंज्ञायां शपि प्राप्ते तम्प्रबाध्य 'रुधादिभ्यः श्नम्' इति श्नम्प्रत्ययो मित्वादन्त्यादचः परे जाते 'टित आत्मनेपदानां टेरे' इत्यनेन टेरेत्वे

'इनन्ध' इत्यवस्थायां 'श्नान्नलोपः' इति नलोपे 'श्नसोरल्लोपः' इत्यनेनाल्लोपे 'झषस्तथोर्धोऽधः' इत्यनेन तकारस्य धकारे 'झरो झरि सवर्णे' इत्यनेन वैकल्पिक-धकारलोपे 'इन्धे' इति सिद्धम्। लोपाभावे तु धस्य जश्त्वे 'इन्द्धे' इति च सिद्धं रूपं भवति। ननु प्रकृते 'अनिदितां हल उपधायाः क्ङिति' इत्यनेनैव नलोपे सतीष्टं रूपं सेत्स्यदेव तदा किमर्थं 'श्नान्नलोपः' इति सूत्रमिति चेत्। न, अनक्तीत्या-द्यर्थमावश्यकत्वेन न्याय्यत्वादिहैव प्रतिपादनेन दोषाभावात्।

**अभुनक्** (ई० ५०)—'भुज पालनाभ्यवहारयोः' इति धातोर्लङि तिपि अडागमे सार्वधातुकसंज्ञायां 'रुधादिभ्यः श्नम्' इति श्नमि 'हल्ङ्यादिना तलोपे कुत्वे 'अभुनक्' इति।

इति रुधादिप्रकरणम्।

# अथ तनादिप्रकरणम्

**अतत** (ई० ३७)—'तनु विस्तारे' अस्माद्धातोर्लुङि लुङस्थाने आत्मने-पदे तादेशे अडागमे अनुबन्धलोपे च्लौ च्लेः सिचि 'तनादिभ्यस्तथासोः' इति विभाषया सिचो लुकि 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' इत्यनुनासिकनकारस्य लोपे 'अतत' इति। सिज्लोपाभावे सिचः सकारस्य इटि षत्वे ष्टुत्वे 'अतनिष्ट' इति च रूपं भवति।

**असात** (ई० ३४)—उकारेत्संज्ञक 'षणु दाने' इत्यस्माद्धातोर्लुङि 'धात्वादेः षः सः' इति सत्वे 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति परिभाषया षस्य सत्वे सति णत्वस्यापि निवृत्तौ 'सन् लुङ्' इति जाते आत्मनेपदे लुङस्तादेशे अटि अनुबन्धलोपे च्लौ च्लेः सिचि 'तनादिभ्यस्तथासोः' इति विभाषया सिचो लोपे 'अ सन् त' इति जाते 'जनसनखनां सञ्झलोः—' इति 'अलोन्त्यस्येति सहकारेण नस्यात्वे सवर्णदीर्घे 'असात' इति जातम्।

**अक्षत** (ई० ३६)—उकारेत्संज्ञक 'क्षणु' धातोर्लुङस्तादेशे अडागमे अनुबन्ध-लोपे च्लौ च्लेः सिचि 'तनादिभ्यस्तथासोः' इति पाक्षिके सिचो लोपे 'अनुदात्तोप-देशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' इत्यनुनासिकस्य णस्य लोपे 'अक्षत' इति। लुगभावपक्षे सिचः सस्य इटि षत्वे ष्टुत्वे 'अक्षणिष्ट' इति भवति।

**अक्षित** ( ई० ३६ )—हिंसार्थक-उकारेत्संज्ञक-'क्षिण्'-धातोर्लुङि तिपि, ते च-'अक्षेणीत्' 'अक्षित' 'अक्षेणिष्ट' इति रूपत्रयाणि भवन्ति । तथाहि—'क्षिण्' धातोर्लुङि तत्स्थाने तिपि अनुबन्धलोपे अडागमे मध्ये च्लिप्रत्यये तस्य सिजादेशे इचावितौ 'आर्धधातुकस्येड्वलादेः' इति इटि, 'अस्तिसिचोऽपृक्ते' इत्यनेन च ईडागमे हलन्तलक्षणवृद्धिः प्राप्ता, तां 'ह्मयन्तक्षणश्वसजागृणिश्व्येदिताम्' इत्यनेन निषेधे लघूपधगुणे 'इट ईटि' इति सलोपे सवर्णदीर्घे सति 'अक्षेणीत्' इति भवति । आत्मनेपदे तु तप्रत्यये अडागमे च्लौ तस्य सिजादेशे इचावितौ 'अक्षिण् स्-त' इति स्थिते 'तनादिभ्यस्तथासोः' इत्यनेन सिचो लुकि 'अनुदात्तोपदेशवनतितनोत्यादीनामनुनासिकलोपो झलि क्ङिति' इत्यनेन विकल्पेनानुनासिकलोपे 'अक्षित' इति रूपं भवति, अनुनासिकलोपाभावे सिचो लुगभावे च इडागमे लघूपधगुणे सस्य षत्वे ष्टुत्वे 'अक्षेणिष्ट' इति ।

**तृणोति** ( ई० ४२ )—अदनार्थक-उकारेत्संज्ञक 'तृण्' धातोर्लटि तत्स्थाने तिप्यनुबन्धलोपे 'तनादिकृञ्भ्य उः' इत्यनेन उप्रत्यये तिपः सार्वधातुकत्वात् 'सार्वधातुकार्धधातुकयोः' इत्यनेन गुणे 'तृणोति' इति सिद्धम् ।

**कुर्वन्ति** ( ई० ३७ )—'डुकृञ् करणे' इत्यस्माद् धातोर्लटि तत्स्थाने झौ झस्य अन्तादेशे शपं प्रबाध्य 'तनादिकृञ्भ्यः उः' इत्युप्रत्यये 'कृ उ अन्ति' इति जाते 'सार्वधातुकार्धधातुकयोः' इति गुणे रपरत्वे 'क रु अन्ति' इति भूते 'अत उत्सार्वधातुके' इति कृञोऽकारस्य उत्त्वे 'इको यणचि' इत्युप्रत्ययसम्बन्धिनः उकारस्य यणि 'हलि च' इति रेफान्तस्योपधायाः दीर्घत्वे प्राप्ते 'न भकुर्छुराम्' इति निषेधे 'कुर्वन्ति' इति जातम् ।

**कुर्मः** ( ई० ५० )—'डुकृञ् करणे' इति धातोर्लटि मसि सार्वधातुकसंज्ञायां 'तनादिकृञ्भ्यः उः' इत्युप्रत्यये 'नित्यं करोतेः' इत्युकारस्य लोपे सस्य रुत्वे विसर्गे च कृते 'कुर्मः' इति ।

**कुर्यात्** (ई० ३७, ४१, ४९)—कृधातोर्विधिलिङि लिङो लस्थाने तिपि अनुबन्धलोपे तिप इकारलोपे च कृते सार्वधातुकसंज्ञायां शपि प्राप्ते तम्प्रबाध्य 'तनादिकृञ्भ्य उः' इत्युप्रत्यये तस्यार्धधातुकत्वात्तस्मिन् परे कृणो ऋकारस्य गुणे रपरत्वे 'क र् उ त्' इति स्थिते 'अत उत्सार्वधातुके' इति ककारघटकाऽकारस्य उत्वे यासुटि उटि

गते 'लिङः सलोपोऽनन्त्यस्य इति सलोपे 'कु र् उ या त्' इति जाते 'ये च' इत्यनेन उकारस्य लोपे 'कुर्यात्' इति सिद्धम् ।

**अकार्षीत्** ( ई० ३२ )—कृधातोर्लुङस्तिपि अडागमे तिप इकारलोपे च्लौ च्लेः सिचि सस्यार्धधातुकत्वादिटि प्राप्ते 'एकाच उपदेशेऽनुदात्तात्' इति निषेधे 'अस्तिसिचोऽपृक्ते' इति तस्य ईटि 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धौ 'आदेश-प्रत्यययोः' इति षत्वे 'अकार्षीत्' इति ।

**संस्करोति** ( ई० ४३ )—सम्पूर्वकात् कृधातोर्लटि तिपि उप्रत्यये उप्रत्यय-माश्रित्य ऋकारस्य गुणे रपरे तिप्रत्ययमाश्रित्य उकारस्य गुणे 'सम्परिभ्यां करोतौ भूषणे' इति सुटि मस्यानुस्वारे 'संस्करोति' इति । अलंकरोतीत्यर्थः ।

**उपस्कृतं ब्रूते** ( ई० ३८ ) अत्र 'उपात्प्रतियत्ने' इति सूत्रेण वाक्याध्याहारार्थे सुट् । वाक्याध्याहारेण ब्रूते इत्यर्थः । 'एधोदकस्योपस्कुरुते' इत्यत्र तु प्रतियत्नेऽर्थे सुड् भवति । प्रतियत्नः = गुणाधानमिति मूले स्पष्टम् ।

**परिष्करोति** ( ई० ३६, ५७ )—परिपूर्वककृधातोर्लटि तिपि सार्वधातुक-संज्ञायां 'तनादिकृञ्भ्यः उः' इत्युप्रत्यये 'सार्वधातुकार्धधातुकयोः' इति गुणे रपरत्वे तिपमाश्रित्य उकारस्य च गुणे कृते 'संस्कृतं भक्षाः' इति ज्ञापकात् 'सम्प-रिभ्यां करोतौ भूषणे' इति आभूषणेऽप्यर्थे 'परिनिविभ्यः–' इति षत्वे 'परिष्क-रोति' इति ।

**पर्यस्कार्षीत्** ( ई० ३८, ४७ )—परिपूर्वकात् कृधातोर्लुङि तिपि अडागमे मध्ये च्लौ च्लेः सिचि 'अस्तिसिचोऽपृक्ते' इति तस्य इटि षत्वे 'वदव्रज–' इति वृद्धौ 'संस्कृतं भक्षाः' इति ज्ञापकात् 'सम्पारिभ्यां करोतौ भूषणे' इति आभूषणेऽप्यर्थे सुटि 'सिवादीनां वा' इति विभाषया षत्वे यणि 'पर्यष्कार्षीत्' इति । षत्वाभावपक्षे 'पर्यस्कार्षीत्' इति ।

**उपात्प्रतियत्नवैकृतवाक्याध्याहारेषु च** ( ई० ४७ )—उपात्कृञः सुट् स्यात्प्रतियत्नवैकृतवाक्याध्याहारेष्वर्थेषु, चाद्भूषणसमवाययोरपीत्यर्थः । अत्र प्रति-यत्नो–गुणाधानम् , विकृतमेव वैकृतं–विकारः, वाक्यस्याध्याहारे आकाङ्क्षि-तैकदेशपूरणम् । उदाहरणानि यथा–उपस्कृता कन्या, अलङ्कृतेत्यर्थः । उपस्कृता ब्राह्मणाः, समुदिता इत्यर्थः । एधोदकस्योपस्कुरुते, गुणाधानं करोतीत्यर्थः । उपस्कृतं भुङ्क्ते' विकृतमित्यर्थः । उपस्कृतं ब्रूते, वाक्याध्याहारेण ब्रूते इत्यर्थः ।

**सञ्चस्कार**—( ई० ४७ )—डु-इत्संज्ञक-ञकारेत्संज्ञक-करणार्थक-समुपसर्गक-'कृ'-धातोर्लिटि तत्स्थाने तिपि तस्य णलादेशेऽनुबन्धलोपे 'लिटि धातोरनभ्यासस्य' इत्यनेन द्वित्वे प्राप्ते 'सम्परिभ्यां करोतौ भूषणे' इत्यनेन सुडागमे च प्राप्ते तत्र यद्यपि 'लिटि धातो'रित्यस्य प्रकृतिप्रत्ययमात्रापेक्षत्वेनाऽन्तरङ्गत्वं, 'सम्परिभ्यामित्यस्य तु' पदद्वयापेक्षत्वेन बहिरङ्गत्वमिति परमपि सुटं बाधित्वा द्वित्वे कृतेऽभ्यासादिकार्येऽभ्यासात्पूर्वमेव सुटः प्रवृत्तिर्भवति, तथापि 'सुट्कात्पूर्वः' इत्यनेन 'अडभ्यासव्यवायेऽपि' इति बलेन कात्पूर्वमेव सुडागमे सति 'सञ्चस्कार' इति सिद्धम्। भाष्यकृता तु–'पूर्वं धातुरुपसर्गेण युज्यते' इत्याश्रित्यान्तरङ्गत्वात्सुटि ततो द्वित्वादिके सति रूपसिद्धौ 'कात्पूर्वः' इत्यादि प्रत्याख्यातम्।

**सञ्चस्करिव** ( ई० ४०, ५१, ५४, ५६ )—डु-इत्संज्ञकञ्कारेत्संज्ञक-करणार्थकसमुपसर्गक 'कृ' धातोर्लिटि तत्स्थाने वस् तस्य वादेशे 'सुट्कात्पूर्वः' इत्यनेन सुडागमे प्राप्ते तथा 'लिटि धातोरनभ्यासस्य' इत्यनेन द्वित्वे च प्राप्ते 'पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेने'ति धातूपसर्गयोः कार्यस्यान्तरङ्गत्वात्पूर्वं सुडागमे 'स्कृ' इत्यस्य द्वित्वे अभ्याससंज्ञायाम् 'उरत्' इत्यत्वे रपरत्वे 'शर्पूर्वाः खयः' इत्यनेन रेफसकारयोर्निवृत्तौ 'कुहोश्चुः' इति चुत्वे इडागमे 'ऋतश्च संयोगादेर्गुणः' इत्यनेन गुणे रपरत्वे मस्यानुस्वारपरसवर्णयोः कृतयोः 'सञ्चस्करिव' सिद्धम्।

ननु 'कृसृभृवृस्तुद्रुस्रुश्रुवो लिटि' इत्यनेन 'ऋतो भारद्वाजस्य' इत्यनेन चेण्निषेधात्कथमिहेटा रूपसिद्धिरिति चेन्मैवम्, उक्तसूत्रद्वये च वार्तिककरणेन ससुट्कात्परस्येण्निषेधाभावात्।

**संस्क्रियात्, संस्कृषीष्ट** ( ई० ३७, ४४, ४५, ४८ )—संपूर्वकात् 'डुकृञ् करणे' इत्यस्माद्धातोः 'पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन' इति सिद्धान्तमादायान्तरङ्गत्वात् पूर्वं 'संपरिभ्यां करोतौ भूषणे' इत्यनेन सुटि तत आशीर्लिङि तत्स्थाने तिपि 'यासुट् परस्मैपदेषूदात्तो ङिच्च' इत्यनेन यासुडागमे 'सुट्तिथोः' इति सुटि 'रिङ्शयग्लिङ्क्षु' इत्यनेन ऋतो रिङादेशे 'स्कोः संयोगाद्योरन्ते च' इत्यनेन सकारद्वयलोपे 'संस्क्रियात्' इति रूपं सिद्धम्। आत्मनेपदे तु—'लिङः सीयुट्' इत्यनेन सीयुडागमे यलोपे 'सुट् तिथोः' इत्यनेन सुडागमे षत्वादिके कृते 'संस्कृषीष्ट' इति रूपं भवति। संस्क्रियादित्यत्र 'गुणोर्ति संयोगाद्योः' इत्यनेन गुणस्तु न भवति, 'नित्यं छन्दसि' इत्यतो नित्यमनुवर्त्य नित्यं यः संयोगादिस्तस्यैत्यर्थात्सुटि

नित्यसंयोगादित्वाभावात् । एवं 'संस्कृषीष्ट' इत्यत्र 'ऋतश्च संयोगादेः' इत्यनेन इडागमस्तु न भवति अत्र सूत्रे 'एकाच उपदेशे अनुदात्तात्' इत्यत उपदेश इत्यनुवर्त्य उपदेशे यः संयोगादिरिति व्याख्यानेनास्याप्राप्तेः ।

**सुट्कात्पूर्वः**—अयमाशयः, धातोः संयोगः पूर्वमुपसर्गेण भवति । ततश्च तन्निमित्तकं कार्यं सुड् भवति, ततश्च स्कृशब्दस्य द्वित्वं, ततः 'शर्पूर्वाः खयः' इति सलोपः । इत्थञ्च सञ्चस्करतुरित्यादिरूपे सिद्धे 'सुट्कात्पूर्वः' इति सूत्रं विफलमिति भाष्यकाराशयः ।

संस्क्रियात्—अयम्भावः, 'गुणोऽर्तिसंयोगाद्योः' इति सूत्रे नित्यग्रहणस्यानुवर्त्तनात्, यः सर्वदा संयोगादिः स्यात्तस्य गुणः स्यादिति सूत्रार्थो भवति । ततश्च कृधातुः सुटि सति संयोगादिः, तदभावेऽसंयोगादिरिति गुणाभावः । एवञ्च संस्कृषीष्टेत्यादौ उच्चारणावस्थायां यः संयोगादिर्धातुर्भवति तस्यैवेडितीडभावो बोध्यः ।

इति तनादिप्रकरणम्

# अथ क्र्यादिप्रकरणम्

क्रीणन्ति ( ई० ४२, ४६ )—क्रीञ्धातोर्लटि झौ सार्वधातुकसंज्ञायां शपि प्राप्ते तमपवाद्य 'क्र्यादिभ्यः श्ना' इति श्नाप्रत्यये 'क्रीना झि' इति स्थिते 'ई हल्यघोः' इतीत्वे प्राप्ते परत्वान्नित्यत्वाच्च झस्य अन्तादेशे 'श्नाभ्यस्तयोरातः' इत्यालोपे णत्वे 'क्रीणन्ति' इति ।

**विष्टभ्नाति** ( ई० ३६ )—'स्तन्भु'-इति सौत्रो धातुः । तथा च उकारेत्संज्ञक-विपूर्वकस्तन्भ्-धातोर्लटि तत्स्थाने तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि प्राप्ते तमपवाद्य 'क्रादिभ्यः श्ना' इत्यनेन श्नाप्रत्यये शकारस्येत्संज्ञायां लोपे च 'अनिदितां हल उपधायाः क्ङिति' इत्यनेन नलोपे 'स्तन्भेः' इत्यनेन षत्वे ततः ष्टुत्वे 'विष्टभ्नाति' इति सिद्धम् ।

**प्रमीणाते** ( ई० ३४ )—प्रोपसर्गात् मीञ् धातोर्लटि तत्स्थाने आत्मनेपदेतंप्रत्यये टेरत्वे शपं प्रबाध्य 'क्र्यादिभ्यः श्ना' इति श्नाप्रत्यये अनुबन्धलोपे 'हिनुमीना' इत्यनेन णत्वे 'ई हल्यघोः' इति ईत्वे 'प्रमीणाते' इति जातम् ।

**व्यष्टभत्** ( ई० ३७, ५४ )—विपूर्वकात् 'स्तन्भ' धातोर्लुङि तिपि अडागमे अनुबन्धलोपे तिप इकारलोपे च्लौ च्लेः सिचि प्राप्ते तम्प्रबाध्य 'जृस्तम्भुम्रुचु—' इत्यादिना अङि अनुबन्धलोपे 'वि अ स्तन्भ् अ त्' इति जाते यणि 'अनिदिताम्' इति नलोपे 'स्तन्भेः' इति सस्य षत्वे ष्टुत्वे 'व्यष्टभत्' इति। अङोऽभावे च्लेः सिचि इचि गते 'वि अस्तन्भ् स् त्' इति स्थिते यणि सस्य इटि 'अस्तिसिचोऽपृक्ते' इति तस्य च ईटि अनुबन्धलोपे 'इट ईटि' इति सलोपे सवर्णदीर्घे 'स्तन्भेः' इति सस्य षत्वे ष्टुत्वे नस्यानुस्वारे परसवर्णे 'व्यष्टम्भीत्' इति च भवति।

**विष्कभ्नोति** ( ई० ५४ )—विपूर्वकात् स्कभ्धातोर्लटि तिपि 'स्तन्भुस्तुन्भु–' इति श्नुप्रत्यये गुणे 'वेः स्कभ्नातेर्नित्यम्' इति सस्य षत्वे उक्तं रूपं सिद्धम्। श्नापक्षे 'विष्कभ्नाति' इति। स्कभ्नातेरित्यत्र श्नाविशिष्टं रूपं न विवक्षितं किन्तु धातुमात्रमिति तत्त्वविदः।

**स्तभान** ( ई० ५६, ५८ )—उकारेत्संज्ञक-रोधनार्थक-'स्तन्भ' धातुः सौत्रः। तस्माल्लोटि तत्स्थाने सिपि सिपः सार्वधातुकत्वात् शपि प्राप्ते तमपवाद्य 'स्तन्भुस्तुन्भु—' इत्यादिसूत्रेण चकारात् श्नाप्रत्यये अनुबन्धलोपे सेर्ह्यादेशे 'स्तन्भ् ना हि' इति स्थिते 'हलः श्नः शानज्झौ' इति नाशब्दस्य शानजादेशे अनुबन्धलोपे शित्वात्सार्वधातुकत्वेन 'सार्वधातुकमपित्' इति ङित्वे सति 'अनिदिताम्—' इति धातोर्नस्य लोपे 'अतो हेः' इति हेर्लुकि 'स्तभान' इति जातम्।

**स्तरिषीष्ट**—स्तॄधातोराशीर्लिङि तङि सीयुटि यलोपे 'सुट् तिथोः' इति सुटि 'लिङ्सिचावात्मनेपदेषु' इति विभाषया इटि सार्वधातुकार्धधातुकयोः इति गुणे रपरत्वे 'स्तरि सी स् त' इति जाते 'वॄतो वा' इति इटो दीर्घे प्राप्ते 'न लिङि' इति निषेधे उभयोः सकारयोः षत्वे ष्टुत्वे 'स्तरिषीष्ट' इति। इडभावे तु 'उश्च' इति कित्वाद् गुणाभावे 'ॠत इद्धातोः' इति इत्वे रपरत्वे 'हलि च' इति दीर्घे 'स्तीर्षीष्ट' इति।

**अवारीत्** ( ई० ५८ )—'वृञ् वरणे' इति धातोर्लुङि तिपि अडागमे मध्ये च्लौ च्लेः सिचि 'आर्धधातुकस्येड्वलादेः' इति सस्य इटि 'अस्तिसिचोऽपृक्ते' इति तस्य ईटि 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धौ रपरत्वे 'इट ईटि' इति सलोपे सवर्णदीर्घे 'अवारीत्' इति।

**शश्रतुः** ( ई० ४६, ५३, ५४ )—'शॄ हिंसायाम्' इति धातोर्लिटि तसि तसोऽतुसि द्वित्वादिकार्ये 'शॄदॄप्रां ह्रस्वो वा' इति ह्रस्वे कृते यणि 'शश्रतुः'

इति । ह्रस्वाऽभावे 'ऋच्छतृताम्' इति गुणे रपरत्वे 'शशरतुः' इति सिद्धम् ।

**आरीत्** ( ई० ४१ )—गत्यर्थकऋधातोर्लुङि तिपि आटि 'आटश्च' इति वृद्धौ मध्ये च्लौ च्लेः सिचि 'आर्धधातुकस्येड्वलादेः' इति सस्य इटि 'अस्तिसिचोऽपृक्ते' इति तस्य च ईटि 'इट ईटि' इति सलोपे सवर्णदीर्घे 'आरीत्' इति ।

**जिनाति** ( ई० ४७ )—वयोहान्यर्थक-'ज्या'-धातोर्लटि तत्स्थाने तिप्यनुबन्धलोपे शपमपवाद्य श्नाप्रत्ययेऽनुबन्धलोपे 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च' इत्यनेन सम्प्रसारणे पूर्वरूपे 'हलः' इत्यनेन दीर्घे कृते 'प्वादीनां ह्रस्वः' इत्यनेन ह्रस्वे 'जिनाति' इति सिद्धम् ।

**अभान्त्सीत्**—बन्धधातोर्लुङि तिपि अडागमे मध्ये च्लौ च्लेः सिचि 'वदव्रज-' इति वृद्धौ 'एकाचः-' इति बस्य भषभावे 'अस्तिसिचोऽपृक्ते' इति तस्य ईटि धस्य चर्त्वे उक्तं रूपं सिद्धम् ।

**अबान्धाम्** ( ई० ३८ )—बन्धनार्थक-'बन्ध्' धातोर्लुङि तत्स्थाने तस्प्रत्यये तस्य 'तस्थस्थमिपां तान्तन्तामः' इत्यनेन तामादेशे अडागमे मध्ये च्लिप्रत्यये तस्य सिजादेशे 'झलो झलि' इत्यनेन सिज्लोपे 'झषस्तथोर्धोऽधः' इत्यनेन धकारे 'अतो हलादेर्लघोः' इत्यनेन वृद्धौ नलोपे ततो जश्त्वे झरो झरीति-धलोपे च कृते 'अबान्धाम्' इति । न चात्र सिज्लोपात्प्राक् सकारपरकत्वात् 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' इत्यनेन भष्भावः कुतो नेति वाच्यम्, पूर्वत्रासिद्धमित्यनेन सलोपं प्रत्यस्याऽसिद्धत्वात् । न चैवमपि प्रत्ययलक्षणेन सादिप्रत्ययमाश्रित्य भष्भावो दुर्वार एवेति वाच्यम्, प्रत्ययलक्षणं प्रति सिज्लोपस्यासिद्धत्वात् ।

**श्रेथुः** ( ई० ४१ )—विमोचनप्रतिहर्षार्थक-'श्रन्थ्'धातोर्लिटि तत्स्थाने झिप्रत्यये तस्य परस्मैपदानामित्यादिना उसादेशे 'अत एकहल्मध्ये' इतिसूत्रे भाष्ये 'देभतुः' इत्युदाहरणाच्च एकदेशानुमत्या—'श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्त्वं वा' इति व्याकरणान्तराश्रयणेन लिटः कित्त्वे 'अनिदितां हल उपधायाः क्ङिति' इत्यनेनानुनासिकलोपे द्वित्वेऽभ्याससंज्ञायां हलादिशेषे 'अत एकहल्मध्येऽनादेशादेर्लिटि' इत्यनेन एत्वे अभ्यासलोपे च कृते सस्य रुत्वे विसर्गे 'श्रेथुः' ।

वस्तुतस्तु—व्याकरणान्तराश्रयणे तादृशमानाभावेन संयुक्तहल्मध्यस्थत्वान्नैत्वाभ्यासलोपाविति 'शश्रन्थुः' इदमेव रूपमिति तत्त्वविदः ।

**एषिता** ( ई० ४६, ५७ )—आभीक्ष्ण्यार्थक-'इष्' धातोर्लुटि तत्स्थाने तिपि मध्ये तासि प्रत्यये 'लुटः प्रथमस्य डारौरसः' इत्यनेन तिपो डादेशे डित्वादभस्याऽपि टेर्लोपे 'आर्धधातुकस्येड्वलादेः' इत्यनेनेडागमे लघूपधगुणे 'एषिता' इति सिद्धम्। अत्र 'तिषसहलुभरुषरिषः' इत्यनेन वैकल्पिकेडागमस्तु न भवति, अकारविशिष्टसह-धातुसाहचर्यादकारविकरणस्य तौदादिकस्यैवेषेर्ग्रहणं न तु इष्यतीष्णात्योरित्यभ्युप-गमात्। यदि 'इषेस्तकारे श्यन्प्रत्ययात्प्रतिषेधः' इति वलादिष्णातेरपि ग्रहण-मिष्यते तदाऽत्रेड्विकल्प उचित एवेत्यवधेयम्।

**खौनाति** ( ई० ४९, ५६, ५८ )—'खच् भूतप्रादुर्भावे' इति धातुः, तस्य वान्तत्ववादिमते लटि तिपि 'क्रादिभ्यः श्ना' इति शपमपवाद्य श्नाप्रत्यये 'च्छ्वोः शूड्—' इति वस्य ऊठि 'एत्येधत्यूठ्सु' इति वृद्धौ उक्तं रूपं सिद्धम्।

**खौनीहि** ( ई० ३८, ५३, ५४, ५५ )—भूतप्रादुर्भावार्थक-'खव्' धातु-स्तस्य वान्तत्वादिमते लोटि तत्स्थाने सिपि अनुबन्धलोपे सेर्ह्यादेशे 'क्रादिभ्यः श्ना' इत्यनेन श्नाप्रत्यये शकारस्येत्संज्ञायां लोपे च 'खव् ना हि' इत्यवस्थायां शा-नचः परत्वात् 'च्छ्वोः शूडनुनासिके च' इत्यनेन वकारस्य ऊठि कृते 'एत्येधत्यूठ्सु' इत्यनेन वृद्धौ 'ई हल्यघोः' इत्यनेन श्नाप्रत्ययाकारस्य ईत्वे सति 'खौनीहि' इति रूपम्। अत्र 'हलः श्नः शानज्झौ' इत्यनेन श्नः शानजादेशस्तु न भवति वकारस्य ऊठि जाते हल्परकत्वाभावात्।

**ग्रहीता** ( ई० ४८ )—ग्रह्धातोर्लुटि तिपि तासिप्रत्यये तिपो डादेशे अनु-बन्धलोपे डित्वसामर्थ्यादभस्यापि टेर्लोपे 'आर्धधातुकस्येड्वलादेः' इति इटि अनु-बन्धलोपे 'ग्रहोऽलिटि दीर्घः' इति इटो दीर्घे 'ग्रहीता' इति।

**गृहाण**—ग्रह्धातोर्लोटि मध्यमपुरुषैकवचने सिपि अनुबन्धलोपे 'सेर्ह्यपिच्च' इति सेर्ह्यादेशे शपमवाद्य 'क्र्यादिभ्यः श्ना' इति श्नाप्रत्यये अनुबन्धलोपे शित्वात्सा-र्वधातुकत्वे 'सार्वधातुकमपित्' इति ङित्वे 'ग्रहिज्ये'ति सम्प्रसारणे पूर्वरूपे 'हलः श्नः शानज्झौ' इति श्नः शानजादेशे शस्येत्संज्ञायां लोपे च विहिते नस्य णत्वे 'अतो हेः' इति हेर्लुकि 'गृहाण' इति जातम्।

इति क्र्यादिप्रकरणम्



# अथ चुरादिप्रकरणम्

**चोरयति** ( ई० ५७ )—'चुर् स्तेये' इति धातोः स्वार्थे 'सत्यापपाश–' इति णिचि अनुबन्धलोपे 'चुर् इ' इति स्थिते णिच आर्धधातुकत्वात्तस्मिन् परे चकारादुकारस्य 'पुगन्तलघूपधस्य च' इति गुणे णिजन्तस्य 'सनाद्यन्ताः—' इति धातुसंज्ञायां लटि तिपि शपि गुणे अयादेशे पूर्वरूपे 'चोरयति' इति।

**अचूचुरत्** ( ई० ४२, ४३ )—चुर्धातोः 'सत्यापपाश—' इति स्वार्थे णिचि अनुबन्धलोपे णिच इकारस्य 'आर्धधातुकं शेषः' इति आर्धधातुकत्वे 'पुगन्तलघूपधस्य च' इति गुणे 'चोरि' इति जाते 'सनाद्यन्ता धातवः' इति धातुत्वाल्लुङि लुङ्स्थाने तिपि 'लुङ्लङ्—' इत्यडागमे मध्ये च्लौ 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति च्लेश्चङि 'णेरनिटि' इति णिलोपे 'णौ चङ्युपधाया ह्रस्वः' इत्युपधाह्रस्वे 'चङि' इति द्वित्वे 'पूर्वोऽभ्यासः' इत्यभ्यासत्वे 'हलादिः शेषः' इत्यभ्यासरेफस्य लोपे 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इति सन्वद्भावे 'दीर्घो लघोः' इत्यभ्यासस्य दीर्घे 'अचूचुरत्' इति। आत्मनेपदपक्षे 'अचूचुरत' इत्यपि पूर्ववदेव सिद्धं बोध्यम्। नन्वत्र 'अग्लोपी'ति ह्रस्वनिषेधः, सन्वद्भावाभावेन दीर्घाभावश्च युक्त इति चेन्न, णाविति जातिनिर्देशेन णित्वजात्याश्रये परेऽग्लोपिन एव ग्रहणेनादोषात् दिति दिक्।

**चिन्त इति** ( ई० ५८ )—अयमाशयः, चिन्त इति पाठे कर्त्तव्ये इदित्करणं णिच् विकल्पेन भवतीति ज्ञापयति। एवञ्च चिन्तति चिचिन्तेत्यादिणिज्रहितप्रयोगसिद्धिः फलम्भवति। णिजभावपक्षे चिन्त्यात् चिन्त्यते इत्यादौ नकारस्योपधात्वेन 'अनिदिताम्' इति प्राप्तो नलोपो न भवतीति स्वांशे चरितार्थश्च। चुरादिपठितेभ्यः सर्वेभ्यो धातुभ्यः पाक्षिको णिज् भवतीति सामान्येनेदं ज्ञापकमिति केषाञ्चिन्मतम्। अत एव जगाण जगणतुरित्यादिवृत्त्युदाहरणं सङ्गतम्भवति। परञ्च सामान्येन ज्ञापनपक्षे 'आधृषाद्वा' इति वचनस्य वैयर्थ्यं भवतीति विशेषापेक्षं ज्ञापकम्। यन्त्रि धातौ तु इकाराभावेऽपि णिचोऽभावपक्षे यन्त्र्यते इत्यादौ तकारस्योपधात्वेन नलोपस्य प्राप्तिरेव नास्तीति इकारोच्चारणं स्वांशे सफलतां न लभते इति तस्य ज्ञापकत्वञ्च युक्तम्। चिन्त्यादित्यादौ प्राप्तनलोपस्य निषेधार्थमिकारोच्चारणं विध्यर्थमेवास्त्विति न शङ्क्यम्। नलोपे कर्तव्ये णिलोपस्य स्थानिवद्भावेन नकारस्योपधात्वाभावात्।

अपीपिडत् ( ई० ३६, ४८, ५६ )—'पीड् अवगाहने' इति धातोः 'सत्यापपाश-'इति णिचि अनुबन्धलोपे 'सनाद्यन्ताः-' इति णिजन्तस्य धातुसंज्ञायां धातुत्वाल्लुङि तिपि अडागमे अनुबन्धलोपे तिप इकारलोपे च्लौ 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति चङि 'चङि' इति द्वित्वे अभ्यासत्वे हलादिशेषे अभ्याससम्बन्धिनः ईकारस्य ह्रस्वे 'अपिपीड् इ त्' इतिस्थिते 'भ्राजभासभाषदीपजीवमीलपीडामन्यतरस्याम्' इति उपधायाः ह्रस्वे कृते लघुपरकत्वात् 'सन्वल्लघुनि-' इति सन्वद्भावे 'दीर्घो लघोः' इत्यनेन अभ्यासस्य दीर्घे 'णेरनिटि' इति णिलोपे 'अपीपिडत्' इति। ह्रस्वाभावपक्षे ह्रस्वपरकत्वाऽभावेन सन्वद्भावाभावात् दीर्घाप्राप्तया 'अपिपीडत्' इति भवति।

अपप्रथत्—( ई० ४१ )—प्रथधातोः 'सत्यापपाश-' इति णिचि णिजन्तस्य धातुत्वाल्लुङि तिपि अडागमे तिप इकारलोपे च्लौ 'णिश्रि' इति च्लेश्चङि 'चङि' इति द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'सन्वल्लघुनि-' इति सन्वद्भावे 'सन्यतः' इति इत्वे प्राप्ते तम्प्रबाध्य 'अत्स्मृदृत्वरप्रथम्रदस्तॄस्पशाम्' इत्यभ्यासाकारस्य अत्वे 'णेरनिटि' इति णिलोपे 'अपप्रथत्' इति।

अपीपृथत् ( ई० ४०, ४४, ५०, ५१, ५७ )—पृथ्धातोः स्वार्थे णिचि धातुत्वाल्लुङि तिपि अडागमे च्लौ 'णिश्रि-' इति च्लेश्चङि 'णेरनिटि' इति णिलोपे प्रत्ययलक्षणेन णित्वमाश्रित्य 'पुगन्ते'ति प्राप्तं गुणं बाधित्वा 'उर्ऋत्' इत्यनेन ऋकारस्य ऋकारे 'चङि' इति द्वित्वे अभ्यासत्वे उरदत्वे हलादिशेषे सन्वत्वादित्वे 'दीर्घो लघोः' इति दीर्घे 'अपीपृथत्' इति। ऋत्वाभावपक्षे 'द्विर्वचनेचि' इति निषेधात् गुणात् प्राग् द्वित्वे उरदत्वे हलादिशेषे प्रत्ययलक्षणेन णित्वमाश्रित्य ऋकारस्य गुणे रपरत्वे 'अपपर्थत्' इति। अत्र लघुपरकत्वाभावेन सन्वत्वविरहात् इत्वदीर्घौ न।

ज्ञपयति ( ई० ५०, ५७, ५८ )—ज्ञप्धातोः 'ज्ञप मिच्च' इति स्वार्थे णिचि मित्संज्ञायां च सत्यां वृद्धौ 'ज्ञापि' इति ण्यन्तम्, तस्मात् 'सनाद्यन्ताः-' इति धातुसंज्ञायां कर्तरि तिपि शपि 'मितां ह्रस्वः' इति मितामुपधाया ह्रस्वे गुणे अयादेशे पूर्वरूपे 'ज्ञपयति' इति।

अचीचहत् ( ई० ४४ ) चह्—धातोः स्वार्थे णिच्यनुबन्धलोपे वृद्धौ 'सनाद्यन्तेति' धातुसंज्ञायां लुङि तिप्यनुबन्धलोपे अडागमे मध्ये च्लिप्रत्यये तस्य

'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इत्यनेन चङादेशे चङीत्यनेन द्वित्वेऽभ्याससंज्ञायां हलादिशेषे ह्रस्वे 'मितां ह्रस्वः' इत्यनेनोपधाह्रस्वे णिलोपे 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इत्यनेन सन्वद्भावे 'सन्यतः' इत्यनेनाभ्यासस्यावर्णस्य इत्वे दीर्घो लघोरित्यनेन दीर्घे 'अचीचहत्' इति सिद्धम् । नन्वस्यैव धातोश्चुरादिगणे कथादौ कथं पाठः, अत्र पाठेनैव कार्यसिद्धेरिति चेत् ? नैवम् , तत्र पाठेऽग्लोपित्वेन दीर्घसन्वद्भावाऽभावात् 'अचचहत्' इत्येव रूपम्भवतीति विशेषाऽवगमात् ।

अचचहत् ( ई० ४६ )—कथादौ 'चह् परिकल्पने' धातुस्तस्माण्णिच्यनुबन्धलोपे अल्लोपे धातुसंज्ञायां लुङि तिप्यडागमे मध्ये च्लिप्रत्यये तस्य 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इत्यनेन चङादेशे द्वित्वेऽभ्याससंज्ञायां हलादिशेषेऽग्लोपित्वेन दीर्घसन्वद्भावाऽभावे सति 'अचचहत्' इति सिद्धम् । कथादिबहिर्भूत-'चह्' धातोस्तु-'अचीचहत्' इति रूपम् ।

'श्रन्थ' धातोर्लिटि ( ई० ४६ )—सुधाकरादिमते 'श्रन्थिग्रन्थिदम्भिस्वञ्जीनां लिटः कित्वं वा' इति विहितकित्वस्य पिदपिद्विषयकत्वे—श्रेथ, श्रेथतुः, श्रेथुः, श्रेथ, श्रेथथुः, श्रेथथ, श्रेथ, श्रेथिव, श्रेथिम । अत्र मतेऽपि माधवस्तु-प्रथमपुरुषे णलि 'शश्राथ' उत्तमपुरुषे णलि तु-शश्रन्थ, शश्रथ' इत्याह । कित्वस्य वैकल्पिकविधानेन तदभावे-शश्रन्थ, शश्रन्थतुः, शश्रन्थुः, शश्रन्थिथ, शश्रन्थथुः, शश्रन्थ, शश्रन्थ, शश्रन्थिव, शश्रन्थिम, इति रूपाणि । तथाहि—

उक्तवार्तिकेन कित्वे 'अनिदितां हल उपधायाः क्ङिति' इत्यनेनानुनासिकलोपे तस्याऽसिद्धत्वात्संयुक्तहल्मध्यस्थत्वेन 'अत एकहल्मध्य' इत्येत्वाऽभ्यासलोपयोरप्राप्तावपि एषाम्मते जातावेवेति 'श्रेथे'त्यादिरूपाणि सिद्ध्यन्ति । तत्र प्रथमपुरुषे उत्तमपुरुषे च णलि माधवमते नेत्वाऽभ्यासलोपौ किन्तूत्तमे णित्वादिविकल्पमाश्रित्य रूपान्तराण्येव । परन्त्वत्र-मित्पक्षे नस्य लोपेऽपि तस्याऽसिद्धत्वात्संयुक्तहल्मध्यस्थत्वेन 'अत एकहल्मध्य' इत्यस्याप्राप्तिरेव तथाविधवार्तिकाद्यनुपलम्भाच्च नोक्तरूपाणि सिद्ध्यन्ति किन्तु-'शश्रन्थ' इत्यादिरूपाण्येव समीचीनान्यवगन्तव्यानि ।

चपयति ( ई० ३६, ५७ )—चयनार्थक-मकारेत्संज्ञक-चि-धातोः 'सत्यापपाशरूपवीणातूलश्लोकसेनालोमत्वचवर्मवर्णचूर्णचुरादिभ्यो णिच्' इत्यनेन स्वार्थे णिचि अनुबन्धलोपे 'चिस्फुरोर्णौ' इत्यनेन वैकल्पिक-आत्वे 'च ह्' इत्यवस्थायाम् 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ्णौ' इति पुगागमे उकारककारयोरित्संज्ञायां

लोपे च सति चेत्यनुवर्त्य मित्वस्यानुकर्षणेन मित्वाद्ध्रस्वे चपीत्यस्य 'सनाद्यन्ता धातवः' इत्यनेन धातुसंज्ञायां लटि तत्स्थाने तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि गुणेऽयादेशे पूर्वरूपे च कृते 'चपयति' इति सिद्धम्। आत्वाभावपक्षे- णिचि वृद्धौ आयादेशे मित्वादुपधाह्रस्वे 'चययति' इति रूपम्। 'णिचश्चे'ति आत्मनेपदे तु चपयते, चययते इति।

कीर्तयति ( ई० ४९, ५६ )—कृत्धातोः स्वार्थे णिचि 'सनाद्यन्ताः-' इति धातुत्वाल्लटि तिपि शपि 'उपधायाश्च' इति धातोरुपधायाः ऋतः इत्वे रपरत्वे 'उप- धायां च' इति दीर्घे 'सार्वधातुकार्धधातुकयोः' इति गुणे अयादेशे 'कीर्तयति' इति।

अचीकृतत्-अचिकीर्तत् ( ई० ४०, ५१, ५३, ५६ )—कृत्धातोः स्वार्थे णिचि धातुत्वाल्लुङि तिपि च्लौ च्लेश्चङि 'उपधायाश्च' इति प्राप्तमित्वमपवाद्य 'उर्ऋत्' इति ऋवर्णस्य ऋत्वे 'चङि' इति द्वित्वे अभ्यासत्वे उदरत्वे हलादिशेषे चुत्वे सन्वत्वादित्वे 'दीर्घो लघोः' इति दीर्घे 'लुङ्लङ्–' इत्यडागमे तिप इकारलोपे 'णेर- निटि' इति णिलोपे 'अचीकृतत्' इति। 'उर्ऋत्' इति विकल्पपक्षे 'उपधायाश्च' इति इत्वे रपरत्वे 'उपधायां च' इति दीर्घे 'कीर्त् इ अ ति' इति स्थिते द्वित्वे अभ्यासत्वे हलादिशेषे ह्रस्वे चुत्वे अटि णिलोपे तिपि इकारलोपे 'अचि- कीर्तत्' इति।

आमयति ( ई० ५८ )—'अम् रोगे' इति धातोर्णिचि वृद्धौ 'आमि' इति, तस्मात् धातुसंज्ञायां लटि तिपि शपि गुणे अयादेशे पूर्वरूपे 'आमयति' इति।

अलुलोकत् ( ई० ५५, ५६ )—ऋकारेत्संज्ञक-भाषार्थक 'लोकृ' धातोः स्वार्थे णिचि धातुत्वाल्लुङि तिपि अडागमे च्लौ 'णिश्रि–' इति च्लेश्चङि द्वित्वे अभ्यासत्वे हलादिशेषे अभ्यासह्रस्वे 'णौ चङ्युपधाया ह्रस्वः' इति उपधाह्रस्वे प्राप्ते 'नाग्लोपिशास्वृदिताम्' इति निषेधे लघुपरकत्वाभावेन सन्वत्त्वविरहात् 'दीर्घो लघोः' इति दीर्घाप्राप्तौ 'णेरनिटि' इति णिलोपे तिप इकारलोपे 'अलुलोकत्' इति।

अलुलोचत् ( ई० ३६ )—ऋकारेत्संज्ञक 'लोचृ' धातोः 'सत्यापपाशे'- त्यादिना स्वार्थे णिचि, गुणे लोचीत्यस्य धातुसंज्ञायां धातुत्वाल्लुङि तिपि अडागमे मध्ये च्लिप्रत्यये तस्य 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति चङादेशे 'चङि' इति द्वित्वे अभ्याससंज्ञायां हलादिशेषे अभ्यासह्रस्वे 'णौ चङ्युपधाया ह्रस्वः' इति उपधाह्रस्वे प्राप्ते 'नाग्लोपिशास्वृदिताम्' इत्यनेन तन्निषेधे उपधाह्रस्वाभावेन

लघुपरकत्वाभावात् 'दीर्घो लघोः' इति दीर्घप्राप्तौ 'णेरनिटि' इति णिलोपे 'अलुलोचत्' इति सिद्धम् ।

गणानां क्रमिकत्वे किं मानमिति ( ई० ३६ )—अयम्भावः, अष्टाध्यायीं तथा धातुपाठमाश्रित्यैव भ्वाद्यादिगणानां यथाक्रमं समावेशो ग्रन्थकृता कृतोऽतः सूत्रपाठधातुपाठावेव तत्र प्रमाणम् । तथाहि–धातुपाठे सर्वप्रथमो भूरेव पठितोऽतस्तदादीनां धातुत्वोपपत्तये प्रथमाध्याये 'भ्वादयो धातवः' इत्यनेन धातुसंज्ञा विहिता । यत्र च 'अद्भक्षणे' इति धातुस्तदाद्यदादिगणेन निर्दिष्टं भवति, अत्रापि च अदिप्रभृतीनां शपो लुक्त्वाय 'अदिप्रभृतिभ्यः शपः' इति सूत्रम् । एवं 'हु दानादानयोः' 'दिवु क्रीडाविजगीषे'त्यादि 'षुञ् अभिषवे' 'तुद् व्यथने' 'रुधिर् आवरणे' 'तनु विस्तारे' 'डुक्रीञ् द्रव्यविनिमये' 'चुर स्तेये' इति तत्तद्धातुतस्तत्तद्धातुपर्यन्तं जुहोत्यादयो गणाः, यथाक्रमं सूत्राणि च तत्तद्धात्वादिमाश्रित्य निर्दिष्टाः सन्ति । एवञ्च कौमुद्यां दीक्षितेन तत्क्रममनुरुध्यैव गणसन्निवेशः कृत इत्यवधेयम् ।

धूनयति ( ई० ३६ )—धूञ्धातोः स्वार्थे णिचि धातुत्वाल्लटि तिपि शपि 'धूञ्प्रीञोर्नुक्' इति वार्तिकेन नुकि गुणे अयादेशे 'धूनयति' इति सिद्धम् ।

कथयति ( ई० ३७ )—अजन्तात् 'कथ' धातोः 'सत्यापपाशेति' सूत्रेण स्वार्थे णिचि तस्यार्धधातुकत्वात्तस्मिन्परे 'अतो लोपः' इति अल्लोपे 'अत उपधायाः' इति वृद्धौ प्राप्तायाम् 'अचः परस्मिन्' इत्यल्लोपस्य स्थानिवद्भावात्तदभावे धातुत्वाल्लटि तिपि शपि 'सार्वधातुकार्धधातुकयोः' इति गुणे अयादेशे तत्सिद्धिः ।

अचकथत् ( ई० ३८ )—अजन्तात् 'कथ' धातोः 'सत्यापपाशे'ति स्वार्थे णिचि तस्यार्धधातुकत्वात् तस्मिन् परे 'अतो लोपः' इत्यल्लोपे तस्य स्थानिवद्भावात् उपधावृद्ध्यभावे धातुत्वाल्लुङ्स्तिपि अडागमे अनुबन्धलोपे 'इतश्चे'ति तिप इकारलोपे च्लौ 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति च्लेश्चङि अनुबन्धलोपे 'णेरनिटि' इति णिच इकारलोपे 'चङि' इति द्वित्वे अभ्यासत्वे 'हलादिः शेषः' इति अभ्यासहलो लोपे चुत्वे अग्लोपित्वात्सन्वद्भावाऽभावेन दीर्घाऽभावे तत्सिद्धिः ।

अजीगणत् ( ई० ५६, ५८ )—अजन्तात् 'गण' धातोः 'सत्यापपाशे'ति सूत्रेण स्वार्थे णिचि णिचः आर्धधातुकत्वेन 'अतो लोपः' इत्यल्लोपे तस्य स्थानिवत्त्वात् वृद्ध्यभावे धातुत्वाल्लुङ्स्तिपि अनुबन्धलोपे 'इतश्चे'ति तिप इकारलोपे

च्लौ 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति च्लेश्चङि 'णेरनिटि' इति णिचं इकारलोपे द्वित्वे अभ्यासत्वे 'हलादिः शेषः' इत्यभ्याससम्बन्धिणकारस्य लोपे 'कुहोश्चुः' इति अभ्यासगकारस्य जकारे 'अज गण् अ त्' इति स्थिते अग्लोपित्वाद् दीर्घसन्वद्भावयोरभावे 'ईच गणः' इति ईत्वे 'अजीगणत्' इति । पक्षे 'अजगणत्' ।

**औननत्** ( ई० ४३, ५१, ५४, ५८ )—'ऊन परिहाणे' इत्यस्मादजन्ताद्धातोः स्वार्थे णिचि धातुत्वाल्लुङि तिपि अडागमे 'अचोञ्णिति' इति वृद्धौ च्लिप्रत्यये 'णिश्रि–' इति च्लेश्चङि 'चङि' इति अजादेर्द्वितीयस्य इति नशब्दस्य द्वित्वे अभ्यासत्वे 'अतो लोपः' इत्यल्लोपे अग्लोपित्वेन सन्वद्भावाऽभावाद् अभ्यासस्य ईत्वदीर्घयोरभावे 'णेरनिटि' इति णिलोपे तिप इकारलोपे 'औननत्' इति ।

ननु ऊनधातोर्णिचि अन्तरङ्गत्वादतो लोपे धातुत्वाल्लुङि तिपि आडागमे च्लौ चङादेशे निशब्दस्य द्वित्वेऽभ्यासेऽकारश्रवणं कथमिति चेन्न; यियविषति, पिपविषतीत्येतदर्थं 'पययोरि'ति वक्तव्ये 'ओः पुयण्ज्यपरे' इति सूत्रे वर्गप्रत्यहार-ज-ग्रहणेन 'णिचि अच आदेशो न द्वित्वे कर्तव्ये' इति ज्ञापनेनादोषात् । न चैवं कॄतधातोर्णिचि लुङादौ 'उपधायाश्चे'तीत्वाप्राप्त्या अचिकीर्तदिति न स्यादिति चेन्न, ज्ञापकसाजात्यात् यत्र द्विरुक्तावभ्यासोत्तरखण्डस्यायोऽच् प्रक्रियायां परिनिष्ठिते रूपे वाऽवर्णो लभ्यते, तत्रैवोक्तनिषेधः प्रवर्तत इति कल्पनेनादोषात् । एवं च प्रकृते नशब्दस्य द्वित्वे तत उत्तरखण्डेऽल्लोपे औननदिति सिद्धमिति दिक् ।

**परत्वाद् वृद्धौ सत्यां टिलोपः** ( ई० ३९, ५४, ५६ )—वृद्धेर्लोपो बलीयानित्यादि । पटुमाचष्टे इति विग्रहे तत्करोतीत्यादिना णिचि इष्टवत्वा'दे'रित्यनेन टिलोपे पटयतीति सिद्धम् । ननु उकारस्य टेर्लोपे सति अग्लोपित्वात् 'अनग्लोपे' इति पर्युदासात् 'अपीपटत्' इत्यादौ सन्वद्भावो न स्यादिति चेत् ? मैवम् , 'अचो ञ्णिति' इति वृद्धौ कृतायामौकारस्य टेर्लोपः, अकृतायां तु वृद्धौ उकारस्य टेर्लोप इति 'शब्दान्तरेण प्राप्नुवन्विधिरनित्यो भवती'ति न्यायेन टिलोपस्यानित्यत्वं, वृद्धिस्तु टिलोपे कृते एव भवतीति साऽप्यनित्या, एवञ्च वृद्धिटिलोपयोरुभयोर्मध्ये परत्वादुकारस्य वृद्धिरौकारः । तस्याऽऽवादेशात्प्रागेव परत्वाद्वार्णत्वादाङ्गस्य बलीयस्त्वाच्च औकारस्य टेर्लोपः, तथा सति अनग्लोपित्वात्सन्वत्वाक्षतेः । स्पष्टं चेदं मुण्डमिश्रेति भाष्यकैयटयोः । 'णौ चङ्युपधाया ह्रस्वः' इति सूत्रभाष्ये तु 'वृद्धेर्लोपो बलीयान्' इति स्थितम् । तथा सति अग्लोपित्वात्सन्वद्भावाऽभावे अपपटदिति

रूपम् । उभयथाऽपि भाष्ये दर्शनादुभयविधमपि साधु । एवञ्च स्फुटमनयोः प्रमाणं फलञ्चेति दिक् ।

**धू-धातोर्गणभेदेन रूपाणि** ( ई० ३८ )—स्वादौ चायं 'धूञ् कम्पने' इति पठितः, तत्र-धुनोति'-'धुनुते' इति। दीर्घान्तोऽप्ययं धातुस्तन्मते—धूनोति, धूनुते' इति रूपे। 'धू विधूनने' तुदादौ पठितः तस्य च 'धुवति' इति रूपम् । 'धूञ् कम्पने' इति क्र्यादौ पठितः-तस्य धुनाति, धुनीते इति रूपे । उक्तार्थ एव चुरादौ पठितः-तत्र धूनयति, धवति, धवते, इति । मतान्तरेण 'धावयति' इति रूपम् । तथाचोक्तं कविरहस्ये—

धूनोति चम्पकवनानि धुनोत्यशोकं चूतं धुनाति धुवति स्फुटितातिमुक्तम् ।
वायुर्विधूनयति चम्पकपुष्परेणून् यत्कानने धवति चन्दनमञ्जरीश्च । इति ।

**अश्वयति** ( ई० ५७ )—अश्वेन अतिक्रामति इति विग्रहे 'तेनातिक्रमति' इति गणसूत्रेण प्रातिपादिकात् धात्वर्थे णिचि इष्टवद्भावेन टिलोपे च कृते ण्यन्तस्य धातुसंज्ञायां लटि तिपि शपि गुणे अयादेशे 'अश्वयति' इति सिद्धम् ।

**'ओः पुयण्ज्यपरे' इति सूत्रे वर्गप्रत्याहारजग्रहो लिङ्गमिति**-अयंभावः 'ओः पुयण्ज्यपरे' इति सूत्रस्य पिपावयिषति, बिभावयिषति, यियावयिषति, रिरावयिषति, लिलावयिषति, जिजावयिषति, इत्युदाहरणेषु द्वित्वम्प्रत्यनिमित्ते णिचि 'द्विर्वचनेऽचि' इति निषेधाऽप्रवृत्त्या द्वित्वात्प्रागेव परत्वाद् वृद्ध्यावादेशयोः कृतयोरभ्यासेष्वाकारस्य ह्रस्वे सति 'सन्यतः' इत्येवेत्त्वसिद्धेः पवर्गयण्प्रत्याहारजकारग्रहणं व्यर्थम् । 'ओः पयोरपरयोरि'त्येव सूत्रमस्तु । पिपावयिषति, यियावयिषतीत्यत्रोक्तरीत्या 'सन्यतः' इतीत्त्वसिद्धावपि पिपविषति, यियविषतीत्यत्र पूङ्धातोर्युधातोश्चाण्यन्तात् सनि अभ्यासे इत्वार्थं तदावश्यकत्वात् । वर्गप्रत्याहारजकारग्रहणन्तु व्यर्थमेव, एवञ्च तदुक्तार्थे ज्ञापकम् । 'णिच्य च आदेशो न स्यात् द्वित्वे कर्तव्ये' इति ज्ञापितेऽस्मिन्नर्थे बिभावयिषतीत्यादिषु णिचि लुप्ते सति 'चङि' इति द्वित्वे कार्ये प्रत्ययलक्षणमाश्रित्य णिचि गुणावादेशयोः प्रतिषेधे सति उवर्णान्तानां द्वित्वेऽभ्यासेऽकाराभावेन 'सन्यतः' इत्यस्याप्रवृत्त्या वर्गप्रत्याहारजकारग्रहणं स्वांशे चरितार्थं, ज्ञापनफलन्तु—तुतावयिषति, अतूतवत् , ऊर्णुनावयिषति, और्णूनवत् , पुस्फारयिषति, अपुस्फरादिति ।

**आख्यानात्कृतस्तदाचष्टे कृल्लुक्** ( ई० ३९, ४० )—आख्यायते इत्या-

ख्यानं, तद्वाचकात्, तत्—द्वितीयान्तात्, कृतः—कृत्प्रत्ययान्तात्, तत्रैव 'कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्' इति परिभाषया कंसवधादेरपि कृदन्तत्वम्, आचष्टे इत्यर्थे णिच् स्यात्। कृल्लुक्-कृत्प्रत्ययस्य लुक्, प्रकृतिप्रत्यापत्तिः—तस्यैव कृतः या प्रकृतिः हनादिधातुरूपा, तस्याः प्रत्यापत्तिः—आदेशादिविकारपरित्यागेन स्वरूपेणावस्थानम्भवतीत्यर्थः। कारकञ्च—चात्कार्यम्, हेतुमण्णिचः प्रकृतेर्हन्यादेर्हेतुमण्णौ यादृशं कारकं धातावन्तर्भूतं द्वितीयान्तं यादृशञ्च कार्यं कुत्वतत्वादि तदिहापीत्यर्थः। कंसवधमाचष्टे कंसं घातयतीत्युदाहरणम्। हननं वधः 'हनश्च वधः' इति भावे हन्धातोरप्प्रत्ययः प्रकृतेर्वधादेशश्च। कंसस्य वधः कंसवधः, तमाचष्टे इत्यर्थे णिच्। अप्प्रत्ययस्य कृतो लुक् प्रकृतिभूतस्य हन्धातोर्वधादेशस्य च निवृत्तौ 'कंसं हन् इ' इति स्थिते कुत्वतत्वादिकार्ये च कृते उक्तं रूपं जातम्।

**कंसमजीघतत्** (ई० ३९, ४५, ५४)—कंसवधमाचष्टे इत्यर्थे कंसवधशब्दात् णिचि, तस्मात् लुङि तिपि च्लेश्चङि 'आख्यानात् कृतस्तदाचष्टे कृल्लुक् प्रकृतिप्रत्यापत्तिः प्रकृतिवच्च कारकम्' इति 'कंस हन्' इति जाते 'चङि' इति द्वित्वे पूर्वस्याभ्याससंज्ञायां 'हलादिः शेषः' इति लोपे 'कुहोश्चुः' इति चुत्वे 'हनस्तोऽचिण्णलोः' इति तकारेऽन्तादेशे 'हो हन्तेः' इति हकारस्य घकारे अटि सन्वद्भावे 'सन्यतः' इतीत्वे 'दीर्घो लघोः' इति दीर्घे 'इतश्च' इतीकारलोपे रूपं सिद्धम्। ननु कंसवधशब्दाद् णिचि कृते कंसवधशब्दस्याङ्गसंज्ञा धातुसंज्ञा च भवति, ततः कंसवधशब्दात्पूर्वमडागमः कंसशब्दस्य द्वित्वञ्च भवितुमर्हति। किञ्च 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्' इति परिभाषया कुत्वतत्वे न भवतस्तन्न, प्रकृतिवच्चेति चकारो भिन्नक्रमः कारकं चात्कार्यम्, हेतुमण्णिचः प्रकृतेर्हन्यादेर्हेतुमण्णौ यादृशं कारकं धातावनन्तर्भूतं द्वितीयान्तं यादृशञ्च कार्यं कुत्वतत्वादि तदिहापीत्यर्थात्। अत्र 'हनश्च वधः' इति अप् प्रत्ययो वधादेशश्चेति दिक्।

**नन्वत्र अङ्गसंज्ञेति** (ई० ४५)—अयम्भावः, कंसवधशब्दात् णिचि कृते कंसवधशब्दस्य अङ्गसंज्ञा धातुसंज्ञा च भवति, ततः कंसवधशब्दात्पूर्वमडागमः, कंसशब्दस्य द्वित्वञ्च भवितुमर्हति। किञ्च 'धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानम्' इति परिभाषया कुत्वतत्त्वे न भवतस्तन्न, प्रकृतिवच्चेति चकारो भिन्नक्रमः कारकं चात्कार्यम्, हेतुमण्णिचः प्रकृतेर्हन्यादेर्हेतुमण्णौ यादृशं कारकं धातावनन्तर्भूतं द्वितीयान्तं यादृशञ्च कार्यं कुत्वतत्वादि तदिहापीत्यर्थात्। अत्र 'हनश्च वधः' इति अप् प्रत्ययो वधादेशश्चेति दिक्।

**यकारवकारान्तानामिति** ( ई० ४५ )—'च्छ्वोः शूड्' इति सूत्रे भाष्ये क्विब्ग्रहणमनुवर्तते न वेति विचारे कांश्चिद्दोषानुद्भाव्य परिहृत्य चोक्तम्। एतवानेव विशेषः। अनुवर्तमाने क्विद्ग्रहणे छः षत्वं वक्तव्यम्। अननुवर्तमाने त्वनेन छः शत्वे कृते शान्तत्वादेव षो भविष्यतीति प्रष्टा प्रष्टुमित्यादि सिद्धये 'व्रश्चादि' सूत्रे छग्रहणं न कर्त्तव्यम्। एवं हि वदता भाष्यकृता ऊठ्भाविभ्यो यङ्लुक् नास्तीत्युक्तप्रायम्। अन्यथा दिवेर्यङ्लुकि ईडभावपक्षे देदेति, देदिषि इत्यादौ ऊठो भावाभावाभ्यां महान् विशेषः स्यात्। तत्र क्विद्ग्रहणाननुवृत्तावूठः प्रवृत्त्या देद्योति देद्योषीत्यादिरूपविशेषलाभात्, परन्त्विदं 'च्छ्वोः शूड्' इत्यनेन यत्रोठ् प्रवर्तते तत्रैव प्रवर्तते। तज्ज्ञापनस्योक्तसूत्रस्य भाष्यमूलकत्वात् 'ज्वरत्वर' इत्यादिसूत्रेण यत्रोठ् भवति, तत्र यङ्लुग् भवत्येवेति युक्तं माधवादीनां मतश्चेति।

**असीषमत्** ( ई० ४४ )—'साम सान्त्वने' इति कथादेः प्राक् चुरादौ पठितस्य रूपम्। तद्धि-'साम्' धातोर्णिचि धातुसंज्ञायां लुङि तिपि इपावितौ अडागमे मध्ये च्लौ 'णि-श्रि-द्रु-स्रुभ्यः कर्तरि चङ्' इति च्लेश्चङि द्वित्वे अभ्याससंज्ञायां 'ह्रस्वः' इत्यभ्यासस्याऽकारस्य ह्रस्वे हलादिशेषे 'सन्यतः' इति इत्वे 'दीर्घो लघोः' इति अभ्यासस्य दीर्घे 'णेरनिटि' इति णिलोपे षत्वे 'असीषमत्' इति। उपदेशे 'षाम्' इति धातुः।

यद्यपि 'साम सान्त्वप्रयोगे' इत्येव कथादेः प्राक् चुरादौ पठितं न तु 'साम सान्त्वने' इति, तथापि सान्त्वनस्य सामप्रयोगादनन्यत्वात्तथोक्तिरिति कौमद्याशयः।

**सोसूचिता**—'सूच पैशून्ये' इति चुरादिगणपठितादन्तात् 'सूच' धातोः स्वार्थे णिचि अलोपे 'सूचि' इति, तस्मात् 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' इत्यनेन अनेकाच्त्वात् यङोऽप्राप्तया 'सूचि-सूत्रि-मूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ्वाच्य.' इत्यनेन यङि णिलोपे 'सन्यङोः' इति द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'गुणो यङ्लुकोः' इत्यनेन अभ्यासोकारस्य गुणे यङन्तस्य 'सनाद्यन्ताः' इति धातुसंज्ञायां लुटि 'स्यतासी लृलुटोः' इत्यनेन तासिप्रत्यये 'आर्द्धधातुकस्येड्वलादेः' इति इटि 'लुटः प्रथमस्ये'ति डादेशे टिलोपे 'सोसूच य इ ता' इति स्थिते 'यस्य हलः' इत्यनेन यकारस्य लोपे 'अतो लोपः' इत्यनेन परिशिष्टस्य यकारोत्तराकारस्य लोपे 'सोसूचिता' इति। उत्तरखण्डस्य षत्वन्तु न, धातोरनेकाच्त्वेनाऽषोपदेशत्वादादेशसकाराऽभावात्।

**अतितिरायत्**—तिर्यञ्चमाचष्टे इत्यर्थे णिचि इष्ठवद्भावेन टिलोपे तस्य बहिरङ्गत्वेनाऽसिद्धत्वात् तिरसस्तिर्यादेशे वृद्धौ आयि 'तिरायि' इत्यस्य धातुसंज्ञायां लुङि तिपि अडागमे मध्ये च्लौ तस्य चङि द्वित्वादिकार्ये णिलोपे 'अतितिरायत्' इति।

नचात्र टिलोपेन अञ्चुधातुत्वाभावात् कथं तिर्यादेशः इति वाच्यम्? 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषया तिर्यादेशे कर्तव्ये टिलोपस्याऽसिद्धत्वेन अञ्चधातुत्वसत्त्वात्। न च तिर्यादेशे कृते पुनष्टिलोपः स्यादिति वाच्यम्? यथा 'अपाचितरामि'त्यत्र 'असिद्धवदत्राभात्' इति सूत्रेण प्रथमतलोपस्याऽसिद्धत्वेन तरबूघटकतकारस्य पुनः 'चिणो लुक्' इति सूत्रेण लुक् न भवति, तथाऽत्रापि प्रथमटिलोपस्यासिद्धत्वेन पुनष्टिलोपाभावात्। 'अङ्गकार्ये कृते पुनर्नाङ्गकार्यम्' इति परिभाषया वा पुनष्टिलोपाभावाच्चेति। न च प्रकृते उपधाह्रस्वः कुतो नेति वाच्यम्? अग्लोपित्वेन 'नाग्लोपिशास्वृदिताम्' इत्यनेन निषेधात्।

**असयति** ( ई० ५८ )—'असिना हन्ति' इति विग्रहे 'कर्तृकरणाद्धात्वर्थे' इति गणसूत्रेण प्रातिपदिकात् धात्वर्थे णिचि इष्टवद्भावेन टिलोपे च कृते ण्यन्तस्य धातुसंज्ञायां लटि तिपि शपि गुणे अयादेशे 'असयति' इति।

**रामो राज्यमचीकरत्** ( ई० ५७ )—'बहुलमेतन्निदर्शनम्' इति गणसूत्रस्थ बहुलग्रहणेन चुरादिभिन्नाः उदाहृताः ये नव गणास्तेभ्योऽपि स्वार्थे णिच्, इति केचित् वदन्ति, तन्मते 'अचीकरत्' इति लुङि प्रथमपुरुषैकवचने रूपं बोध्यम्।

इति चुरादिप्रकरणम्।

# अथ ण्यन्तप्रकरणम्

**तत्प्रयोजको हेतुश्च** ( ई० ५१ )—तच्छब्देन 'स्वतन्त्रः कर्ते'ति पूर्वसूत्रोपात्तः कर्ता परामृश्यते। तस्य = कर्तुः, प्रयोजकः = प्रेरकः, हेतुसंज्ञः कर्तृसंज्ञश्च स्यादित्यर्थः। भवन्तं प्रेरयति भावयति, इत्याद्युदाहरणानि।

देवदत्तो यज्वा भवति, तं याजकः प्रेरयति, इत्याद्यर्थे भूधात्वर्थस्य भवनस्य मुख्यकर्ता यज्वा, तस्य यज्वभवने प्रवर्तयिता याजकादिः प्रयोजकः, तन्निष्ठायां प्रेरणायां भूधातोर्णिचि वृद्ध्यावादेशयोः कृतयोः ण्यन्तस्य धातुसंज्ञायां लटि तिपि शपि गुणे अयादेशे 'भावयति' इति।

**ओः पुयण्ज्यपरे** ( ई० ४९ )—'उ' इत्यस्य 'ओः' इति षष्ठी 'पुयण्जि' इति च्छेदः । पुश्च यण् च ज् चेति समाहारद्वन्द्वात् सप्तमी । अः परो यस्मादिति बहुव्रीहिः । 'सन्यतः' इत्यस्मात् सनीत्यनुवर्तते । अङ्गस्येत्यधिकृतम् । 'अत्र लोपः' इत्यस्मादभ्यासस्येति, 'भृञामित्' इत्यस्मादिदिति चानुवर्तते । ततश्च 'सनि परे यदङ्गं तदवयवाभ्यासोकारस्येत्त्वं स्यात् पवर्गयण्जकारेष्ववर्णपरेषु परतः' इत्यर्थो भवति । उदाहरणं तु 'अबीभवत्' इति । अत्र 'अ बु भव् अ त्' इति स्थिते 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इत्यनेन 'चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरस्तस्य सनीवकार्यं स्याण्णावग्लोपे असति इत्यर्थपक्षे सन्वद्भावे विहिते 'पिपठिषति' इत्यत्र यथा 'सन्यतः' इत्यनेन सनि परे अङ्गावयवाऽभ्यासाऽकारस्य इत्त्वं भवति तथैवाऽत्रापि चङ्परे सत्यप्यनेन सन्परकबुद्ध्या अवर्णपरकपवर्गे ( भकारे ) परे अङ्गावयवाभ्यासोकारस्य इत्वं सिद्धम् ।

**अबीभवत्** ( ई० ५४ )—भूधातोः 'हेतुमति च' इति हेत्वर्थे णिचि 'णिच्य च आदेशो न द्वित्वे कर्तव्ये' इति निषेधात् पूर्वं वृद्ध्यभावे धातुत्वाल्लुङि तिपि 'लुङ्लङ्–' इत्यडागमे मध्ये च्लौ 'णिश्रिद्रुस्रुभ्यः–' इति च्लेश्चङि 'णेरनिटि' इति णिलोपे 'चङि' इति द्वित्वे अभ्यासत्वे ह्रस्वे 'अभ्यासे चर्च' इति जश्त्वे प्रत्ययलक्षणेन वृद्धौ अवादेशे 'णौ चङ्युपधाया ह्रस्वः' इत्युपधाह्रस्वे 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इति सन्वद्भावे 'ओः पुयण्ज्यपरे' इत्यभ्यासोकारस्य इत्त्वे 'दीर्घो लघोः' इति दीर्घे उक्तं रूपं सिद्धम् ।

**अपीपवत्** ( ई० ४३ )—'पूङ्' धातोः 'हेतुमति च' इत्यनेन णिचि अनुबन्धलोपे पू इ इति स्थिते 'द्विर्वचनेऽचि' इति निषेधात् वृद्ध्यभावे 'सनाद्यन्ता धातवः' इति ण्यन्तस्य धातुसंज्ञायां लुङि तिपि इपावितौ 'लुङ्–लङ्–लृङ्क्ष्वडुदात्तः' इति अडागमे 'च्लि लुङि' इति च्लौ 'णि–श्रि–द्रु–स्रुभ्यः' इति च्लेश्चङादेशे अनुबन्धलोपे 'चङि' इत्यनेन द्वित्वे उत्तरखण्डस्य वृद्ध्यवादेशयोः कृतयोः 'अपू पाव् इ अत्' इति स्थिते 'णेरनिटि' इत्यनेन णिलोपे 'णौ चङ्युपधाया ह्रस्वः' इत्यनेन उपधाह्रस्वे अभ्यासे अकाराभावेन 'सन्यतः' इत्यस्याप्राप्त्या 'ओः पुयण्ज्यपरे' इत्यनेन अभ्यास्याकारस्य इकारे सन्वद्भावविषयत्वाद् 'दीर्घो लघोः' इति दीर्घे 'अपीवत्' इति जातम् ।

**अचूचुरत्** ( ई० ४२, ४३ )—चुर्धातोः स्वार्थे णिचि उपधागुणे 'चोरि'

इति, तस्मात् 'हेतुमति च' इति हेतुमण्णौ 'चोरि इ' इति स्थिते 'ण्यल्लोपावियङ्-यण्गुणवृद्धिदीर्घेभ्यः पूर्वविप्रतिषेधेन' इति परत्वात् प्राप्तायामपि वृद्धिं बाधित्वा णिलोपे ण्यन्तस्य 'सनाद्यन्ताः-' इति धातुत्वाल्लुङि तिपि अडागमे तिप इकार-लोपे च्लौ 'णिश्रिद्रुस्रुभ्यः कर्तरि चङ्' इति च्लेश्चङि 'णौ चङ्युपधाया ह्रस्वः' इति उपधाह्रस्वे 'णेरनिटि' इति णिलोपे 'चङि' इति 'चुर्' इत्यस्य द्वित्वे 'सन्वल्लघुनि-' इति सन्वद्भावविषयत्वाद् 'दीर्घो लघोः' इति दीर्घे 'अचूचुरत्' इति ।

नन्वत्र उपधाह्रस्वः अभ्यासदीर्घश्चेति द्वयमपि चङ्परे णौ विहितम् । तदु-भयमप्यत्र प्रत्ययलक्षणमाश्रित्य प्रथमणिच्मादाय न सम्भवति, तस्य द्वितीयणिचा व्यवहितत्वेन चङ्परकत्वाभावात् । नापि द्वितीयणिचमादाय तदुभयोः सम्भवः, द्वितीयणिच्प्रकृतेः प्रथमण्यन्तस्य णिलोपमादाय अग्लोपित्वादिति चेन्न, 'चङ्परे णौ' इत्यत्र णावित्यस्य चङ्परकणित्वजात्याश्रयैकाऽनेकणिज्व्यक्तिपरकत्वेन विवक्षित-त्वात् । तथा च णिद्वयस्य चङ्परकत्वाभावे णित्वस्य चङ्परकत्वमस्तीति ह्रस्वदीर्घ-योरस्ति प्रवृत्तिरिति ।

**अचीचकासत्** ( ई० ४२, ४४ )—'चकासृ दीप्तौ' अस्माण्णिचि तदन्ता-ल्लुङि तिपि इपावितौ 'लुङ्-लङ्' इत्यडागमे मध्ये च्लौ तस्य 'णि श्रि-द्रु-स्रुभ्यः कर्तरि चङ्' इति चङादेशे 'चङि' इति द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'कुहोश्चुः' इति चुत्वे 'णेरनिटि' इति णिलोपे चङ्परे णौ यदङ्गं तस्य योऽभ्यासो लघुपरः इत्यर्थपक्षाश्रये 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इति सन्वद्भावे 'सन्यतः' इति इत्त्वे 'दीर्घो लघोः' इति दीर्घे 'अचीचकासत्' इति । 'अङ्गं यत्र द्विरुच्यते' इति मते अर्थात् 'सन्वल्लघूनी'त्यस्य 'चङ्परे णौ यल्लघु तत्परो योऽङ्गस्य अभ्यासः' इत्यर्थपक्षे सन्वद्भावाऽभावात् इत्त्वदीर्घयोरप्राप्तयोः 'अचचकासत्' इति भवतीति ।

**णौ च संश्चङोरिति** ( ई० ४७ )—इदं सूत्रं णिजन्तप्रक्रियायामेवोभयत्र पठितम् । तत्र षष्ठाध्यायप्रथमपादस्थं प्रथमम् । सन्परे चङ्परे च णौ श्वयतेः सम्प्रसारणं वा स्यादित्यर्थः । अशूशवत्-अशिश्वयत्' इत्युदाहरणे । अपरं द्वितीयाध्यायचतुर्थपादस्थम् । सन्परे चङ्परे च णौ इङो गाङ् वा स्यादित्यर्थः । 'अध्यजीगपत्-अध्यापिपत्' इत्युदाहरणे ।

**अशूशवत्** ( ई० ५४ )—श्विधातोः हेतुमण्णौ ण्यन्तस्य 'सनाद्यन्ताः—' इति धातुत्वाल्लुङि तिपि अडागमे तिप इकारलोपे च्लौ 'णिश्रि-' इति च्लेश्चङि

'अश्वि इ अ त्' इति स्थिते 'सम्प्रसारणं तदाश्रयं च कार्यं बलवत्' इति भाष्यात् वृद्धयायादेशौ प्रबाध्य 'णौ च संश्चङोः' इति वस्य सम्प्रसारणे पूर्वरूपे 'शु' इत्यस्य 'चङि' इति द्वित्वे उत्तरखण्डस्य णिचमाश्रित्य वृद्धयावादेशयोः उपधाह्रस्वे सन्वत्वविषयाद् 'दीर्घो लघोः' इत्यभ्यासदीर्घे 'अशूशवत्' इति । सम्प्रसारणाऽभावे 'अशिश्वयत्' इति । अत्र अलघुत्वात् सन्वद्भावाभावेन दीर्घो न ।

**न्यषीषहत्** ( ई० ४९ )—'नि' उपसर्गात् 'षह मर्षणे' अस्माद् धातोर्णिचि लुङि 'न्यसीषहत्' इति रूपं भवति । 'न्यषीषहत्' इति त्वसाध्येव 'परिनिविभ्यः सेवसितसयसिवुसहसुट्स्तुस्वञ्जाम्' इत्यनेन उपसर्गस्थनिमित्तात्परस्य षत्वस्य 'स्तम्भुसिवुसहां चङि' इत्यनेन निषेधात् ।

**माभवानिदिधत्** ( ई० ४८ )—एधधातोर्णिचि ण्यन्तस्य धातुत्वाल्लुङि तिपि च्लेश्चङि 'एध् इ अ त्' इति स्थिते पूर्वम् उपधाह्रस्वे ततो 'धी'त्यस्य द्वित्वे अभ्याससंज्ञायां हलादिशेषे माङ्योगादाडभावे 'मा भवानिदिधत्' इति । नचाऽत्र 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषया अन्तरङ्गत्वात् द्वित्वमेव पूर्वं स्यादिति वाच्यम् , ओणेॠदित्करणेन बहिरङ्गस्याप्युपधाह्रस्वस्य प्राबल्यबोधनात् ।

यदि तु उपधाह्रस्वात् प्रागेव अन्तरङ्गत्वात् द्वित्वं स्यात्तदा 'ओण् इ ऋ त्' इति स्थिते णिशब्दस्य द्वित्वे 'णौ चङ्युपधाया' इति ह्रस्वे कर्तव्ये चङ्परको यो णिस्तदव्यवहितमङ्गम् 'ओणिण्' इति तस्योपधाया दीर्घाभावेन ह्रस्वाप्राप्त्या ह्रस्वनिषेधार्थम् ओणृ धातोॠकारोपादानं व्यर्थं स्यात् तदेव व्यर्थीभूय 'उपधाकार्यं द्वित्वात् प्रबलम्' इति ज्ञापयति ।

**औब्जिजत्** ( ई० ४५, ४९, ५१ )—'उब्ज् आर्जवे' । अयं धातुः उपदेशे दकारोपधः । तस्य 'भुजन्युब्जौ पाण्युपतापयोः' इति सूत्रेण निपातनात् बकारे कृते निष्पन्नात् 'उब्ज्' धातोर्णिचि ण्यन्तस्य 'सनाद्यन्ताः' इत्यनेन धातुसंज्ञायां लुङि तिपि अजादित्वादाडागमे 'आटश्चे'ति वृद्धौ 'औब्ज् इ त्' इति स्थिते मध्ये च्लौ तस्य 'णि-श्रि-द्रु-स्रुभ्यः कर्तरि चङ्' इति चङि 'नन्द्राः संयोगादयः' इति निषेधात् 'चङि' इति जिशब्दस्य द्वित्वे, न च साम्प्रतं संयोगादौ दकाराभावात् कथं 'नन्द्राः' इत्यस्य प्रवृत्तिः, इति वाच्यम् , द्वित्वे कर्तव्ये अन्तरङ्गोऽपि नकारादेशः 'नन्द्राः' इति निषेधे कृते प्रवर्तते दकारोच्चारणसामर्थ्यात् । एवञ्च 'औब्जि जि अ त्' इति स्थिते 'णेरनिटि' इति णिलोपे 'औब्जिजत्' इति सिद्धम् ।

**अबिभ्रजत्** ( ई० ५३ )—भ्राज्धातोः 'हेतुमति च' इति णिचि ण्यन्तस्य धातुत्वाल्लुङि तिपि अडागमे मध्ये च्लौ च्लेश्चङि 'भ्राजभास–' इत्यादिना वोपधाह्रस्वे द्वित्वे अभ्यासत्वे 'अभ्यासे चर्च' इति भस्य बत्वे 'सन्वल्लघुनि–' इति सन्वद्भावे 'सन्यतः' इतीत्त्वे 'अबिभ्रजत्' इति। ह्रस्वाभावपक्षे 'अबभ्राजत्' इति।

**शाययति** ( ई० ३४ )—'शो तनूकरणे' इत्यस्माद्धातोः 'आदेच उपदेशेऽशिति' इत्यात्वे हेतुमण्णौ 'शाच्छासाह्वाव्यावेपां युक्' इति युकि 'सनाद्यन्ताः' इति धातुत्वाल्लटि तिपि शपि गुणे अयादेशे 'शाययति' इति।

**अपीप्यत्** ( ई० ५४, ४८ )—पाधातोः हेतुमण्णौ 'शाच्छासाह्वाव्यावेपां युक्' इति युकि 'पायि' इति, तस्मात् 'सनाद्यन्ताः–' इति धातुत्वाल्लुङि तिपि अडागमे तिप इकारलोपे च्लौ 'णिश्रि–' इति च्लेश्चङि द्वित्वेऽभ्यासत्वे हलादिशेषे 'लोपः पिबतेरीच्चाभ्यासस्य' इति उपधालोपे अभ्यासस्य ईत्त्वे च कृते णिलोपे 'अपीप्यत्' इति।

**ह्रीधातोर्णिचि** ( ई० ३६ )—'ह्रेपयति' इति लटि प्रथमं रूपं भवति। तथाहि—'ह्री लज्जायामित्यस्माद्धातोर्णिचि सति वृद्धिं बाधित्वा 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ' इति पुकि गुणे 'सनाद्यन्ताः' इति धातुत्वाल्लटि तिपि शपि गुणे अयादेशे 'ह्रेपयति' इति।

**घातयति**—हन्धातोः हेतुमण्णौ 'अत उपधायाः' इति वृद्धौ 'हनस्तोऽचिण्णलोः' इति हन्तेस्तकारान्तादेशे ण्यन्तस्य धातुत्वाल्लटि तिपि शपि 'हो हन्तेः' इति हस्य कुत्वे गुणेऽयादेशे 'घातयति' इति।

**स्थापयति** ( ई० ४८ )—स्थाधातोः हेतुमण्णौ 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां 'पुङ् णौ' इति पुकि ण्यन्तस्य धातुत्वाल्लटि तिपि शपि गुणे अयादेशे 'स्थापयति' इति।

**अतिष्ठिपत्** ( ई० ५५ )—'ष्ठा गति-निवृत्तौ' इत्यस्य 'धात्वादेः षः सः' इति सत्वे 'निमित्तापाये नैमित्तिकस्याप्यपायः' इति परिभाषया ष्टुत्वस्यापि निवृत्तौ स्था इत्यस्माद्धातोः 'हेतुमति च' इति णिचि अनुबन्धलोपे 'अर्ति-ह्री-व्ली-री-क्नूयी-क्ष्माय्यातां पुङ् णौ' इत्यनेन पुकि अनुबन्धलोपे स्थापि इति ण्यन्तस्य 'सनाद्यन्ता धातवः' इति धातुसंज्ञायां लुङि तिपि इपावितौ 'लुङ्-लङ्' इत्याडगमे

मध्ये च्लौ तस्य 'णि-श्रि-द्रु-स्रुभ्यः' इत्यनेन चङि 'णौ चङ्युपधाया ह्रस्वः' इति ह्रस्वे 'णेरनिटि' इति णिलोपे 'चङि' इत्यनेन द्वित्वे अभ्याससंज्ञायां 'सर्पूर्वाः खयः' इति अभ्यासावयवसकारपकारयोर्लोपे 'अभ्यासे चर्च' इति चर्त्वे 'सन्वल्लघुनि' इति सन्वद्भावे 'सन्यतः' इति इत्त्वे षत्वे ष्टुत्वे च कृते अतिष्ठप् अत् इति स्थिते 'तिष्ठतेरित्' इति उपधाया इदादेशे 'अतिष्ठिपत्' इति ।

**अतिष्ठिपत्** ( ई० ४३ )—'ष्ठा गतिनिवृत्तौ' इति धातुः, अत्र 'धात्वादेः षः सः' इति षस्य सत्वे ष्टुत्वनिवृत्तौ 'स्था' इति, तस्मात् 'हेतुमति च' इति णिचि अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ' इति पुकि धातुत्वाल्लुङस्तिपि अटि अनुबन्धलोपे तिप इकारलोपे च कृते च्लौ 'णिश्रिद्रुस्रुभ्यः' इति च्लेश्चङि 'णिच्यच् आदेशो न द्वित्वे कर्तव्ये' इति निषेधात् इत्वाऽपेक्षया पूर्वं द्वित्वे अभ्यासत्वे 'शर्पूर्वाः खयः' इति सलोपे अभ्यासह्रस्वे 'अभ्यासे चर्च' इति चर्त्वे 'अ त स्थाप् इ अ त्' इति स्थिते 'णौ चङ्युपधाया ह्रस्वः' इत्युपधाह्रस्वे 'णेरनिटि' इति णिलोपे 'सन्वल्लघुनि चङ्परेऽनग्लोपे' इति सन्वद्भावे 'सन्यतः' इति इत्वे ष्टुत्वे 'तिष्ठतेरित्' इतीत्वे 'अतिष्ठिपत्' इति सिद्धम् ।

ननु 'ओणृ अपनयने' इत्यत्र ऋदित्करणाल्लिङ्गात् 'उपधाकार्यं द्वित्वात् प्रबलम्' इति कल्पनया पूर्वं 'तिष्ठतेरित्' इतीत्वं ततो द्वित्वमिति चेन्न, उक्तकल्पनायाः उपधाकार्यमात्रविषयकत्वात् । 'ओः पयण्योरि'ति वक्तव्ये पुयण्जीति वचनाल्लिङ्गात् 'णिच्यच आदेशो न' इति कल्पनायास्तु यत्र द्विरुक्तावभ्यासोत्तरखण्डस्याऽयोऽच् प्रक्रियायां परिनिष्ठिते रूपे वा अवर्णो लभ्यते तन्मात्रविषयकत्वमिति विशेषेणानेन सामान्यस्य तस्य बाधात् ।

**अचीकृतत्–अचिकीर्तत्** ( ई० ५१ )—कृत्धातोर्णिचि ण्यन्तस्य धातुत्वाल्लुङि तिपि अडागमे मध्ये च्लौ 'णिश्रिद्रुस्रुभ्यः–' इति च्लेरङि 'अकृत् इ अ त्' इति स्थिते 'उऋत्' इति धातोरुपधाया ऋकारस्य ऋत्वे सति 'कृत्' इत्यस्य द्वित्वे अभ्यासत्वे उरदत्त्वे हलादिशेषे अभ्यासचुत्वे 'सन्वल्लघुनि–' इति सन्वद्भावात् 'सन्यतः' इति इत्त्वे तस्य 'दीर्घो लघोः' इति दीर्घे 'अचीकृतत्' इति । 'उऋत्' इति उपधाया ऋत्वाभावपक्षे 'उपधायाश्चे'ति इत्त्वे रपरत्वे 'किर्त्' इत्यस्य द्वित्वादिके कृते उत्तरखण्डे 'उपधायां च' इति दीर्घे 'अचिकीर्तत्' इति ।

**विलीनयति** ( ई० ५४ ) पिपूर्वकात् लीधातोर्णिचि ण्यन्तस्य धातुत्वाल्लटि

तिपि 'लीलोर्नुग्लुकावन्यतरस्यां स्नेहविपातने' इति नुकि गुणेऽयादेशे 'विलीनयति' इति । द्रवीकरोतीत्यर्थः ।

नुगभावपक्षे 'विभाषा लीयतेः' इत्यनेन आत्त्वे ल्यपि च कृते 'विलाय' इति, तस्मात् णिचि ण्यन्तस्य धातुत्वाल्लटि तिपि शपि गुणे अयादेशे 'विलाययति' इति ।

लाधातोर्णिचि 'लीलोर्नुग्लुकावन्यतरस्याम्–' इति लुकि ण्यन्ताल्लटि तिपि शपि गुणेऽयादेशे 'विलालयति' इति ।

लुगभावपक्षे 'अर्तिह्रीव्ली–' इति पुकि ण्यन्ताल्लटि तिपि शपि गुणेऽयादेशे 'विलापयति' इति ।

ननु कृतात्वस्य लीधातोरपि एकदेशविकृतन्यायेन लीत्वान्नुक् स्यादिति वाच्यम्, सूत्रे 'ली ई' इति ईकारप्रश्लेषेण आत्त्वपक्षे तदप्राप्तेः ।

**जटाभिर्लापयते** ( ई० ५४ )—लीधातो 'हेतुमति चे'ति णिचि 'प्रलम्भनाऽभिभवपूजासु लियो नित्यमात्त्वमशिति वाच्यम्' इति वार्तिकेन एज्विषये नित्यात्त्वे पुकि लापीत्यस्य धातुसंज्ञायां लटि 'लियः सम्माननशालिनीकरणयोश्च' इति आत्मनेपदे तप्रत्यये एत्वे शपि गुणे अयादेशे 'लापयते' इति । 'जटाभिर्लापयते' इत्यस्य पूजामधिगच्छतीत्यर्थः ।

**जापयति** ( ई० ४०, ४४ )—'जि जये' अस्माण्णिचि वृद्धौ 'क्रीङ्जीनां णौ' इत्यनेन आत्वे पुकि 'जापि' इत्यस्य 'सनाद्यन्ता धातवः' इति धातुसंज्ञायां लटि तिपि शपि गुणे अयादेशे 'जापयति' इति सिद्धम् ।

**अध्यजीगपत्** ( ई० ४८ )—अधिपूर्वादिङ्धातोर्णिचि तदन्ताल्लुङि तिपि अडागमे च्लेश्चङादेशे 'णौ च संश्चङोः' इति इङो गाङादेशे पुकि उपधाह्रस्वत्वे 'अधि अ गप् इ अ त्' इति स्थिते 'गप्' इत्यस्य द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'कुहोश्चुः' इत्यनेन अभ्यासस्य चुत्वे सन्वद्भावे 'सन्यतः' इतीत्वे 'दीर्घो लघोः' इति दीर्घे यणि 'अध्यजीगपत्' इति । न चात्र णिज्निमित्तस्य गाङो द्वित्वे कर्त्तव्ये स्थानिवद्भावो निषेधो वा शङ्क्यः, यत्र अभ्यासोत्तरखण्डे आद्योऽज्वर्णोऽस्ति तत्रैव स्थानिवद्भावो निषेधो वेत्युक्तत्वात् । इह तु गाङः पूर्वं सति हि द्वित्वे 'अजादेर्द्वितीयस्य' इति णिच एव द्वित्वं भवेत्ततः चङ्परणिज्निमित्तो गाङ् ततश्च प्रक्रियायां परिनिष्ठितरूपे वा अवर्णवदुत्तरखण्डं दुर्लभमं कीर्तयतिसाम्यात् ।

**अध्यापिपत्** ( ई० ४२ )—अधिपूर्वादिङ्धातोर्णिचि तदन्ताद्धातुसंज्ञायां लुङि तिपि इपावितौ 'लुङ्-लङ्' इत्यडागमे च्लेश्चङादेशे 'णौ च संश्चङोः' इति विभाषया इङो गाङादेशे 'अर्ति-ह्री-व्ली-री-क्नूयी-क्ष्माय्यातां पुक् णौ' इति पुकि 'णौ चङ्युपधाया ह्रस्वः' इति ह्रस्वे 'अधि अ गप् इ अ त्' इति स्थिते 'गप्' इत्यस्य द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'कुहोश्चुः' इति चुत्वे 'सन्वल्लघुनी'ति सन्वद्भावे 'सन्यतः' इति इत्वे 'दीर्घो लघोः' इति दीर्घे अधीकारस्य यणि 'अध्यजीगपत्' इति।

न चात्र णिज्निमित्तस्य गाङो द्वित्वे कर्त्तव्ये स्थानिवद्भावो निषेधो वा शंक्यः, यत्र अभ्यासोत्तरखण्डे आद्योऽज्वर्णोऽस्ति तत्रैव स्थानिवद्भावो निषेधो वेत्युक्तत्वात्। इह तु गाङः पूर्वं सति हि द्वित्वे 'अजादेर्द्वितीयस्य' इति णिच एव द्वित्वं भवेत्ततश्चङ्परणिज्निमित्तो गाङ्, ततश्च प्रक्रियायां परिनिष्ठितरूपे वाऽवर्णवदुत्तरखण्डं दुर्लभं, कीर्तयति साम्यात्।

गाङभावे 'क्रीङ्जीनां णौ' इत्यात्वे पुकि 'अधि आ प् इ अ त्' इति स्थिते 'पि' इत्यस्य द्वित्वादिकार्ये कृते 'अध्यापिपत्' इति भवति।

**अन्नं साधयति** ( ई० ५७ )—षिधूधातोर्णिचि 'धात्वादेः षः सः' इति सत्वे ण्यन्तस्य धातुत्वाल्लटि तिपि शपि 'सिद्धतेरपारलौकिके' इति आत्वे गुणे अयादेशे 'साधयति' इति।

**पालयति**—'पा रक्षणे' इत्यस्माद्धातोः हेतुमण्णौ 'पातेर्णौ लुग्वक्तव्यः' इति लुकि धातुत्वाल्लटि तिपि शपि गुणेऽयादेशे 'पालयति' इति।

**वाजयति** ( ई० ५७ )—'ओ वै शोषणे' इति धातोः हेतुमण्णौ 'आदेच उपदेशे-' इत्यात्वे 'वो विधूनने जुक्' इति जुकि ण्यन्तस्य धातुत्वाल्लटि तिपि शपि गुणेऽयादेशे 'वाजयति' इति।

**रोपयति**—रुहधातोः हेतुमण्णौ 'रुहः पोऽन्यतरस्याम्' इति धातोः हस्य पकारादेशे लघुपधगुणे 'सनाद्यन्ताः-' इति धातुत्वाल्लटि तिपि शपि गुणेऽयादेशे 'रोपयति' इति।

**अरारम्भत्**—रभ्धातोः, हेतुमण्णौ 'रभेरशब्लिटोः' इति नुमि ण्यन्तस्य धातुत्वाल्लुङि तिपि अडागमे च्लौ 'णिश्रि-' इति च्लेश्चङि द्वित्वे अभ्यासत्वे

हलादिशेषे णिलोपे तिप इकारलोपे 'अररम्भत्' इति। अलघुत्वेन सन्वद्भावाऽभावादत्र दीर्घो न।

**ऐर्ष्यियत्** ( ई० ५४ )—ईर्ष्य् धातोः हेतुमण्णौ 'सनाद्यन्ताः–' इति धातुत्वाल्लुङि तिपि आटि वृद्धौ च्लौ च्लेश्चङि तिप इकारलोपे 'ऐर्ष्य् इ अ त्' इति स्थिते 'ईर्ष्यतेस्तृतीयस्येति वक्तव्यम्' इति वार्तिकेन तृतीयव्यञ्जनस्य तृतीयैकाचश्च द्वित्वं भवति। ततश्च तृतीयव्यञ्जनस्य द्वित्वपक्षे व्यञ्जनापेक्षया तृतीयव्यञ्जनं यकारस्तत्सहितस्य 'यि' इत्येकाचो द्वित्वे णिलोपे 'ऐर्ष्यियत्' इति। तीतीयैकाचो द्वित्वपक्षे अत्र तृतीयैकाचोऽभावेन वार्तिकाप्रवृत्तौ 'अजादेर्द्वितीयस्य' इति 'ष्य' शब्दस्य द्वित्वे अभ्यासादिकार्ये च कृते 'ऐर्षिष्यत्' इति। एवं च 'ऐर्ष्यियत्' इति रूपसिद्ध्यर्थं वार्तिकम्। 'ऐर्षिष्यत्' इति तु 'अजादेर्द्वितीयस्य' इत्येनेनैव सिद्धमिति दिक्।

**वापयति** ( ई० ३६ )—गावः वियन्ति ( गर्भग्रहणं कुर्वन्ति ) ताः पुरोवातः प्रेरयति इति–वापयति, वाययति वा गाः पुरोवातः। गर्भं ग्राहयतीत्यर्थः। पुरोवातकाले गावो गर्भं गृह्णन्तीति प्रसिद्धिः। अत्र हि—'वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु' अस्माद्धातोः 'हेतुमति च' इति सूत्रेण णिचि अनुबन्धलोपे 'अचो-ञ्णिति' इति वृद्धौ 'वै इ' इति स्थिते 'प्रजने वीयतेः' इति सूत्रेण विभाषया आत्वे 'अर्तिह्रीव्लीरीक्नूयीक्ष्माय्यातां पुङ् णौ' इत्यनेन पुगागमे अनुबन्धलोपे 'वापि' इति णिजन्तस्य 'सनाद्यन्ता धातवः' इत्यनेन धातुसंज्ञायां लटि, तिपि, शपि, अनुबन्धलोपे 'सार्वधातुकार्धधातुकयोः' इति गुणे अयादेशे 'वापयति' इति। आत्वाऽभावे तु—आयादेशे 'वाययति' इत्यपि भवति।

**प्राणिणत्** ( ई० ४३, ४६, ४७, ४८, ५३ )—'प्र' इत्युपसर्गात् प्राणनार्थक–'अन्' धातोर्णिचि 'सनाद्यन्ता धातवः' इत्यनेन धातुसंज्ञायां लुङि तिपि इपावितौ 'आडजादीनाम्' इत्याटि 'आटश्च' इति वृद्धौ 'प्र आ नि त्' इति स्थिते मध्ये च्लौ 'णि–श्रि–द्रु–स्रुभ्यः कर्तरि चङ्' इत्यनेन चङि णत्वस्याऽसिद्धत्वात् 'चङि' इति अजादेर्द्वितीयस्येति द्वितीयैकाचस्य 'नि' शब्दस्य द्वित्वे 'णेरनिटि' इति आर्धधातुके चङि परे णिलोपे सवर्णदीर्घे उत्तरखण्डे नकारस्याऽभ्यासनकारेण व्यवधानात् णत्वेऽप्राप्ते 'उभौ साभ्यासस्य' इति द्वयोर्नकारयोर्णत्वे 'प्राणिणत्' इति सिद्धम्।

न च 'पूर्वत्राऽसिद्धीयमद्विर्वचने' इति निषेधात् द्वित्वे कर्तव्ये णत्वस्याऽसिद्धत्वविरहेण परत्वात् कृते णत्वे पश्चात् 'णि' शब्दस्य द्वित्वं कुतो नेति वाच्यम्, एतत्सूत्राऽऽरम्भसामर्थ्यात् तस्याऽनित्यत्वविज्ञानात् । अत एव 'अर्णुनाव' इत्यत्र णत्वात् पूर्वमेव 'नु' शब्दस्य द्वित्वे कृते अभ्यासोत्तरखण्डे णत्वाऽभावसिद्धिरिति दिक् ।

**गमयति** ( ई० ५६ )—इण्धातोर्णिचि 'णौ गमिरबोधने' इति इणो गमादेशे ण्यन्तस्य धातुत्वाल्लटि तिपि शपि गुणे अयादेशे 'गमयति' इति ।

**अधिगमयति** ( ई० ५६ )—अधिपूर्वकात् इक्धातोर्णिचि 'इण्वदिकः' इति गमादेशे ण्यन्तस्य धातुत्वाल्लटि तिपि शपि गुणेऽयादेशे 'अधिगमयति' इति ।

**बहिरङ्गोप्युपधाह्रस्वः**—अयंभावः, 'ओणृ अपनयने' इति धातोः ऋदित्करणम् 'औणिणत्' इत्यत्र नाग्लोपीति उपधाह्रस्वप्रतिषेधार्थम् । यदि तु उपधाह्रस्वात्प्रागेव अन्तरङ्गत्वात् द्वित्वं स्यात् तदा 'ओण् इ अ त्' इत्यत्र 'अजादेर्द्वितीयस्य' इति णि इत्यस्य णिचा सह द्वित्वे सति पश्चादोकारस्य चङ्परे णौ उपधात्वाभावादेव ह्रस्वस्याप्रसक्तत्वात् ऋदित्करणं व्यर्थं स्यात् । द्वित्वात्प्रागेव उपधाह्रस्व इत्यभ्युपगमे तु 'ओण् इ अ त्' इत्यस्यामवस्थायां प्राप्तस्य ह्रस्वस्य निषेधार्थमृदित्करणमर्थवत् । अतो बहिरङ्गोऽप्युपधाह्रस्वो द्वित्वात् प्रागेवेति विज्ञायते ।

ननु आटिटत् आशिशत् इत्यत्र द्वित्वप्रवृत्त्यनन्तरमुपधाह्रस्वस्याभावेऽपि 'आटश्च' इति वृद्धौ आटिटत्, आशिशत्, इति सिद्ध्यत्येवेति किमनेन ज्ञापनेनेति चेद्—उच्यते । 'एध् इ अ त्' इति स्थिते पूर्वं द्वित्वप्रवृत्तौ धि इत्यस्य द्वित्वे पश्चादेकारस्य ह्रस्वो न स्यात् । द्वित्वात्प्रागेव उपधाह्रस्वे तु 'इध् इ अ त्' इति स्थिते धि इत्यस्य द्वित्वे माङ् योगादाडभावे इदिधदिति इष्टं सिद्ध्यति । ननु 'मा भवान् प्रेदिधत्' इत्यत्र 'प्र इदि धदि'ति स्थिते कृतेऽपि ह्रस्वे एकदेशविकृतन्यायेन एधधातुत्वात् 'एत्येधत्यूठ्सु' इति वृद्धिः स्यादिति चेद् ? उच्यते । अवर्णादेजाद्योरेत्येधत्योरिति व्याख्यातत्वादित्यलम् ।

**'औब्जिजत्'** ननु उब्ज् धातोः णौ लुङि च्लौ च्लेश्चङि द्वित्वे हलादिशेषे औबिब्जत् इति रूपं स्यात् । 'औब्जिजत्' इत्येव तु इष्यते । तत्रोच्यते—अयं धातुरुपदेशे 'उद्ज आर्जवे' इत्याचार्येण पठितस्तेन 'न न्द्राः' इति निषेधाज्जिशब्दस्य द्वित्वे 'भुजन्युब्जौ' इति सूत्रे उब्जेति निर्देशेन निपातनाद्दकारस्य बकारे णिलोपे च

इत्ते उक्तं रूपं सिद्ध्यति। यदि निपातनकृतबकारस्तदा तिष्ठेत्तदा दकारोच्चारणं व्यर्थमेव स्यादिति तत्सामर्थ्याद् द्वित्वानन्तरमेव बकारः।

'विस्मापयन् विस्मितमात्मवृत्तौ' ( ई० ३८, ४२, ४४ )—'विस्मापयन् विस्मितमात्मवृत्तौ' इत्यत्र मनुष्यवाचेति करणेनैव राज्ञो विस्मय इति सिंहरूप-प्रयोजकाद्विस्मयाभावेन 'नित्यं स्मयतेः' इति सूत्राप्रवृत्तौ आत्वाभावेन पुग् न स्यात्। यदि प्रयोजकाद्विस्मयः स्वीक्रियते, तदा 'भीस्म्योर्हेतुभये' इत्यात्मनेपदमपि स्यात्। एवञ्च शतृप्रत्यययुक्तं रूपमनुपपन्नं भवतीति सन्देहावसरे 'विस्माययन्' इत्येव पाठ इति साम्प्रदायिकाः।

अथवा राजा विस्मयते, मनुष्यवाक्प्रेरयतीति मनुष्यवाक् राजानं विस्मापयते इति, तां मनुष्यवाचं सिंहः प्रेरयतीति सिंहः तया राजानं विस्मापयन्निति ण्यन्ताणौ मनुष्यवाक्रूपप्रयोजकाद्विस्मयो विद्यत इत्यात्वादिकार्यं सुलभमिति दिक्।

'अध्यजीगपत्' ( ई० ५१ )—अधिपूर्वादिङ्धातोर्णिचि तदन्ताल्लुङि अडा-गमे च्लेश्चङादेशे 'णौ च संश्चङोः' इति इङो गाङादेशे पुकि उपधाह्रस्वत्वे 'अधि अ गप् इ अ त्' इति स्थिते गप् इत्यस्य द्वित्वे हलादिशेषेऽभ्यासस्य 'कुहोश्चुः' इति चुत्वे 'सन्वत्' इति सन्वद्भावे 'सन्यतः' इतीत्वे 'दीर्घो लघोः' इति इकारस्य दीर्घे 'अध्यजीगपत्' इति निष्पन्नम्। न चात्र णिज्निमित्तस्य गाङो द्वित्वे कर्तव्ये स्थानिवद्भावो निषेधो वा शङ्क्यः। यत्राभ्यासोत्तरखण्डे आद्योऽजवर्णोऽस्ति तत्रैव स्थानिवद्भावो निषेधो वेत्युक्तत्वात्। इह तु गाङः पूर्वं सति हि द्वित्वे 'अजादेर्द्वितीयस्य' इति णिच एव द्वित्वं भवेत्ततश्चङ्परणिज्निमित्तो गाङ्, ततश्च प्रक्रियायां परिनिष्ठितरूपे वाऽवर्णवदुत्तरखण्डं दुर्लभं कीर्तयतिसाम्यात्।

'ऐर्षिष्यत्'—ईर्ष्यधातोर्ण्यन्ताच्चङि अजादित्वाडागमे 'आ ईर्ष्य् इ अ त्' इति स्थिते 'ईर्ष्यतेस्तृतीयस्येति वक्तव्यम्' इति वार्तिकेन तृतीयव्यञ्जनस्य तृतीयैकाचश्च द्वित्वं भवति। ततश्च तृतीयव्यञ्जनस्य द्वित्वपक्षे व्यञ्जनापेक्षया तृतीय-व्यञ्जनं यकारस्तत्सहितस्य यि इत्येकाचो द्वित्वे णिलोपे च कृते 'ऐर्ष्यियत्' इति रूपम्। तृतीयैकाचो द्वित्वपक्षेऽत्र तृतीयैकाचोऽभावेन वार्तिकाप्रवृत्तौ 'अजादेर्द्वितीयस्य' इति ष्यशब्दस्य द्वित्वे यलोपादौ च कृते 'ऐर्षिष्यत्' इति रूपम्।

'निवृत्तप्रेषणाद्धातोर्हेतुमण्णौ शुद्धेन तुल्योऽर्थः'—ननु 'प्रार्थयन्ति शयनोत्थितं प्रियाः' इति माघकाव्ये प्रार्थयन्तीति न चौरादिकस्वार्थिकणिजन्तम्,

तस्य आगर्वीयतया आत्मनेपदप्रसङ्गात् । नापि हेतुमण्ण्यन्तम् । स्वाभीष्टं यावते इत्यर्थे तदसंभवात् । नहि प्रयोजकव्यापाराभावे तत्प्रवृत्तिरस्तीत्यत उच्यते—निवृत्तप्रेषणाद्धातोरिति । निवृत्तं प्रेषणं यस्मात् स निवृत्तप्रेषणः, सम्प्रति अविवक्षित-प्रेषण इत्यर्थः । तस्माद्धातोः भूतपूर्वगत्या प्रेषणमादाय हेतुमण्णौ कृते शुद्धेन णिज्विहितेन धातुना तुल्योऽर्थः प्रतीयते इत्यर्थः । तदुक्तम्—'निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजिष्यते' इति । इदञ्च 'णेरणौ' इति सूत्रे भाष्ये स्पष्टम् ।

प्रार्थयन्ति शयनोत्थितं प्रिया–इत्यस्य हि शयनादुत्थितं स्वभर्तारं प्रियाः प्रार्थयन्ते । वयस्याः प्रेरयन्तीति वयस्याः प्रियाभिः प्रार्थयन्तीति दशायां सख्या व्यापारत्यागे यादृशोऽर्थः शुद्धार्थधातोर्भवति तादृशोऽर्थो ण्यन्ते सत्यपि भवति । इत्यश्च प्रिया यौवनेन लज्जां विहाय स्वस्वभर्तारं पुनरागमनाय स्वयमेव प्रार्थयन्तीति वाक्यार्थो भवतीत्यलम् ।

**दूषयति** ( ई० ३९ )—देवदत्तो दुष्यति तं कश्चिद् प्रेरयति, इत्याद्यर्थे 'हेतुमति च' इति सूत्रेण 'दुष वैकृत्ये' अस्माद्धातोर्णिचि अनुबन्धलोपे 'दुष इ' इति स्थिते णिच आर्धधातुकत्वात्तस्मिन् दकारादुकारस्य 'पुगन्तलघूपधस्य च' इति सूत्रेण प्राप्तलघूपधगुणं प्रबाध्य 'दोषो णौ' इति सूत्रेण ऊत्वे 'सनाद्यन्ता धातवः' इति 'दूषि' इति णिजन्तस्य धातुसंज्ञायां लटि तिपि शपि अनुबन्धलोपे 'दूषि अ ति' इति स्थिते 'सार्वधातुकार्धधातुकयोः' इति गुणे अयादेशे 'दूषयति' इति सिद्धम् ।

चित्तविरागे तु—चित्तं दुष्यति = स्नानसन्ध्यादौ विरक्तं भवति, तत्प्रयोजयति कामः, इत्यर्थे णिचि 'वा चित्तविरागे' इति सूत्रेण लघूपधगुणं प्रबाध्य विभाषया ऊत्वे णिजन्तस्य धातुसंज्ञायां लटि, तिपि, शपि, अनुबन्धलोपे गुणे अयादेशे 'दूषयति' इति । ऊत्वाभावे लघूपधगुणे 'दोषयति' इत्यपि भवति ।

इति ण्यन्यप्रकरणम् ।

## अथ सन्नन्तप्रकरणम्

**पिपठिषितुमिच्छति** ( ई० ४२ )—इति विग्रहे सन्न भवति, सन्विधायके भाष्ये– 'शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः । सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ॥' इत्युक्तत्वात् । नन्वेवं 'जुगुप्सिषते' इत्यादौ कथं सन्नन्तात् सन्निति चेत् ? सत्यम् , 'सन्नन्तान्न सनिष्यते' इत्यत्र शब्दतो वैरूप्यस्याऽसम्भवेन अर्थद्वारकमेव

सारूप्यस्य ग्रहणात् । तेन इच्छासन्नन्तादिच्छा सन्नेति लभ्यते । एवञ्च 'गुप्तिज्कि-द्भ्यः सन्' इत्यादिसूत्रेण विहितस्वार्थसन्नन्तात्तु इच्छासन् भवत्येवेति दिक् ।

मीमांसितुमिच्छति ( ई० ४२ )—इति विग्रहे तु सन् भवत्येव । 'शैषि-कान्मतुबर्थीयाच्छैषिको मतुबर्थिकः । सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ॥' इति सन्विधायकभाष्ये तु शब्दतो वैरूप्यस्याऽसम्भवेन अर्थद्वारकमेव सारूप्यस्य ग्रहणात् । इच्छासन्नन्तादिच्छासन्नेत्येव लभ्यत्वेन 'मान्बधदान्शान्भ्यो०' इति विहितस्वार्थसन्नन्ताद् इच्छासनो निर्बाधत्वात् ।

ईर्ष्यतेस्तृतीयस्येति ( ई० ३६,४६ )—अयमाशयः—'ईर्ष्यतेस्तृतीयस्येति वक्तव्यम्' इति वार्तिके तृतीयव्यञ्जनस्य तृतीयैकाचश्च द्वित्वं भवति । ततश्च तृतीय-व्यञ्जनस्य द्वित्वपक्षे व्यञ्जनापेक्षया तृतीयव्यञ्जनं यकारस्तत्सहितस्य 'यि' इत्येकाचो द्वित्वे णिलोपे च कृते 'ऐर्ष्यियत्' इति रूपं सिद्ध्यति । तृतीयैकाचो द्वित्वपक्षेऽत्र तृतीयैकाचोऽभावेन वार्तिकाप्रवृत्तौ 'अजादेर्द्वितीयस्य' इति 'ष्य' शब्दस्य द्वित्वे यलोपादिकार्ये च कृते 'ऐर्षिष्यत्' इति रूपम् । एवञ्च 'ऐर्ष्यियत्' इति रूपसिद्ध्यर्थं वार्तिकम् । 'ऐर्षिष्यत्' इति तु–'अजादेर्द्वितीयस्य' इत्यनेनैव सिद्धमिति दिक् ।

जिघत्सति—अत्तुमिच्छतीत्यर्थे 'अद्' धातोः 'धातोः कर्मणः–' इति सनि 'लुङ्सनोर्घस्लृ' इति अदो घस्लादेशे अनुबन्धलोपे 'एकाच उपदेशेऽनुदात्तात्' इति इटो निषेधे 'सन्यङोः' इति द्वित्वे अभ्यासत्वे 'हलादिः शेषः' इत्यभ्याससका-रस्य लोपे 'कुहोश्चुः' इत्यभ्यासघकारस्य झत्वे 'अभ्यासे चर्च' इति झस्य जत्वे 'सन्यतः' इत्यभ्यासाऽकारस्य इत्वे 'सः स्यार्धधातुके' इति सस्य तकारे 'सनाद्यन्ता धातवः' इति धातुत्वाल्लटि तिपि शपि अनुबन्धलोपे 'अतो गुणे' इति पररूपे उक्तं रूपं निष्पन्नम् ।

चिकीर्षति ( ई० ४७ )—कर्तुमिच्छतीति विग्रहे कृधातोः 'धातोः कर्मणः–' इति सनि अनुबन्धलोपे 'एकाच उपदेशेऽनुदात्तात्' इतीण्निषेधे 'अज्झनगमां सनि' इति दीर्घे 'इको झल्' इति कित्वाद्गुणाऽभावे 'ऋत इद्धातोः' इति इत्वे रपरत्वे 'किर्स' इति स्थिते 'सन्यङोः' इति द्वित्वे अभ्यासत्वे 'हलादिः शेषः' इत्यभ्यास-रेफस्य लोपे 'कुहोश्चुः' इति चुत्वे 'हलि च' इति दीर्घे षत्वे 'सनाद्यन्ता धातवः' इति धातुत्वाल्लटि तिपि शपि पररूपे 'चिकीर्षति' इति जातम् ।

**बुभूषति**—भूधातोः इच्छार्थे सनि 'सनि ग्रहगुहोश्च' इति इण्निषेधे 'इको झल्' इति कित्त्वाद्गुणाऽभावे 'सन्यङोः' इति द्वित्वे अभ्यासत्वे 'ह्रस्वः' इत्यभ्यासोकारस्य ह्रस्वे 'अभ्यासे चर्च' इति अभ्यासभकारस्य बत्वे षत्वे 'सनाद्यन्ताः' इति धातुत्वाल्लटि तिपि शपि पररूपे 'बुभूषति' इति ।

**जिघांसति** ( ई० ३२ )—हन्तुमिच्छतीति विग्रहे हन्धातोः सनि 'अज्झनगमां सनि' इति दीर्घे 'सन्यङोः' इति द्वित्वे अभ्यासत्वे ह्रस्वे हलादिशेषे 'सन्यतः' इतीत्त्वे 'अभ्यासाच्च' इति कुत्वे 'नश्च' इत्यनुस्वारे 'जिघांस्' इति स्थिते 'सनाद्यन्ताः–' इति धातुत्वाल्लटि तिपि शपि पररूपे 'जिघांसति' इति ।

**जिघृक्षति** ( ई० ४१, ४३ )—'ग्रह् धातोः 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' इति सनि अनुबन्धलोपे सनः आर्धधातुकत्वात् इटि प्राप्ते 'सनि ग्रहगुहोश्च' इति निषेधे धातुसंज्ञायां लटि तिपि शपि 'रुदविदमुषग्रहिस्वपिप्रच्छः संश्च' इति सनः कित्त्वेन 'ग्रहिज्यावयिव्यधिवष्टिविचतिवृश्चतिपृच्छतिभृज्जतीनां ङिति च' इति सम्प्रसारणे पूर्वरूपे 'सन्यङोः' इति द्वित्वे अभ्याससंज्ञायाम् 'उरत्' इति अत्वे हलादिशेषे 'कुहोश्चुः' इति चुत्वे 'सन्यतः' इति इत्त्वे सति हकारादिणः परस्य सस्य षत्वं प्राप्तं तस्यासिद्धत्वात् हस्य ढत्वे 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' इति भष्भावे 'षढोः कः सि' इति ककारे षत्वे पररूपे 'जिघृक्षति' इति ।

**जुघुक्षति** ( ई० ५७ )—गूहितुमिच्छतीति विग्रहे ऊकारेत्संज्ञकगूह्धातोः सनि 'हलन्ताच्च' इति सनः कित्वाद् गुणाऽभावे 'सनि ग्रहगुहोश्च' इति ऊदित्वात्प्राप्तेटो निषेधे 'गूह् स' इति स्थिते दकारादिणः परस्य सस्य षत्वे प्राप्ते तं प्रबाध्य हस्य ढत्वे 'एकाचः–' इति गस्य भष्भावे 'सन्यङोः' इति द्वित्वे अभ्यासत्वे हलादिशेषे 'अभ्यासे चर्च' इति गस्य जत्वे 'षढोः कः सि' इति कत्वे षत्वे धातुत्वाल्लटि तिपि शपि पररूपे 'जुघुक्षति' इति ।

**जिगलिषति** ( ई० ४५ )—गिलितुमिच्छतीति विग्रहे सनि द्वित्वे अभ्यासत्वे उरदत्वे हलादिशेषे गस्य जत्वे 'सन्यतः' इतीत्वे 'किरश्च पञ्चभ्यः' इति इटि 'सार्वधातुकार्धधातुकयोः' इति गुणे रपरत्वे 'अचि विभाषा' इति गिरतेः रेफस्य लत्वे सन्नन्तस्य धातुत्वाल्लटि तिपि शपि पररूपे उक्तं रूपं सिद्धम् । लत्वाऽभावपक्षे 'जिगरिषति' इति । 'वृतो वा' इति इटो दीर्घस्तु न, 'अत्रेटो दीर्घो नेष्टः' इति वार्तिकेन तन्निषेधात् ।

**दुद्यूषति-दिदेविषति** ( ई० ४३, ५७ )—दिव्यतुमिच्छतीति विग्रहे दिव् धातोः सनि 'सनीवन्तर्ध-' इति इटि अझलादित्वेन 'इको झल्' इत्यस्याप्रवृत्त्या कित्त्वाऽभावे लघूपधगुणे 'सन्यङोः' इति द्वित्वे अभ्यासत्वे हलादिशेषे ह्रस्वे च कृते 'सन्यतः' इति इत्वे सस्य षत्वे सन्नन्तस्य धातुत्वाल्लटि तिपि शपि पररूपे 'दिदेविषति' इति । इडभावपक्षे 'च्छ्वोः शूडनुनासिके च' इति वस्य ऊठि दकारादिकारस्य यणि 'द्यू स' इति स्थिते 'सन्यङोः' इत्यनेन 'द्यू' इत्यस्य द्वित्वे अभ्यासत्वे हलादिशेषे 'अज्झनगमां सनि' इति पर्जन्यवल्लक्षणप्रवृत्त्या दीर्घे षत्वे सन्नन्तस्य धातुत्वाल्लटि तिपि शपि पररूपे 'दिद्यूषति' इति ।

**ईप्सति** ( ई० ४३, ५५ )—आप्तुमिच्छतीति विग्रहे लृकारेत्संज्ञक 'आप्' धातोः सनि 'सन्यङोः' इति द्वित्वात् पूर्वम् 'आप्ज्ञप्यृधामीत्' इति ईत्वे ततो द्वित्वे अभ्यासत्वे 'अत्र लोपोऽभ्यासस्य' इति अभ्यासलोपे सन्नन्तस्य धातुत्वाल्लटि तिपि शपि पररूपे 'ईप्सति' इति ।

**अर्दिधिषति** ( ई० ५० )—अर्धितुमिच्छतीति विग्रहे ऋधुधातोः सनि 'सनीवन्तर्ध-' इति विभाषया इटि सनः सादित्वाभावात् ईत्वाभावे गुणे रपरत्वे 'अर् ध् इ स' इति स्थिते 'सन्यङोः' इति 'धिस्' इत्यस्य द्वित्वे अभ्यासत्वे हलादिशेषे धस्य जश्त्वे सन्नन्तस्य धातुत्वाल्लटि तिपि शपि षत्वे पररूपे 'अर्दिधिषति' इति ।

**दिदम्भिषति** ( ई० ४३ )—दम्भितुमिच्छतीति विग्रहे सनि 'सनीवन्तर्ध-' इति इटि, इट्पक्षे सनो झलादित्वाभावेन कित्त्वाऽभावात् नलोपाभावे 'सन्यङोः' इति 'दम्भ्' इत्यस्य द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'सन्यतः' इत्यभ्यासस्य इत्वे सन्नन्तस्य धातुत्वाल्लटि तिपि शपि पररूपे षत्वे 'दिदम्भिषति' इति । 'अत्र लोपोऽभ्यासस्ये'त्यनेनात्र अभ्यासलोपस्तु न भवति, 'सनि मीमे'ति, 'आप्ज्ञप्यृधामी'दिति, 'दम्भ इच्चे'ति 'मुचोऽकर्मकस्ये'ति च विहितकार्यं यत्रोक्तं तत्रैवास्य प्रवृत्तेरिति सिद्धान्तात् । इडभावपक्षे—'धिप्सति-धीप्सति' इति ।

**धिप्सति** ( ई० ४३, ४६, ५४ )—दम्भितुमिच्छतीति विग्रहे सनि 'सनीवन्तर्ध' इति इडभावे 'दम्भ इच्च' इति इत्वपक्षे 'दिम्भ् स' इति स्थिते 'हलन्ताच्च' इत्यत्र हल्ग्रहणस्य जातिपरत्वेन कित्वात् नलोपे 'एकाचो बशः–' इति दस्य धत्वे भस्य चर्त्वेन पत्वे 'धिप्स्' इति सन्नन्तस्य द्वित्वे 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपे धातुत्वाल्लटि तिपि शपि पररूपे 'धिप्सति' इति । ईत्वपक्षे 'धीप्सति' इति ।

**तितनिषति-तितांसति-तितंसति** ( ई० ३६, ४३, ४४ )—तनितुमिच्छतीति विग्रहे तनोतेः सनि 'तनिपतिदरिद्रातिभ्यः सनो वा इड् वाच्यः' इति वार्तिकेन इटि द्वित्वे अभ्यासत्वे हलादिशेषे 'सन्यतः' इति इत्वे षत्वे सन्नन्तस्य धातुत्वाल्लटि तिपि शपि पररूपे 'तितनिषति' इति । इडभावे तु 'तनोतेर्विभाषा' इत्युपधायाः दीर्घे द्वित्वे अभ्यासत्वे हलादिशेषे अभ्यासाकारस्य ह्रस्वे 'सन्यतः' इति इत्वे नस्यानुस्वारे सन्नन्तस्य धातुत्वाल्लटि तिपि शपि पररूपे 'तितांसति' इति । दीर्घाऽभावे 'तितंसति' इति ।

**जुगुप्सते**—गुपेर्निन्दायां 'गुप्तिज्किद्भ्यः सन्' इति स्वार्थे सनि द्वित्वे अभ्यासत्वे हलादिशेषे नस्य चुत्वे 'हलन्ताच्च' इति कित्वाद्गुणाऽभावे 'पूर्ववत्सनः' इति आत्मनेपदे तङि टेरेत्वे शपि पररूपे 'जुगुप्सते' इति ।

**दीदांसति**—दानेरार्जवेऽर्थे तस्मात् 'मान्बधदान्शान्भ्यो दीर्घश्चाभ्यासस्य' इति स्वार्थे सनि द्वित्वादिकार्योत्तरमभ्यासस्येकारस्य दीर्घे च कृते नस्यानुस्वारे सन्नन्तस्य धातुत्वाल्लटि तिपि शपि पररूपे 'दीदांसति' इति ।

**ईर्त्सति** ( ई० ४१, ५१ )—अर्द्धितुमिच्छति इति विग्रहे 'ऋध्' धातोः 'धतोः कर्मणः समानकर्तृकादिच्छायां वा' इत्यनेन सनि 'आप्ज्ञप्यृधामीत्' इति ईत्वे रपरत्वे ईर्ध् + स इति स्थिते 'पूर्वत्रासिद्धीयमद्वित्वे' इति वचनात् पूर्वं चर्त्वे ततः 'नन्द्राः' इति रेफं वर्जयित्वा 'अजादेर्द्वितीयस्ये'ति 'त्स' इत्यस्य द्वित्वे अभ्यास-संज्ञायाम् 'अत्र लोपोऽभ्यासस्य' इति अभ्यासस्य लोपे 'सनाद्यन्ता धातवः' इति धातुसंज्ञायां लटि तिपि शपि 'अतो गुणे' इति पररूपे 'ईर्त्सति' इति । 'सनीवन्तर्धे'ति इट् पक्षे तु—'अर्दिधिषति' इति बोध्यम् ।

**अरिरिषति** (ई० ४१,४२,४५,५४)—'ऋ' धातोः 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' इति सनि अनुबन्धलोपे आर्धधातुकसंज्ञायां 'स्मिपूङ्रञ्ज्वशां सनि' इति इडागमे गुणे रपरे अरि + स् इति स्थिते 'अजादेर्द्वितीयस्य' इति रिस् शब्दस्य 'सन्यङोः' इत्यनेन द्वित्वे अभ्याससंज्ञायां 'हलादिः शेषः' इति सलोपे 'सनाद्यन्ताः' इति धातुसंज्ञायां लटि तिपि अनुबन्धलोपे सार्वधातुकसंज्ञायां शपि पररूपे षत्वे 'अरिरिषति' इति । ननु 'द्विर्वचनेची'ति निषेधात् इडागमोत्तरं कथं गुण इति वाच्यम्, इसो द्वित्वकार्यित्वेन 'कार्यमनुभवन्हि'ति परिभाषया निमित्तत्वाभावेन 'द्विर्वचनेची'त्यस्याप्राप्तेः ।

( ई० ५४ )—'ञि ष्वप् शये' इति धातुः, तस्मात् 'धात्वादेः षः सः' इति सत्वे कृते 'रुदविदमुषग्रहिस्वपि प्रच्छः संश्च' इति सनि द्वित्वादिके कृते सनः कित्त्वात् 'वचिस्वपि–' इति सम्प्रसारणे पूर्वरूपे कित्त्वाद् गुणाभावे सन्नन्तस्य धातुत्वाद् लटि तिपि शपि पररूपे षत्वे 'सुषुप्सति' इति ।

**चिकरिषति** ( ई० ५८ )—कृधातोः 'किरश्च पञ्चभ्यः' इति सनि इटि द्वित्वेऽभ्यासत्वे उरदत्वे हलादिशेषे चुत्वे सन्नन्तस्य धातुत्वात् लटि तिपि शपि पररूपे षत्वे उक्तं रूपं सिद्धम् ।

**जुघुक्षति** ( ई० ५७ )—गुह्धातोः सनि द्वित्वेऽभ्यासत्वे हलादिशेषे गस्य जत्वे हस्य ढत्वे भष्भावे ढस्य कत्वे षत्वे सन्नन्तस्य धातुत्वाल्लटि तिपि शपि पररूपे उक्तं रूपं सिद्धम् । सनः इट् तु न, 'हलन्ताच्च' इति सनः कित्त्वेन 'सनि ग्रहगुहोश्च' इति निषेधात् ।

**जिगमिषति** ( ई० ४४, ५६ )—एतुमिच्छति-जिगमिषति । इण्धातोः सनि 'सनि च' इति इणो गमादेशे 'सन्यङोः' इति द्वित्वे अभ्यासत्वे हलादिशेषे चुत्वे सन्नन्तस्य धातुत्वाल्लटि तिपि शपि 'गमेरिट्परस्मैपदेषु' इति इटि षत्वे पररूपे 'जिगमिषति' इति ।

**सुस्यूषति** ( ई० ४० )—सिवुधातोः सनि 'सनीवन्तर्ध' इत्यादिना इडभावपक्षे 'हलन्ताच्चे'ति कित्त्वात् 'च्छ्वोः शूडि'ति वकारस्य ऊठि सकारादिकारस्य यणि द्वित्वादिकार्ये 'सुस्यूषति' इति सिद्धं रूपं निष्पन्नम् । यत्तु अभ्यासेणः परस्य सस्य षत्वे 'सुष्यूषति' इत्युक्तं तन्न मनोरमम् , 'स्तौतिण्योरेव षण्यभ्यासात्' इत्यनेन—अभ्यासेणः परस्य चेत्सस्य षत्वं तर्हि स्तौतिण्यन्तयोरेवेति नियमनात् ।

**परिषिषिक्षति** ( ई० ४० )—अयं षकारद्वयघटितप्रयोग एव साधुः । यत्तु 'सुस्यूषति' इति वदिहापि 'स्तौतिण्योरेव षण्यभ्यासात्' इत्यनेन निषेधात् षभूते सनि 'इण् गतौ' इति धातोः परस्य सस्य षत्वं नेत्युक्तं तन्न, मध्येऽपवादन्यायेन 'आदेशप्रत्यययोः' इत्यनेन प्राप्तषत्वस्यैव तेन बाधात् । 'स्थादिष्वभ्यासेन चाभ्यासस्य' इत्यनेन षत्वं तु भवत्येवेति दिक् ।

**जिगीषति** ( ई० ३६ ) जेतुमिच्छतीति विग्रहे जिधातोः 'धातोः कर्मणः समानकर्तृकादिच्छायां वा' इत्यनेन सनि अनुबन्धलोपे 'सन्यङोः' इत्यनेन द्वित्वे

'अज्झनगमां सनि' इत्यनेन दीर्घे 'सन्लिटोर्जेः' इत्यनेन अभ्यासात्परस्य जकारस्य कुत्वेन गकारे 'सनाद्यन्ता धातवः' इत्यनेन सन्नन्तस्य धातुसंज्ञायां लटि, तिपि शपि, अनुबन्धलोपे 'अतो गुणे' इत्यनेन पररूपे 'आदेशप्रत्यययोः' इति षत्वे 'जिगीषति' इति सिद्धम् ।

तितंसति ( ई० ३६ )—उकारेत्संज्ञकतनुधातोः इच्छार्थे 'धातोः कर्मणः' इत्यादिसूत्रेण सनि 'सन्यङोः' इति द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'सन्यतः' इत्यनेन अभ्यासाकारस्य इत्वे 'सनाद्यन्ता धातवः' इति सन्नन्तस्य धातुसंज्ञायां लटि तिपि शपि अनुबन्धलोपे 'तनिपतिदरिद्रातिभ्यः सनो वा इड्वाच्यः' इति वार्तिकेन विभाषया इटि इणः परस्य सस्य षत्वे 'अतो गुणे' इति पररूपे 'तितनिषति' इति । इडभावे—'तनोतेर्विभाषा' इत्यनेन विभाषया दीर्घे नस्यानुस्वारे 'तितांसति' इति । दीर्घाऽभावे—'तितंसति' इत्यपि भवति ।

उपधाकार्यं द्वित्वात्प्रबलम् ( ई० ३७ )—अयम्भावः—इष् धातोः सनि इटि कृते हलादित्वाऽभावेन 'रलो व्युपधाद्धलादेः संश्च' इत्यनेन कित्वाऽप्राप्तौ गुणे 'एष् इ स' इति स्थिते 'अजादेर्द्वितीयस्य' इत्युक्तत्वात् 'षिस्' इत्यस्य द्वित्वे अभ्याससंज्ञायां हलादिशेषे सनः सकारस्य षत्वे सन्नन्तस्य धातुत्वाल्लटि तिपि शपि पररूपे 'एषिषिषति' इति रूपं सिद्धम् । नन्विह सत्यपि कित्त्वे नित्यत्वात् परमपि गुणं बाधित्वा 'षिस्' इत्यस्य द्वित्वे धात्ववयवस्य इकारस्य उपधात्वाऽभावादेव गुणाऽप्रसक्तेर्हलादेरति व्यर्थमिति चेन्न, इह नित्यमपि द्वित्वं गुणेन बाध्यते, उपधाकार्यं हि द्वित्वात् प्रबलम्—ओणेॠदित्करणस्य सामान्यापेक्षज्ञापकात् । तथाहि 'ओणृ' धातोः ण्यन्ताल्लुङि चङि 'णौ चङ्युपधाया ह्रस्वः' इति ह्रस्वस्य 'नाग्लोपिशास्वृदिताम्' इति निषेधे सति 'ओणि अ त्' इति स्थिते 'णि' शब्दस्य द्वित्वे 'मा भवानोणिणत्' इति रूपम् । अत्रोपधाह्रस्वनिषेधार्थमोणेः ॠदित्करणम् । उपधाह्रस्वे कृते तु 'उण् इ अ त्' इति स्थिते 'णि' शब्दस्य द्वित्वे 'मा भवानुणिणत्' इति स्यात् । ओकारो न श्रूयेत । यदि तु नित्यत्वादुपधाह्रस्वात् प्रागेव 'ओण् इ अ त्' इति दशायां द्वित्वं स्यात्, तदा ओकारस्योपधात्वाभावादेव ह्रस्वाऽप्रसक्तेस्तन्निषेधार्थम् ॠदित्करणमनर्थकं स्यात् । तस्मादुपधाह्रस्वात्मकम् उपधाकार्यं द्वित्वात्प्रबलमिति विज्ञायते ।

प्रतीषिषति ( ई० ४५ )—बोधयितुमिच्छति इति विग्रहे प्रतिपूर्वात् इण्-

धातोः सनि सन्नन्तस्य 'सनाद्यन्ताः' इत्यनेन धातुसंज्ञायां लटि तिपि शपि 'प्रति इ स अ ति' इति स्थिते 'अजादेर्द्वितीयस्य' इति सनो द्वित्वे अभ्यासस्य ह्रस्वे प्रतिना सवर्णदीर्घे सकारद्वयस्य प्रत्ययावयवत्वात् षत्वे 'अतो गुणे' इति पररूपे 'प्रतीषिषति' इति सिद्धम् ।

'सनि च' इत्यनेन गम्यादेशस्तु न, तत्र सूत्रे 'णौ गमिरबोधने' इत्यतः 'गमिरबोधने' इत्यनुवर्त्तनात् । एवञ्च गन्तुमिच्छति इति विग्रहे एव गम्यादेशे 'जिगमिषति' इति भवति ।

**उचिच्छिषति** ( ई० ४५ )—'उच्छी विवासे' अत्र 'छे च' इति तुकि कृते श्चुत्वेन 'उच्छ्' इति निष्पन्नं भवति । तस्मात् सनि सन्नन्तस्य 'सनाद्यन्ताः' इति धातुसंज्ञायां लटि तिपि शपि सनः इटि 'उच्छ् इ स अ ति' इति स्थिते 'पूर्वत्रासिद्धीयमद्वित्वे' इति निषेधात् द्वित्वे कर्त्तव्ये श्चुत्वस्य निषेधाभावेन 'च्छिस्' इत्यस्य द्वित्वे अभ्याससंज्ञायां हलादिशेषेण छकारसकारयोर्निवृत्तौ 'उचिच्छिस अ ति' इति स्थिते सकारस्य प्रत्ययावयवत्वात् षत्वे पररूपे 'उचिच्छिषति' इति सिद्धम् ।

**एषिषिषति** ( ई० ४६ )—'रलो व्युपधाद्धलादेः संश्च' इति सूत्रस्य प्रत्युदाहरणमेतत् । तत्र हि हलादेरित्यस्याभावे इष्-धातोः सनि इटि 'इष् इ स' इति स्थिते 'रलो व्युपधादि'ति कित्त्वेन गुणनिषेधात् 'एषिषिषति' इति रूपं न स्यात् । तद्ग्रहणे कृते तु इष्धातोः सनि इटि हलादित्वाऽभावेन कित्वाऽभात् गुणे 'अजादेर्द्वितीयस्ये'ति 'षिस्' इत्यस्य द्वित्वे अभ्याससंज्ञायां हलादिशेषे सनः सकारस्य षत्वे लटि तिपि शपि पररूपे 'एषिषिषति' इति सिद्धम् । नचाऽत्र नित्यत्वात् पूर्वं द्वित्वं कुतो नेति वाच्यम् , ओणृधातौ ऋकारोच्चारणेन 'उपधाकार्यं हि द्वित्वात् प्रबलम्' इति सामान्यतो बोधितत्वात् ।

**ज्ञीप्सति** ( ई० ४६, ४९ )—'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्' इति सूत्रे ज्ञपिः पुगन्तो मित्संज्ञकः, पकारान्तश्चौरादिकश्च । तत्र घटादिस्थात् मारणतोषणनिशामनार्थात् ज्ञाधातोः हेतुमण्णिचि पुकि घटादित्वेन मित्वादुपधाह्रस्वे 'ज्ञपि' इति, तस्मादथवा 'ज्ञप मिच्चे' ति यः स्वतः पठितश्चुरादौ, तस्माण्णिचि उभयविधादपि ण्यन्ताज्ज्ञपिधातोः सनि 'सनीवन्तर्धे'ति इडभावपक्षे णेः परस्य सनः 'इको झल्' इति कित्वात्तस्मिन्परे णेर्गुणाभावे 'ज्ञप् इ स' इति स्थि

'अज्झनगमां सनि' इति प्राप्तदीर्घं परत्वाद् बाधित्वा 'णेरनिटि' इति णिलोपे 'आप्ज्ञप्यृधामीत्' इति ईत्त्वे 'ज्ञीप्' इत्यस्य द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'अत्र लोपोऽभ्यासस्य' इति अभ्यासलोपे लटि तिपि शपि पररूपे 'ज्ञीप्सति' इति । इट्-पक्षे तु—'जिज्ञपयिषति' इति बोध्यम् ।

ऊर्णुनुविषति ( ई० ४४, ४७ )—ऊर्णुधातोः सनि 'सनीवन्तर्धभ्रस्जदम्भुश्रिस्वृयूर्णुभरज्ञपिसनाम्' इति विकल्पेन इटि 'विभाषोर्णोः' इत्यनेन ङित्वपक्षे गुणाभावात् 'नु' शब्दस्य द्वित्वे उत्तरखण्डे उवङि च कृते सन्नन्तस्य धातुत्वाल्लटि तिपि शपि पररूपे षत्वे 'ऊर्णुनुविषति' इति । ङित्त्वाभावपक्षे गुणाऽवादेशयोः 'ऊर्णुनविषति' इति । इडभावपक्षे 'नन्द्राः' इति निषेधात् 'नुस्' शब्दस्य द्वित्वे 'इको झल्' इत्यनेन सनः कित्त्वात् गुणाभावे 'अज्झनगमां सनि' इति दीर्घे 'ऊर्णुनूषति' इति ।

नन्वत्र परत्वात् गुणाऽवादेशयोः कृतयोः अभ्यासे उकारस्य श्रवणं न स्यादिति चेन्न, 'द्विर्वचनेची'ति गुणनिषेधात् । नचात्र 'सन्यङोः' इति सन्नन्तस्य द्वित्वं प्रति कार्यित्वादिटो निमित्तत्वं न स्यादिति वाच्यम् , इटो द्वित्वरूपकार्यत्वाऽभावेन निमित्तत्वात् । अत्र 'सन्यङोः' इति सूत्रेण प्रथमतः सन्नन्तसमुदायस्य द्वित्वरूपकार्यं प्राप्तं भवति, परन्तु 'अजादेर्द्वितीयस्ये'ति बलेन नुशब्दस्यैव द्वित्वरूपकार्यं भवति न्त्विटः । इत्थं च 'कार्यमनुभवन्नि'ति परिभाषाया अवसर एव नास्तीति भावः ।

'यत्र कार्यमनुभवन् कार्यी प्रवर्तते तत्रैव कार्यी निमित्तत्वेन न स्वीक्रियते' इति परिभाषार्थः । अत्र 'यदागमाः' इति परिभाषया इड्रूपः सन् द्वित्वन्नानुभवति ।

उचिच्छिषति ( ई० ४७, ४८ )—उच्छ्धातोः सनि सन्नन्तस्य धातुत्वाल्लटि तिपि शपि सनः इटि 'पूर्वत्रासिद्धीयमद्वित्वे' इति निषेधात् द्वित्वे कर्तव्ये श्चुत्वस्य निषेधाऽभावेन 'च्छिस्' इत्यस्य द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'उचिच्छिस अ ति' इति स्थिते सकारस्य षत्वे पररूपे 'उचिच्छिषति' इति ।

नचात्र 'निमित्तापाये'ति परिभाषया छलोपे सति तुकोऽपि निवृत्तिः स्यादिति वाच्यम् , 'आख्यानात्' इत्यादिवार्तिके प्रकृतिप्रत्ययापत्तिवचनेन 'च्छ्वोः शूडनुनासिके च' इति सूत्रे तुग्विशिष्टछकारपाठेन च परिभाषाया अनित्यत्वज्ञापनात् । यदि परिभाषायाः प्रवृत्तिः सर्वत्र स्यात्तदा छकारस्य शकारे कृते तुको निवृत्तिः

परिभाषयैव स्यादिति सूत्रे वुग्ग्रहणं व्यर्थमेव। तदेव व्यर्थं सदुक्तपरिभाषाया अनित्यत्वे प्रमाणं भवतीति दिक्।

पिपविषते (ई० ३६)—पवितुमिच्छतीति विग्रहे ङकारेत्संज्ञक 'पू' धातोः सनि 'सन्यङोः' इत्यनेन द्वित्वे अभ्याससंज्ञायाम् 'ओः पुयण्ज्यपरे' इत्यनेन अभ्यासोकारस्य इत्वे 'स्मि पूङ् ऋ अञ्जू अश् एभ्यः सन इट् स्यादित्यर्थक' 'स्मिपूङ्रञ्ज्वशां सनि' इत्यनेन इटि गुणे अवादेशे 'सनाद्यन्ताः' इत्यनेन धातुत्वाल्लटि तत्स्थाने तप्रत्यये शपि एत्वे सकारस्य इणः परत्वात् षत्वे पररूपे 'पिपविषते' इति।

स्तौतिण्योरिति सूत्रे (ई० ४४)—एवकारस्य प्रयोजनम्—अत्र सूत्रे एवकारग्रहणं ज्ञापयति—'अभ्यासेणः परस्य सस्य षत्वञ्चेत्? तर्हि स्तौतिण्यन्तयोरेव'। न च 'आदेशप्रत्यययोः' इत्येव षत्वे सिद्धे आरम्भसामर्थ्यादेव नियमलाभादेवकारो व्यर्थ एवेति वाच्यम्? 'षण्येवे'ति नियमनिरसनार्थं तस्यावश्यकत्वात्, अन्यथा 'तुष्टाव' इत्यत्र षत्वाऽनापत्तेरिति दिक्।

चुक्षावयिषति (ई० ४०)—अयंभावः, 'ओः पुयण्ज्यपरे' इति सूत्रस्थपवर्गयण्जकारग्रहणेन 'णिच्यच आदेशो न स्याद् द्वित्वे कर्तव्ये' इति ज्ञापनात् 'चुक्षावयिषति' इत्यत्र णौ द्वित्वात् प्रागन्तरङ्गत्वात् वृद्धयावादेशौ न भवतः। ज्ञापनप्रकारस्तु चुरादौ द्रष्टव्यः।

तत्र हि—'ओः पुयण्ज्यपरे' इति सूत्रस्य—पिपावयिषति, बिभावयिषति, यियावयिषति, रिरावयिषति, लिलावयिषति, जिजावयिषति, इत्युदाहरणेषु द्वित्वं प्रत्ययनिमित्ते णिचि 'द्विर्वचनेऽचि' इति निषेधाऽप्रवृत्त्या द्वित्वात् प्रागेव परत्वाद्वृद्धयावादेशयोः कृतयोरभ्यासेऽवकारस्य ह्रस्वे सति 'सन्यतः' इत्येवेत्वसिद्धेः पवर्गयण्प्रत्याहारजकारग्रहणं व्यर्थम्। 'ओः पयपरयोरि'त्येव सूत्रमस्तु। पिपावयिषति, यियावयिषति, इत्यत्रोक्तरीत्या 'सन्यतः' इतीत्वसिद्धावपि—पिपविषति, यियविषति, इत्यत्र पूङ्धातोर्युधातोश्च अण्यन्तात् सनि अभ्यासे इत्वार्थं तदावश्यकत्वात्। वर्गप्रत्याहारजग्रहणन्तु व्यर्थमेव। एवञ्च व्यर्थं सत् 'णिच्यच आदेशो न स्याद् द्वित्वे कर्तव्ये' इति ज्ञापयति। ज्ञापिते त्वस्मिन्नर्थे 'विभावयिषति' इत्यादिषु णिचि लुप्ते सति 'चङि' इत्यनेन द्वित्वे कार्ये प्रत्ययलक्षणमाश्रित्य णिचि गुणावादेशयोः प्रतिषेधे सति उवर्णान्तानां द्वित्वेऽभ्यासेकाराभावेन 'सन्यतः' इत्य-

वादेशयोः प्रतिषेधे सति उवर्णान्तानां द्वित्वेऽभ्यासेऽकाराभावेन 'सन्यतः' इत्यस्याऽप्रवृत्त्या वर्णप्रत्याहारजग्रहणं स्वांशे चरितार्थम् । ज्ञापनफलन्तु—चुक्षावयिषति, तुतावयिषति, ऊर्णुनावयिषति, पुस्फारयिषति, इत्यादि ।

**मीमांसितुमिच्छति** ( ई० ४२ )—इति विग्रहे तु सन् भवत्येव । 'शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः । सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ॥' इत्यनेन सन्विधायकभाष्ये तुशब्दतो वैरूप्यस्याऽऽसम्भवेन अर्थद्वारकमेव सारूप्यस्य ग्रहणात् । इच्छासन्नन्तादिच्छासन्नेत्येव लभ्यत्वेन 'मान्बधदान्शान्भ्यो०' इत्यनेन विहितस्वार्थसन्नन्ताद् इच्छासनो निर्बाधत्वात् ।

**शैषिकान्मतुबर्थीयात्** ( ई० ४५, ४७, ५७ )—शेषाधिकारे विहितः शैषिकः । भवार्थे अध्यात्मादित्वात् ठञ् । शैषिकात् = शेषाधिकारभवप्रत्ययान्तात्, शैषिकः सरूपः प्रत्ययो न भवति । तेन शालायां भवः शालीयः 'वृद्धाच्छः' । तदन्तात् शालीये भवः इति वाक्यार्थे स छ एव न भवति, किन्तु वाक्यमेव । विरूपस्तु भवत्येव । अहिच्छत्रे भवः आहिच्छत्रः । भवार्थेऽण् । तदन्तादाहिच्छत्रे भवः इति वाक्यार्थे वृद्धाच्छो भवति । आहिच्छत्रीयः । एवं मतुबर्थीयात् सरूपो मतुबर्थकः प्रत्ययो न । धनवानस्यास्तीति मतुबन्तान्मतुब्न । विरूपस्तु स्यादेव, दण्डिमती शाला । इह मतुबन्तात् इन्प्रत्ययो भवत्येव । सन्नन्तात्सन्नेष्यते । अर्थद्वारा च सादृश्यम् । तेनेच्छासन्नन्तात्सन्न । स्वार्थसन्नन्तात्तु स्यादेव । जुगुप्सिषते । मीमांसिषते । इति ।

**कूलं पिपतिषति** ( ई० ५७ )—शङ्कितपतनं भवतीत्यर्थः । पत्धातोः 'आशङ्कायां सन् वक्तव्यः' इति वार्तिकेन सनि 'सन्यङोः' इति द्वित्वे अभ्यासत्वे हलादिशेषे 'सन्यतः' इतीत्त्वे 'तनिपतिदरिद्रातिभ्यः सनो वा इड्वाच्यः' इति वार्तिकेन इटि षत्वे सन्नन्तस्य धातुत्वाल्लटि तिपि शपि पररूपे उक्तं रूपं सिद्धम् । इडभावपक्षे 'पिपत्सति' इति रूपम् ।

**शिक्षति** ( ई० ५५ )—शक्लृधातोः सनि 'सन्यङोः' इति द्वित्वे अभ्यासत्वे 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपे 'सन्यतः' इतीत्त्वे सन्नन्तस्य धातुत्वाल्लटि तिपि शपि पररूपे ककारात् परस्य सस्य षत्वे 'शिशक्षति' इति । 'शक मर्षणे' इति दिवादिस्थात् सनि कृते 'शिक्षति,–शिक्षते' इति ।

ननु 'निरनुबन्धकग्रहणे न सानुबन्धकस्य' इति परिभाषया 'शक मर्षणे' इत्यस्यैव ग्रहणं स्यादिति चेन्न, अस्याः प्रत्ययग्रहणविषयकत्वात् ।

रित्सति ( ई० ५८ ) राध्धातोः सनि 'राधो हिंसायां सनीस् वाच्यः' इति इसि 'सन्यङोः' इति द्वित्वे अभ्यासत्वे 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपे धस्य चर्त्वे सन्नन्तस्य धातुत्वाल्लटि तिपि शपि पररूपे 'रित्सति' इति ।

मोक्षते (ई०५४)—मुच्धातोः सनि 'सन्यङोः' इति द्वित्वे अभ्यासत्वे 'अत्र लोपोऽभ्यासस्य' इत्यभ्यासलोपे 'मुचोऽकर्मकस्य गुणो वा' इति गुणे चस्य कुत्वे सस्य षत्वे सन्नन्तस्य धातुत्वाल्लटि तङि एत्वे शपि पररूपे 'मोक्षते' इति । पक्षे 'मुमुक्षते' इति ।

अधिजिगापयिषति ( ई० ४९, ५१ )—सन्परे चङ्परे च णौ इङो गाङ् वेत्यर्थक 'णौ च संश्चङोः' इति सूत्रेण इङो णौ विवक्षिते गाङि पुकि 'गापि' इति । तस्माद् अधिपूर्वकात् सनि द्वित्वे अभ्यासत्वे ह्रस्वत्वे हलादिशेषे गस्य जत्वे, 'सन्यतः' इति इत्त्वे सन्नन्तस्य धातुत्वाल्लटि तिपि शपि पररूपे इटि गुणेऽयादेशे च कृते उक्तं रूपं सिद्धम् ।

तुष्टूषति ( ई० ५५, ५७ )—स्तुधातोः सनि 'सन्यङोः' इति द्वित्वे अभ्यासत्वे हलादिशेषे अभ्यासोकारस्य ह्रस्वे 'स्तौतिण्योरेव षण्यभ्यासात्' इति सूत्रेण षत्वे ष्टुत्वे सन्नन्तस्य धातुत्वाल्लटि तिपि शपि पररूपे षत्वे उक्तं रूपं सिद्धम् ।

सुष्वापयिषति ( ई० ५० )—ष्वप्धातोः 'धात्वादेः षः सः' इति सत्वे 'स्वप्' इति तस्मात स्वपेर्णौ उपधावृद्धौ 'स्वापि' इति । तस्मात् सनि इटि 'सन्यङोः' इत्यनेन द्वित्वे अभ्यासत्वे हलादिशेषे आकारस्य ह्रस्वे 'द्युतिस्वाप्योः सम्प्रसारणम्' इति अभ्यासवकारस्य सम्प्रसारणे पूर्वरूपे अभ्यासोकारात् परस्य सस्य षत्वे णेरिकारस्य गुणेऽयादेशे सनः सकारस्य च षत्वे उक्तं रूपं सिद्धम् ।

इति सन्नन्तप्रकरणम्

## अथ यङन्तप्रकरणम्

बोभूयते ( ई० ४३ )—पुनः पुनः अतिशयेन वा भवतीति विग्रहे 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' इति यङि अनुबन्धलोपे 'सन्यङोः' इति द्वित्वे अभ्याससंज्ञायाम् 'अभ्यासे चर्च' इत्यनेन जश्त्वे 'गुणो यङ्लुकोः' इति अभ्यासोकारस्य गुणे 'बोभूय' इत्यस्य 'सनाद्यन्ता धातवः' इति धातुसंज्ञायां

लटि ङित्त्वादात्मनेपदे तप्रत्यये एत्वे शपि पररूपे 'बोभूयते' इति । 'क्रियासमभिहारे द्वे' इत्यनेन पुनर्द्वित्वन्तु न, तस्य लोड्विषयत्वादिति तत्र सूत्रे भाष्ये स्पष्टम् ।

**अबोभूयिष्ट**—पुनः पुनरतिशयेन वा अभूत् इति विग्रहे भूधातोः 'धातोरेकाचः–' इति यङि 'सन्यङोः' इति द्वित्वे अभ्यासत्वे ह्रस्वे 'गुणो यङ्लुकोः' इति गुणे 'अभ्यासे चर्च' इति भस्य बत्वे 'सनाद्यन्ताः–' इति धातुत्वाल्लुङि ङित्त्वादात्मनेपदे तप्रत्यये अटि च्लौ च्लेः सिचि इटि अनुबन्धलोपे 'अतो लोपः' इत्यल्लोपे षत्वे ष्टुत्वे तत्सिद्धिः ।

**सोसूच्यते** ( ई० ५५ )—ण्यन्तात् सूचीत्यस्मात् 'सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः' इति यङि णिलोपे 'सन्यङोः' इति द्वित्वे अभ्यासत्वे हलादिशेषे 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणे 'सनाद्यन्ताः–' इति धातुत्वात् लटि आत्मनेपदे तप्रत्यये एत्वे शपि पररूपे 'सोसूच्यते' इति । अनेकाच्त्वेन अषोपदेशोऽयं धातुः । षोपदेशत्वे तु 'धात्वादेः–' इति षस्य सत्वे कृते आदेशसकारत्वात् उत्तरखण्डस्य षत्वं स्यात् ।

**सोसूचिता** ( ई० ४४ )—'सूच पैशून्ये' इति चुरादिगणपठिताददन्तात् 'सूच' धातोः स्वार्थे णिचि अलोपे 'सूचि' इति, तस्मात् 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' इत्यनेन अनेकाच्त्वात् यङोऽप्राप्तया 'सूचि–सूत्रि–मूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः' इत्यनेन यङि णिलोपे 'सन्यङोः' इति द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'गुणो यङ्लुकोः' इत्यनेन अभ्यासोकारस्य गुणे यङन्तस्य 'सनाद्यन्ताः' इति धातुसंज्ञायां लुटि 'स्यतासी ऌलुटोः' इत्यनेन तासिप्रत्यये 'आर्द्धधातुकस्येड्वलादेः' इति इटि 'लुटः प्रथमस्ये' ति डादेशे टिलोपे 'सोसूच् य इ ता' इति स्थिते 'यस्य हलः' इत्यनेन यकारस्य लोपे 'अतो लोपः' इत्यनेन परिशिष्टस्य यकारोत्तराकारस्य लोपे 'सोसूचिता' इति । उत्तरखण्डस्य षत्वन्तु न, धातोरनेकाच्त्वेनाऽषोपदेशत्वादादेशसकाराऽभावात् ।

**अटाट्यते** ( ई० ४२ )—'अट् गतौ' इत्यस्याऽजादित्वेन 'धातोरेकाचो हलादेः' इत्यनेन यङोऽप्राप्त्या 'सूचि–सूत्रि–मूत्र्य–टयर्त्य–शूर्णोतिभ्यो यङ् वाच्यः' इति वार्तिकेन यङि 'सन्यङोः' इति 'टय' शब्दस्य द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'दीर्घोऽकितः' इत्यनेन अभ्यासस्य दीर्घे 'सनाद्यन्ता धातवः' इति धातुत्वात् लटि आत्मनेपदे तप्रत्यये टेरेत्वे च कृते 'अटाट्यते' इति ।

**अरारिता** ( ई० ३६, ५०, ५४ )—पुनः पुनः अतिशयेन वा अर्ता इति विग्रहे 'सूचिसूत्रिमूत्र्यट्यर्त्यशूर्णोतिभ्यो यङ् वाच्यः' इति वार्तिकेन यङि अनुबन्धलोपे 'यङि च' इति सूत्रेण गुणे 'अरार्यते' इति भाष्योदाहरणात् 'नन्द्राः संयोगादयः' इति द्वित्वनिषेधस्याऽप्रवृत्त्या सन्यङोः' इत्यनेन द्वितीयैकाचः 'र्य' इत्यस्य द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'दीर्घोऽकितः' इत्यनेन अभ्यासस्य दीर्घे यङन्तस्य 'सनाद्यन्ताः–' इति धातुत्वात् लुटि तिपि तिपो डादेशे 'यस्य हलः' इति यलोपे इटि उक्तं रूपं सिद्धम् ।

**वाव्रज्यते** ( ई० ४५, ४७ )—कुटिलं व्रजतीति विग्रहे व्रज्धातोः 'नित्यं कौटिल्ये गतौ' इति यङि 'सन्यङोः इति द्वित्वे अभ्यासत्वे हलादिशेषे 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घे 'सनाद्यन्ताः' इति धातुत्वाल्लटि तप्रत्यये शपि अनुबन्धलोपे पररूपे टेरेत्वे उक्तं रूपं जातम् ।

**वाव्रजाञ्चक्रे** ( ई० २७ )—व्रज्धातोर्यङि द्वित्वे अभ्यासकार्ये 'दीर्घोऽकितः' इति दीर्घे 'सनाद्यन्ताः–' इति धातुत्वाल्लिटि अनेकाच्त्वादाम्प्रत्यये 'वाव्रज् य आम् लिट्' इति स्थिते 'आदेः परस्ये'ति सहकारेण 'यस्य हलः' इत्यनेन यलोपे 'अतो लोपः' इत्यल्लोपे 'आमः' इति लिटो लुकि लिट्परककृञोऽनुप्रयोगे 'वाव्रज् आम् कृ लिट्' इति स्थिते लिटो लस्थाने तप्रत्यये तस्य एशि 'लिटि धातोरनभ्यासस्य' इति कृञो द्वित्वे अभ्यासकार्ये मस्यानुस्वारे परसवर्णे यणि 'वाव्रजाञ्चक्रे' इति ।

**चञ्चूर्यते** ( ई० ४०, ४७, ५६ )—गर्हितं चरतीति विग्रहे 'लुपसदचरजपजभदहदशगृभ्यो भावगर्हायाम्' इत्यनेन यङि 'सन्यङोः' इत्यनेन द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'चरफलोश्च' इत्यनेन नुकि ततः परसवर्णे कृते 'उत्परस्यातः' इत्यनेन अभ्यासोत्तरखण्डस्याकारस्योत्त्वे 'हलि चे'ति दीर्घे धातुत्वाल्लटि तङि शपि एत्वे पररूपे 'चञ्चूर्यते' इति ।

नचाऽत्र नुकि कृते झलपरत्वाऽभावेन अनुस्वाराऽभावात् परसवर्णः कथमिति वाच्यम्, 'नुगतोऽनुनासिकान्तस्ये'ति पूर्वसूत्रे 'यंयम्यते' 'रंरम्यते' इत्यादावनुस्वारश्रवणार्थं 'नुगित्यनुस्वारोपलक्षणमाश्रयणीयम्' इत्युक्तं भाष्ये, तस्यैवाऽत्र सूत्रेऽनुवर्तनादत्रापि तत्सिद्धेः । 'स च पदान्तवद् वाच्यः' इति पूर्वसूत्रस्थवार्तिकमप्यत्राऽनुवर्तत इति न विस्मर्तव्यम् ।

जञ्जप्यते—गर्हितं जपतीति विग्रहे 'लुपसदचरजप-' इति जप्धातोर्यङि द्वित्वे अभ्यासत्वे हलादिशेषे 'जपजभदहदशभञ्जपशां च' इति सूत्रेण अभ्यासस्य नुकि अनुस्वारे परसवर्णे यङन्तस्य धातुत्वाल्लटि ङित्वात् तङि टेरेत्वे शपि पररूपे उक्तं रूपं सिद्धम् ।

जेगिल्यते—गर्हितं गिलतीति विग्रहे गॄधातोर्यङि 'ॠत इद्धातोः' इति इत्वे रपरत्वे 'ग्रो यङि' इति रेफस्य लत्वे 'सन्यङोः' इति द्वित्वे अभ्यासत्वे हलादिशेषे चुत्वे 'गुणो यङ्लुकोः' इति गुणे यङन्तस्य धातुत्वाल्लटि ङित्वात्तङि टेरेत्वे शपि पररूपे उक्तं रूपं जातम् ।

देदीयते ( ई० ५८ )—दाधातोर्यङि 'घुमास्था-' इति घुसंज्ञकस्य 'दा' इत्यस्य ईत्वे 'सन्यङोः' इति द्वित्वे अभ्यासस्य गुणे धातुत्वाल्लटि ङित्वात्तङि टेरेत्वे शपि पररूपे 'देदीयते' इति ।

चेक्रीयते ( ई० ५१ )—पुनः पुनः करोतीति विग्रहे कृधातोर्यङि 'रीङ् ऋतः' इति रीङि 'सन्यङोः' इति द्वित्वे अभ्यासत्वे हलादिशेषे ह्रस्वे चर्त्वे 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणे 'सनाद्यन्ता धातवः' इति धातुत्वाल्लटि यङो ङित्वादात्मनेपदे तङि टेरेत्वे शपि पररूपे 'चेक्रीयते' इति ।

सञ्चेस्क्रीयते ( ई० ५१ )—समुपसर्गात् कृधातोर्यङि 'रीङृतः' इति रीङि 'सन्यङोः' इत्यादिसूत्रेण द्वित्वादिके कृते 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणे मस्यानुस्वारे परसवर्णे 'सम्परिभ्यां करोतौ भूषणे'-'समवाये च' इत्यनेन सुटि यङन्तस्य धातुत्वाल्लटि आत्मनेपदे तङि टेरेत्वे शपि पररूपे 'सञ्चेस्क्रीयते' इति ।

कोकूयते ( ई० ५७ )—'कूङ् शब्दे' इति भ्वादिस्थात् शब्विकरणात् कूधातोर्यङि 'सन्यङोः' इति द्वित्वेऽभ्यासत्वे अभ्यासोकारस्य ह्रस्वे सति 'न कवतेर्यङि' इति चुत्वनिषेधे 'गुणो यङ्लकोः' इत्यभ्यासस्य गुणे यङन्तस्य धातुत्वाल्लटि तङि टेरेत्वे शपि पररूपे 'कोकूयते' इति ।

'कू शब्दे' इति लुग्विकरणस्य, 'कूङ् शब्दे' इति शविकरणस्य तु 'चोकूयते' इत्येव भवति, प्रकृतसूत्रे तयोरग्रहणात् ।

वनीवच्यते ( ई० ५३ )—उकारेत्संज्ञक 'वञ्चु'धातोर्यङि 'सन्यङोः' इति इति द्वित्वेऽभ्यासत्वे हलादिशेषे 'नीग्वञ्चुस्रंसु-' इति सूत्रेण अभ्यासस्य नीकि

'अनिदिताम्-' इति धातोर्नस्य लोपे यङन्तस्य धातुत्वाल्लटि तङि शपि पररूपे टेरेत्वे उक्तं रूपं सिद्धम्। नीगागमात् प्राग् अभ्यासस्य दीर्घस्तु न, 'दीर्घोऽकितः' इत्यत्र 'अकितः' इत्युक्तेः।

यंयम्यते (ई० ४६)—यम्धातोर्यङि द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'नुगतोऽनुनासिकान्तस्य' इति नुकि तस्यानुस्वारे यङन्तस्य धातुत्वाल्लटि ङित्वा-दात्मनेपदे तप्रत्यये एत्वे शपि पररूपे 'यंयम्यते' इति। ननु नुकोऽनुस्वारस्य अपदान्तत्वाद् झल्परकत्वाच्चेति कथं तस्य 'नश्च' इत्यनुस्वार इति चेन्न, नुकानु-स्वारो लक्ष्यते इत्युक्तत्वात्।

वरीवृत्यते (ई० ३४)—पुनः पुनः वर्तते इति विग्रहे वृत्धातोर्यङि द्वित्वे अभ्यासत्वे 'उरत्' इत्यत्वे रपरत्वे हलादिशेषे 'व वृत् य' इति जाते 'रीगृदुपधस्य च' इत्यभ्यासस्य रीगागमे धातुत्वाल्लटि तप्रत्यये शपि पररूपे टेरेत्वे तत्सिद्धिः।

नरीनृत्यते (ई० ३३)—पुनः पुनरतिशयेन वा नृत्यतीति विग्रहे नृत्धातोः 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' इति यङि 'सन्यङोः' इति द्वित्वे अभ्या-सकार्ये 'रीगृदुपधस्य च' इति रीगागमे धातुत्वाल्लटस्तप्रत्यये एत्वे शपि पररूपे 'क्षुभ्नादिषु च' इति णत्वनिषेधे तत्सिद्धिः।

देध्मीयते (ई० ५८)—ध्माधातोर्यङि 'ईघ्राध्मोः' इति ईत्वे द्वित्वे अभ्या-सत्वे ह्रस्वे हलादिशेषे 'अभ्यासे चर्च' इति जश्त्वे 'गुणो यङ्लुकोः' इति अभ्या-सस्य गुणे यङन्तस्य धातुत्वाल्लटि ङित्वात्तङि टेरेत्वे शपि पररूपे 'देध्मीयते' इति।

परीपृच्छ्यते (ई० ४४)—प्रच्छ्धातोर्यङि 'ग्रहिज्या-' इति रेफस्य सम्प्रसारणे पूर्वरूपे 'सन्यङोः' इति द्वित्वे अभ्यासत्वे उरदत्वे रपरत्वे हलादिशेषे 'रीगृत्वत इति वक्तव्यम्' इति वार्तिकेन रीकि यङन्तस्य धातुत्वाल्लटि तङि शपि पररूपे टेरेत्वे उक्तं रूपं सिद्धम्। 'रीगृत्वत इति वक्तव्यम्' इति वार्तिकस्य किं प्रयोजनमिति चेच्छृणु—वार्तिकाऽभावे 'व्रश्च्धातोर्यङि 'वरीवृश्च्यते' इत्यत्र धातोः शकारोपधत्वेन ऋदुपधत्वाऽभावात् 'रीगृदुपधस्य च' इत्यस्याप्राप्तया रीगाग-माऽनापत्तिः।

वावश्यते (ई० ५७)—वश्धातोर्यङि 'ग्रहिज्ये'ति सम्प्रसारणे प्राप्ते 'न वशः' इति निषेधे द्वित्वादिके कृते अभ्यासस्य दीर्घे यङन्तस्य धातुत्वाल्लटि तङि शपि पररूपे टेरेत्वे उक्तं रूपं सिद्धम्।

चेकीयते ( ई० ३६ )—पुनः पुनः अतिशयेन 'चायति' इति विग्रहे ऋकारेत्संज्ञक 'चायृ' धातोर्यङि 'चायः की स्याद्यङीत्यर्थक—'चायः की' इत्यनेन कीभावे 'सन्यङोः' इत्यनेन द्वित्वे अभ्याससंज्ञायां 'कुहोश्चुः' इत्यनेन चुत्वे 'गुणो यङ्लुकोः' इत्यनेन अभ्यासेकारस्य गुणे यङन्तस्य 'सनाद्यन्ताः' इति धातुत्वाल्लटि ङित्वादात्मनेपदे तप्रत्यये, एत्वे शपि पररूपे 'चेकीयते' इति ।

जेघ्नीयते ( ई० ४०, ४५, ५५ )—पुनः पुनः अतिशयेन वा हिनस्तीत्यर्थे यङि विवक्षिते एव 'हन्तेर्हिंसायां यङि घ्नीभावो वाच्यः' इति वार्तिकेन घ्नीभावे कृते यङि ततः 'सन्यङोः' इत्यनेन द्वित्वे अभ्याससंज्ञायां हलादिशेषे चुत्वे जश्त्वे 'गुणो यङ्लुकोः' इत्यनेन अभ्यासस्य गुणे यङन्तस्य धातुसंज्ञायां लटि आत्मनेपदे तप्रत्यये एत्वे शपि पररूपे 'जेघ्नीयते' इति ।

शाशय्यते ( ई० ४२, ४४, ४८, ५१, ५४ )—'शीङ्' धातोः 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' इति यङि अनुबन्धलोपे 'सनाद्यन्ता' इति धातुत्वे लटि आत्मनेपदे तप्रत्यये एत्वे च कृते 'अयङ् यि क्ङिति' इत्यनेन परत्वादन्तरङ्गत्वाच्च द्वित्वात् पूर्वम् अयङादेशे ततः 'सन्यङोः' इति द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'दीर्घोऽकितः' इति दीर्घे 'शाशय्यते' इति सिद्धम् ।

इति यङन्तप्रकरणम्

# अथ यङ्लुगन्तप्रकरणम्

यङ्लुगन्तादात्मनेपदाभावः ( ई० ३७, ५४ )—ननु 'बोभवीति' इत्यत्र प्रत्ययलक्षणेन ङित्त्वधर्ममानीय 'अनुदात्तङित आत्मनेपदम्' इत्यात्मनेपदं कथं न स्यादिति चेन्न, ङित्वस्य प्रत्ययाप्रत्ययोभयवृत्तित्वेन प्रत्ययलक्षणसूत्राऽप्रवृत्तेः । यो हि धर्मः केवलप्रत्यये तिष्ठति, तस्यैव धर्मस्य प्रत्ययलक्षणेन आनयनं भवति, यश्च धर्मः प्रत्ययेषु वर्तते अथ च धातुष्वपि वर्तते, तस्य धर्मस्यानयनं न भवति । ङित्वधर्मोऽयं यङादिप्रत्ययेषु वर्तते अथ च शीङादिधातुष्वपि वर्तते, इति तस्य धर्मस्यानयनं न भवति । अत एव शोभना दृषदो यस्मिन् प्रासादे इति विग्रहे प्रत्ययलक्षणेन असन्तत्वमादाय 'अत्वसन्तस्य' इति दीर्घोऽपि न भवति, असन्तत्वस्योभयेष्वपि विद्यमानत्वात् ।

'भूसुवोः' इति गुणनिषेधः ( ई० ४६ )—अयम्भावः—'भूसुवोस्तिङि' इति गुणनिषेधे सिद्धे 'बोभूतु' इति गुणाभावनिपातनं छन्दस्येव गुणनिषेधो भवतीति नियमं करोति। एवञ्च यदि भाषायां यङ् लुक् न स्यात्तदा नियमस्य किमपि फलमेव नास्तीति यङ्लुक् भाषायामपि सिद्धो भवति। न च द्वित्वे कृते 'बोभू' इति समुदाये भूधातोरभावेन 'भूसुवोस्तिङि' इति सूत्राऽप्राप्तौ गुणाऽभावो निपातनीय एवेति वाच्यम्, षष्ठाध्यायीस्थसूत्रेण यद् द्वित्वं भवति तत्पुनरपि तस्यैवोच्चारणं भवति, नतु नवीनस्य द्वितीयस्य भूशब्दस्य 'द्विप्रयोगो द्विर्वचनं षाष्ठम्' इति सिद्धान्तात्।

बोभवीति ( ई० ४३, ५७ )—भूधातोर्यङि 'यङोऽचि च' इति द्वित्वापेक्षया आदौ यङो लुकि ततः प्रत्ययलक्षणेन यङन्तत्वाद् 'सन्यङोः' इति द्वित्वे अभ्यासत्वे 'गुणो यङ्लुकोः' इत्यभ्यासोकारस्य गुणे 'अभ्यासे चर्च' इत्यभ्यासभकारस्य बकारे 'बोभू' इति, तस्माद्धातुत्वाल्लटि तिपि शपि 'चर्करीतञ्च' इति यङ्लुगन्तस्यादादौ पाठाच्छपो लुकि 'यङो वा' इति पाक्षिके ईडागमे अनुबन्धलोपे 'बोभूतुतेतिक्ते' इति छन्दसि निपातनात् 'भूसुवोस्तिङि' इति गुणनिषेधस्य यङ्लुकि भाषायामप्रवृत्त्या गुणेऽवादेशे 'बोभवीति' इति। ईडभावपक्षे गुणे 'बोभोति' इति भवति।

बोभवाञ्चकार—भूधातोर्यङि यङो लुकि प्रत्ययलक्षणेन यङन्तत्वात् 'सन्यङोः' इति द्वित्वे अभ्यासत्वे 'गुणो यङ्लुकोः' इत्यभ्यासस्य गुणे 'अभ्यासे चर्च' इति भस्य बत्वे धातुत्वाल्लिटि 'कास्यनेकाच आम्वक्तव्यः' इत्यामि 'आमः' इति लिटो लुकि लिट्परकक्रृञोऽनुप्रयोगे लिटः स्थाने तिपि णलि अनुबन्धलोपे गुणेऽवादेशे कृञो द्वित्वे अभ्यासत्वे 'उरत्' इत्यत्वे 'कुहोश्चुः' इति चुत्वे 'अचो ञ्णिति' इति वृद्धौ मस्यानुस्वारे परसवर्णे तत्सिद्धम्।

अबोभूवीत्, अबोभोत् ( ई० ५०, ५६ )—भूधातोर्यङि यङो लुकि प्रत्ययलक्षणेन यङन्तत्वात् 'सन्यङोः' इति द्वित्वे अभ्यासत्वे 'गुणो यङ्लुकोः' इत्यभ्यासगुणे जश्त्वे धातुत्वाल्लुङस्तिपि इकारलोपे अडि अनुबन्धलोपे च्लौ च्लेः सिचि 'गातिस्थे'ति सिचो लुकि 'यङो वा' इति पाक्षिके ईटि गुणं बाधित्वा नित्यत्वाद् वुकि 'अबोभूवीत्' इति ईडभावपक्षे अजपरत्वाऽभावाद् वुगभावे गुणे अबोभोत्' इति च भवति।

अबोभुवुः ( ई० ४८ )—भूधातोर्यङ्लुकि द्वित्वादिकार्ये अभ्यासस्य गुणे च कृते धातुत्वाल्लुङि 'सिजभ्यस्ते'ति झेर्जुसि 'अबोभू उस्' इति स्थिते 'जुसि चे' ति गुणं बाधित्वा नित्यत्वाद् वुकि सकारस्य रुत्वे विसर्गे 'अबोभुवुः' इति । नचात्र अभ्यस्ताश्रयजुसं बाधित्वा परत्वात् 'अदभ्यस्तात्' इत्यनेन अदादेशः कुतो नेति वाच्यम् , अभ्यस्ताश्रयजुसोऽदादेशापवादत्वात् ।

अपास्पाः ( ई० ५८ )—'स्पर्ध संघर्षे' इति धातोर्यङ्लुकि द्वित्वे अभ्यासत्वे 'शर्पूर्वाः खयः' इति पकारशेषे 'दीर्घोऽकित' इति दीर्घे 'पास्पर्ध्' इत्यस्मात् लङि सिपि अडागमे 'अपास्पर्ध् स्' इति स्थिते धस्य जश्त्वे 'दध' इति दकारस्य रुत्वपक्षे 'अपास्पर् र् स्' इति स्थिते हल्ङ्यादिना सकारलोपे 'रोरि' इति रेफलोपे 'ढ्रलोपे–' इति दीर्घे रेफस्य विसर्गे उक्तं रूपं जातम् ।

अजङ्गमीत् ( ई० ४६, ५८ )—गम्धातोर्यङि तस्य लुकि लुङि तिपि ईटि द्वित्वादिकार्ये 'नुगतोऽनुनासिकान्तस्य' इति नुकि 'नश्च' इत्यनुस्वारे तस्य परसवर्णे च कृते मध्ये च्लौ तस्य सिचि 'पुषादिद्युताद्यॢदितः परस्मैपदेषु' इत्यनेन च्लेरङादेशस्तु न, अनुबन्धनिर्देशात् । ततः 'आर्धधातुकस्येड् वलादेः' इत्यनेन सस्य इटि तस्मात्परस्य सिचो लोपे सवर्णदीर्घे 'अजङ्गमीत्' इति । वृद्धिस्तु न, 'ह्म्यन्ते'ति निषेधात् ।

जङ्घनीति ( ई० ५१, ५४ )—हन्धातोर्यङ्लुकि 'सन्यङोः' इति द्वित्वे अभ्यासत्वे हलादिशेषे चुत्वे जश्त्वे 'अभ्यासाच्च' इति हन्तेर्हस्य कुत्वे 'नुगतोऽनुनासिकान्तस्य' इति नुकि तस्यानुस्वारे परसवर्णे धातुसंज्ञायां लटि तिपि 'यङो वा' इति ईटि 'जङ्घनीति' इति ।

जङ्घहि ( ई० ५० )—हन्धातोर्यङ्लुकि प्रत्ययलक्षणेन द्वित्वे अभ्याससंज्ञायां हलादिशेषे चुत्वे जश्त्वे 'अभ्यासाच्च' इत्यनेन अभ्यासात्परस्य हन्तेर्हकारस्य कुत्वे 'नुगतोऽनुनासिकान्तस्य' इत्यनेन नुकि तस्यानुस्वारे परसवर्णे धातुसंज्ञायां लोटि मध्यमपुरुषैकवचने सिपि तस्य ह्यादेशे 'अनुदात्तोपदेश' इत्यादिना अनुनासिकनकारस्य लोपे शपि पररूपे 'जङ्घहि' इति । नन्वत्र 'हन्तेर्जः' इति जादेशः कुतो नेति चेन्न, आदेशविधायकसूत्रे हन्तेरित्यत्र श्तिपा निर्दिष्टत्वेन तन्निर्दिष्टकार्यस्य च 'श्तिपा शपे'ति निषेधेन यङ्लुक्यप्रवृत्तिबोधनेन आदेशाऽभावात् ।

अतातः ( ई० ४० )—'यङो वा' इतीडभावपक्षे तृधातोर्यङ्लुकि द्वित्वादि-

कार्ये कृते 'ततृ' इति स्थिते 'दीर्घोऽकितः' इत्यनेन अभ्यासस्य दीर्घे धातुत्वाल्लुङि तिपि अडागमे गुणे हल्ङ्यादिना तलोपे रेफस्य विसर्गे 'अतालः' इति।

वध्यात् ( ई० ५५ )—हन्धातोर्यङ्लुकि द्वित्वादिकृते 'जंघन्' इत्यस्मादाशीर्लिङि तिपि 'प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम्' इति नियमात 'हनो वध लिङि' इति वधादेशे यासुटि सलोपे 'वध्यात्' इति। नन्वत्र वधादेशात् पुनर्द्वित्वं कुतो नेति चेन्न, वधादेशस्य स्थानिवत्त्वेन साभ्यासतया 'अनभ्यासस्य' इति निषेधात्।

अवधीत ( ई० ४२ )—हनंधातोर्यङ्लुकि द्वित्वादिकृते 'जंघनित्यस्मात् लुङस्तिपि 'अडागमे प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम्' इति नियमात् 'लुङि चे'ति वधादेशे मध्ये च्लौ च्लेः सिचि सिचः इटि 'अस्तिसिचोऽपृक्ते' इति तस्य च ईटि 'इट ईटि' इति सलोपे सवर्णदीर्घे 'अवधीत्' इति।

अचङ्खानीत् ( ई० ३६ )—'खनु अवदारणे' अस्मात् 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' इत्यनेन यङि 'यङोऽचि च' इत्यनेन तस्य लुकि ततः प्रत्ययलक्षणेन यङन्तत्वात् 'सन्यङोः' इति द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'कुहोश्चुः' इत्यनेन चुत्वे 'सनाद्यन्ता धातवः' इत्यनेन धातुत्वाल्लुङि तिपि अनुबन्धलोपे 'लुङ्लङ्लृङ्क्ष्वडुदात्तः' इत्यडागमे 'नुगतोऽनुनासिकान्तस्य' इत्यनेन नुकि अनुबन्धलोपे नस्यानुस्वारे परसवर्णे मध्ये च्लौ तस्य सिचि इडागमे 'अस्तिसिचोऽपृक्तेः' इत्यनेन तस्य ईडागमे 'इट ईटि' इति सलोपे सवर्णदीर्घे 'अतो हलादेर्लघोः' इति विकल्पेन वृद्धौ 'अचङ्खानीत्' इति। वृद्ध्यभावे 'अचङ्खनीत्' इति।

सास्वपीति-सास्वप्ति ( ई० ५६ )—'ञिष्वप् शये' इति धातोः 'धात्वादेः षः सः' इति सत्वे यङ्लुकि 'सन्यङोः' इति द्वित्वे अभ्यासत्वे हलादिशेषे 'दीर्घोऽकितः' इति अभ्यासस्य दीर्घे 'यङो वा' इति विभाषया ईटि वक्ते रूपद्वयं सिद्धम्। नचात्र 'स्वपिस्यमिव्येञां यङि' इत्यनेन वस्य सम्प्रसारणं कुतो नेति वाच्यम्, यङः लुका लुप्तत्वेन प्रत्ययलक्षणत्वाऽभावात्। ईडभावपक्षे 'रुदादिभ्यः–' इति इट् कुतो नेत्यपि न शङ्कनीयम्, तस्य गणनिर्दिष्टत्वेन 'श्तिपा शपे'ति निषेधात्।

वर्वृतीति-वरिवृतीति-वरीवृतीति ( ई० ४२, ४५, ५५, ५७ )—'वृतु वर्तने' इत्यस्माद्धातोर्यङि 'यङोऽचि च' इति तस्य लुकि 'सन्यङोः' इति द्वित्वेऽ-

भ्यासत्वे 'रुग्रिकौ च लुकि' इति रुकागमे प्रत्ययलक्षणेन 'सनाद्यन्ता' इति धातुत्वाल्लटि तिपि शपि 'चर्करीतं च' इत्यदादौ पाठेन अदादित्वात् शपो लुकि 'यङो वा' इति ईटि 'वर्वृतीति' इति रुकागमपक्षे रूपम् । 'रिग्' पक्षे 'वरिवृतीति' इति । 'रीक्' पक्षे 'वरीवृतीति' इति । ईट्पक्षे 'नाभ्यस्तस्याचि पिति सार्वधातुके' इति निषेधात् लघूपधगुणो न । ईडागमाभावपक्षे तु 'पुगन्त-' इति गुणे रपरत्वे 'वर्वर्ति-वरिवर्ति-वरीवर्ति' इति ।

**अवर्वाः** ( ई० ४५, ४७ )—वृधातोर्यङि यङो लुकि 'सन्यङोः' इति द्वित्वे अभ्यासत्वे हलादिशेषे धातुत्वाल्लङि सिपि अडागमे 'चर्करीतं चे'त्यदादौ पाठात् शपो लुकि 'रुग्रिकौच लुकि' इति रुकि, 'पुगन्तलघूपधस्य च' इत्युपधागुणे रपरत्वे 'अवर्वर्त्स्' इति स्थिते जश्त्वे 'दश्च' इति दकारस्य रुत्वे 'रो रि' इति पूर्वरेफस्य लोपे 'ढ्रलोपे पूर्वस्य' इति दीर्घे हल्ङ्यादिना सिपो लोपे रेफस्य विसर्गे 'अवर्वाः' इति । रिक्पक्षे 'अवरिवाः' एवं रीक् पक्षे 'अवरीवाः' इति ।

**अवर्वर्त्** (ई० ५३)—'यङो वा' इतीडभावपक्षे इदं रूपम् । तथाहि वृत्धातोर्यङ्लुकि द्वित्वे अभ्यासत्वे 'रुग्रिकौ च लुकि' इति रुकि 'वर्वृत्' इत्यस्माल्लङस्तिपि-अडागमे शपि 'चर्करीतं च' इत्यादादौ पाठात् शपो लुकि 'पुगन्तलघूपधस्य च' इति गुणे रपरत्वे हल्ङ्यादिना तिपो लोपे 'अवर्वर्त्' इति । रिक्पक्षे 'अवरिवर्त्' इति । रीक्पक्षे तु 'अवरीवर्त्' इति च भवति ।

**चाकर्ति** ( ई० ५० )—'कॄ विक्षेपे' इति धातोर्यङि द्वित्वेऽभ्यासत्वे अत्वे रपरत्वे चुत्वे 'दीर्घोऽकितः' इति अभ्यासदीर्घे धातुत्वाल्लटि तिपि शपि शपो लुकि 'सार्वधातुकार्धधातुकयोः' इति गुणे रपरत्वे 'चाकर्ति' इति ईडभावपक्षे रूपम् । 'ऋतश्च' इति तपरत्वात् रुकाद्यागमो नेति । 'यङो वा' इतीट्पक्षे तु 'चाकरीति' इति ।

**अचाकरुः**—'कॄ विक्षेपे' इत्यस्माद्धातोर्यङि यङो लुकि द्वित्वे अभ्यासत्वे ह्रस्वत्वं बाधित्वा नित्यत्वाद् उरदत्वे हलादिशेषे चुत्वे 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घे धातुत्वाल्लङि झौ झेर्जुसि अडागमे गुणे रपरत्वे 'चर्करीतं च' इत्यदादौ पाठात् शपो लुकि सस्य रुत्वे विसर्गे 'अचाकरुः' इति । अत्र 'ऋतश्चे'ति रुगाद्यागमस्तु न, तपरनिर्देशात् ।

**अचाकारीत्**—कॄधातोर्यङि यङो लुकि द्वित्वे अभ्यासत्वे ह्रस्वत्वं बाधित्वा नित्यत्वाद् उरदत्वे हलादिशेषे 'अभ्यासे चर्च' इति चुत्वे 'दीर्घोऽकितः' इत्यभ्या-

सस्य दीर्घे धातुत्वाल्लुङि तिपि अडागमे तिप इकारलोपे च्लौ च्लेः सिचि 'सिचि वृद्धिः परस्मैपदेषु' इति वृद्धौ रपरत्वे सस्य इटि 'अस्ति सिचः–' इति तस्य ईटि 'इट ईटि' इति सलोपे सवर्णदीर्घे 'अचाकारीत्' इति ।

**अतातरीत्–अतातः** ( ई० ४० )—'तॄ प्लवनतरणयोः' इति धातोर्यङ्लुकि द्वित्वे अभ्यासत्वे च कृते 'ह्रस्वः' इति ह्रस्वे प्राप्ते तं बाधित्वा नित्यत्वात् 'उरत्' इत्यत्वे रपरत्वे हलादिशेषे 'दीर्घोऽकितः' इत्यभ्यासस्य दीर्घे धातुत्वाल्लङि तिपि अडागमे शपि शपो लुकि 'यङो वा' इतीटि ऋकारस्य गुणे रपरत्वे 'अतातरीत्' इति । ईडभावपक्षे गुणे रपरत्वे 'संयोगान्तस्य' इति तलोपे रेफस्य विसर्गे 'अतातः' इति ।

**अरियृतः** ( ई० ३६ )—ऋधातोर्यङि 'यङोऽचि च' इति लुकि प्रत्ययलक्षणेन यङन्ताद् द्वित्वे अभ्याससंज्ञायाम् 'उरत्' इत्यत्वे रपरत्वे हलादिशेषे 'सनाद्यन्ता' इति धातुत्वात् लटि तसि 'अ ऋ तस्' इति स्थिते 'रुग्रिकौ च लुकि' इति सूत्रेण रिकि रीकि वा कृते 'अभ्यासस्याऽसवर्णे' इत्यनेन इयङि सकारस्य रुत्वे विसर्गे 'अरियृतः' इति । रुक्पक्षे तु 'अर्ऋतः' इति भवति ।

**आरति** ( ई० २८,४३,४९,५४ )—'ऋधातोर्यङ्लुकि प्रत्ययलक्षणेन यङन्तत्वात् 'सन्यङोः' इति द्वित्वे अभ्याससंज्ञायाम् 'उरत्' इत्यत्वे रपरत्वे हलादिशेषे धातुत्वाल्लटि झौ 'अदभ्यस्तात्' इत्यनेन झस्यादादेशे 'अ ऋ अति' इति स्थिते 'रुग्रिकौ च लुकि' इत्यनेन रुगागमे 'अर् ऋ अति' इति स्थिते यणि 'अर् र् अति' इति स्थिते 'रो रि' इत्यनेन रलोपे 'ढ्लोपे' इति दीर्घे 'आरति' इति । नन्वत्र रेफस्य लोपे कर्तव्ये यणादेशसम्पन्नस्य रेफस्य 'अचः परस्मिन्नि'ति स्थानिवत्त्वेन रेफपरकत्वाऽभावात् 'रो रि' इत्यस्य कथं प्रवृत्तिरिति चेत्, दीर्घविधौ स्थानिवत्त्व-निषेधात् । पक्षे अरियृति—यङ्लुगन्ताद् द्वित्वे अभ्यासत्वे उरदत्वे हलादिशेषे 'रुग्रिकौ च लुकि' इति रिकि रीकि वा कृते परत्वादभ्यासस्य इयङि ततो यणि रिग्रीकोस्तुल्यमेव रूपम् ।

**अजर्घट्** ( ई० ३६ )—ऊकारेत्संज्ञक 'गृह ग्रहणे' इत्यस्माद्धातोर्यङि 'यङोऽचि च' इति यङ्लुकि 'सन्यङोः' इति द्वित्वे अभ्याससंज्ञायाम् 'उरत्' इति अत्वे रपरत्वे हलादिशेषे—'कुहोश्चुः' इति चुत्वे यङ्लुगन्तस्य धातुत्वाल्लङि तिपि अडागमे 'यङो वा' इति ईटि 'नाभ्यस्तस्याऽचि पिति सार्वधातुके' इति गुणनिषेधे

'ऋक्कौ च लुकि' इत्यनेन रुकि 'अजर्गृहीत' इति रूपम् । रिकिपक्षे–'अजरिगृहीत्' रीकिपक्षे–'अजरीगृहीत्' इति ।

'यङो वा' इतीडभावपक्षे तु—लघूपधगुणे 'अजर्गर्ह् त्' इति स्थिते हल्ङ्यादिना तलोपे 'हो ढः' इति हस्य ढत्वे जश्त्वे चर्त्वे गस्य 'एकाचो बशो भष् झषन्तस्य स्ध्वोः' इति भष्भावेन घकारे 'अजर्घर्ट्' रिकि पक्षे–'अजरिघर्ट्' रीकि पक्षे—'अजरीघर्ट्' इति च सिद्धम् । यद्यपीह 'यत्रैकाज्ग्रहणं च' इति निषेधाद् भष्भावो दुर्लभः, तथापि 'गुणो यङ्लुकोः' इति श्तिपाशिपेत्यादिनिषेधस्याऽनित्यत्वज्ञापनाद्भष्भावोऽत्र प्रवर्तते इत्याहुः ।

जागृढः ( ई० ४७ )—'ग्रह उपादाने' अस्माद्यङ्लुकि धातुसंज्ञायां लुङि तसि 'ग्रहिज्ये'ति सम्प्रसारणे प्रत्ययलक्षणेन द्वित्वे अभ्याससंज्ञायां हलादिशेषे चुत्वे 'दीर्घोऽकितः' इत्यनेन अभ्यासस्य दीर्घे 'ऋक्कौ च लुकि' इति रुगादयस्तु न, सम्प्रसारणस्य बहिरङ्गत्वेन असिद्धत्वात् । ततो हस्य ढत्वे तस्य धत्वे ष्टुत्वे ढलोपे सकारस्य रुत्वे विसर्गे 'जागृढः' इति ।

यकारवकारान्तानामिति ( ई० ४१, ४५, ४७ )—अयम्भावः–'च्छ्वोः' इति सूत्रे किद्ग्रहणमनुवर्तते न वेति विचारे भाष्यकृता–'यदि किद्ग्रहणमनुवर्तते तदा प्रष्टा, प्रष्टुमित्यादौ 'च्छ्वोरि'ति सूत्राप्रवृत्तौ षत्वार्थं 'व्रश्चेति' सूत्रे छकारग्रहणं कर्तव्यम् । अथ च यदि नानुवर्तते तदा पूर्वोक्तसूत्रेण शस्य छत्वे शान्तत्वादेव षत्वसिद्धौ 'व्रश्चे'ति सूत्रे छकारग्रहणं न कर्तव्यं भवतीत्येतावानेव विशेषः' इत्यभिहितम् । इत्थञ्च यदि वान्तधातुभ्यो यङ्लुक् भवति तदा दिव्धातोर्यङ्लुकि इडभावपक्षे किद्ग्रहणानुवृत्तौ ऊठोऽभावे देदेति देदेषीति रूपम् । अथ च यदि किद्ग्रहणस्य नानुवृत्तिस्तदा ऊठि 'देद्योति' 'देद्योषी'ति रूपम् । एवं यान्तानामपि प्रयोगे भेदो बोध्यः । ततश्च प्रयोगेष्वपि भेदो वर्तत इति 'एतावानेव विशेषः' इति भाष्योक्तं निष्फलं स्यात् , तस्मात् 'यकारवकारान्तानाम्' इत्यादिवचनं निस्सृतम् । परञ्चैतद्यङ्लुङ् निवर्तनं वान्तांशे यत्र 'च्छ्वोः' इत्यूठ् भवति तद्विषयकम् । 'ज्वरत्वर' इत्यादिसूत्रेण यत्रोठ् भवति तत्र यङ्लुग् भवत्येवेति युक्तं माधवादीनां मतं च । 'च्छ्वोः' इति सूत्रे भाष्यकारेण विचारः कृतः तत्रैव च ऊठि कृतेऽकृते वा फलभेदो भवतीति तत्सूत्रविषयके ऊठ्येव यङ्लुक्नेति भावः ।

जाग्रहिता ( ई० ४८ )—नन्वत्र 'ग्रहोऽलिटि' इति सूत्रेण कुतो नेटो दीर्घः

इति चेन, तत्र सूत्रे एकाज्ग्रहणं नानुवर्तते, एवञ्च तन्मते तत्र दीर्घो निर्बाध एव। परन्त्वेतद् भाष्यविरुद्धं, तथाहि—'एकाचो द्वे प्रथमस्ये'ति सूत्रभाष्ये 'जरीगृहिता' 'जरीगृहितम्' 'जरीगृहितव्यम्' इत्यत्र इटो दीर्घमाशङ्क्य 'ग्रहोऽज्ञात्परस्य इटो दीर्घो विधीयते। 'जरीगृह्' इत्यङ्गं, तच्च न ग्रहधातुरिति निरूप्याङ्गविशेषण-सामर्थ्यादेव 'प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम्' इति नाऽत्र प्रवर्तत' इति समाहितम्। यङ्न्ते उक्तो न्यायो यङ्लुगन्तेऽपि 'जाग्रहिता' इत्यादौ समान इत्यन्यत्र विस्तरः। न च हरदत्तमते एकाज्ग्रहणानुवृत्त्यैवाऽत्र दीर्घनिवारणे सति भाष्योक्तमिदं समाधानमसङ्गतमिति वाच्यम्, उपायस्योपायान्तराऽदूषकत्वात्।

जर्गृधीति ( ई० ५१ )—'गृधु अभिकाङ्क्षायाम्' इति धातोर्यङ्लुकि 'सन्यङोः' इति द्वित्वे अभ्यासत्वे हलादिशेषे 'रुग्रिकौ च लुकि' इति रुकि अभ्यास-गकारस्य जकारे 'धातुत्वाल्लटि तिपि शपि शपो लुकि 'यङो वा' इति ईटि उक्तं रूपं सिद्धम्। 'पुगन्त–' इति गुणस्तु न, 'नाभ्यस्तस्य–' इति निषेधात्। रिक्पक्षे 'जरिगृधीति', रीक्पक्षे 'जरीगृधीति' इति। ईडभावपक्षे तु 'जर्गृधृति' इति स्थिते 'झषस्तथोः–' इति तस्य धत्वे लघूपधगुणे रपरत्वे जश्त्वे 'जर्गर्द्धि, जरिगर्द्धि जरीगर्द्धि' इति।

अजर्घाः ( ई० ४१, ४२ )—'गृधु अभिकाङ्क्षायामि'त्यस्माद्धातोः यङ्लुकि 'सन्यङोः' इति द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'रुग्रिकौ च लुकि' इति अभ्यासस्य रुकि 'कुहोश्चुः' इति चुत्वे जश्त्वे प्रत्ययलक्षणेन यङ्न्तस्य धातुसंज्ञायां लङि सिपि अनुबन्धलोपे शपि लुकि 'पुगन्ते'ति गुणे रपरत्वे हल्ङ्यादिना सुलोपे जर् गर् ध् इति स्थिते 'एकाचो बश' इति गकारस्य भष्भावात् घकारे जर् घर् ध् इति स्थिते धकारस्य श्चुत्वेन दकारे 'दश्च' इति रुत्वे 'लुङ्लङि'ति अडागमे अजर् घर् र् इति स्थिते 'रो रि' इति रेफलोपे 'ढ्लोपे पूर्वस्य दीर्घोऽणः' इति दीर्घे रेफस्य विसर्गे 'अजर्घाः' इति सिद्धम्। तदुक्तम्—

'गृधेर्यलोपे लङि सेरिलोपे हल्ङ्यादिलोपे रपरे गुणे च।
भष्भावजश्त्वे च रुरेफलोपे ढ्लोपदीर्घे च भवेदजर्घाः॥'

अजूधातोः ( ई० २९,५६ )—यङ्लुकि 'वेवीयते' इति। न च 'अज्' धातोः हलादित्वाऽभावात् 'धातोरेकाचो हलादेः क्रियासमभिहारे यङ्' इत्यस्य कथं प्रवृत्तिरिति वाच्यम्? 'अजेर्व्यघञपोः' इति वीभावविधावनुवृत्तार्धधातुके विषय-

ससम्याश्रयणेन यङि विवक्षिते सत्येव अजेर्वीभावे कृते हलादित्वस्य जागरूकत्वात् । ननु अजेर्वीभावानन्तरं यङि सति तस्य 'यङोऽचि च' इत्यनेन लुक् कुतो नेति चेन्न, लुका लुप्तयङो भाविज्ञानविषयत्वाऽभावेन वीभावस्याऽप्रवृत्तेः । एवञ्चार्धधातुके इति विषयसप्तम्याश्रयणान्न यङ्लुगिति तत्त्वम् । प्रत्ययलक्षणन्तु न, 'न लुमते'ति निषेधात् ।

ज्वर् धातोरिति ( ई० ३० )—'ज्वर्' धातोर्यङ्लुक् भवतीति माधवादयः । नच 'यकारवकारान्तानां तूठ्भाविनां यङ्लुङ् नास्ती'ति ज्ञापनात् 'ज्वरत्वरे'त्यूठ्भाविनो ज्वर्धातोर्यङ्लुक् कथं स्यादिति वाच्यम् ? उक्तज्ञापकं 'च्छ्वोः शूड्' इत्यनेन यत्रोठ् प्रवर्तते तत्रैव तज्ज्ञापकस्योक्तसूत्रस्य भाष्यमूलकत्वात् । एवञ्च 'ज्वरत्वर' इत्यादिसूत्रेण यत्रोठ् भवति तत्र यङ्लुग् भवत्येवेति तत्त्वविदः ।

मामोति ( ई० ३८, ५४, ५६ )—'यङो वा' इतीट्पक्षे 'मामवीति' तदभावे 'मामोति' इति । अत्र मव् धातोर्यङ्लुकि प्रत्ययलक्षणेन यङन्तत्वाद् द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'दीर्घोऽकित-' इत्यभ्यासस्य दीर्घे धातुत्वाल्लटि तिपि 'माम् ति' इति स्थिते इडभावपक्षे 'ज्वरत्वरस्रिव्यविमवामुपधायाश्च' इत्यनेन उपधाभूतस्य अकारस्य वकारस्य च ऊठि तिपः पित्त्वेन ङित्वाऽभावादूकारस्य गुणे 'मामोति' इति । उपधायाः वकारस्य च प्रत्येकमूठ्, इति पक्षे सवर्णदीर्घः इति विशेषः ।

तोतोर्ति ( ई० ४८, ५५ )—'तुर्वी हिंसायाम्' इति धातोः यङ्लुकि धातुत्वाल्लटि तिपि इडभावपक्षे द्वित्वादिकार्ये अभ्यासस्य गुणे च कृते 'तोतुर्वति' इति स्थिते 'राल्लोपः' इत्यनेन वलोपे 'तोतुर्ति' इति स्थिते उकारस्य लघूपधगुणे 'तोतोर्ति' इति । 'न धातुलोप आर्धधातुके' इति गुणनिषेधस्तु न, तिबादीनामनार्धधातुकत्वात् ।

मोमोर्ति ( ई० ४२ )—मूर्च्छा मोहसमुच्छ्राययोः' अस्मात् यङ्लुकि 'यङो वा' इति ईटि विकल्पपक्षे रूपम् । अत्र ईडभावे 'राल्लोपः' इति छलोपो बोध्यः । एवं च 'मोमूर्च्छीति-मोमोर्ति' इति रूपद्वयं ज्ञेयम् ।

यङ्लुको भाषायां प्रवृत्तौ मानम्—'भूसुवोस्तिङि' इति गुणनिषेधे सिद्धे 'बोभूतुतेतिक्ते' इति गुणाभावनिपातनं छन्दस्येव गुणनिषेधो भवतीति नियमं

करोति। एवञ्च यदि भाषायां यङ्लुक् न स्यात्तदा नियमस्य किमपि फलमेव नास्तीति यङ्लुक् भाषायामपि सिद्धो भवति। न च द्वित्वे 'बोभू' इति समुदाये भूधातोरभावेन 'भूसुवोस्तिङि' इति सूत्राप्राप्तौ गुणाभावो निपातनीय एवेति वाच्यम्। षष्ठाध्यायीस्थसूत्रेण यद्द्वित्वं भवति तत्पुनरपि तस्यैवोच्चारणं भवति, न तु नवीनस्य द्वितीयस्य भूशब्दस्य, 'द्विः प्रयोगो द्विर्वचनं षाष्ठम्' इति सिद्धान्तात्।

यकारवकारान्तानान्तूठ्भाविनामिति। अयं भावः—'छ्वोः शूड्' इति सूत्रे भाष्ये किद्ग्रहणमनुवर्तते नवेति विचारे कांश्चिद्दोषानुद्भाव्य परिहृत्य चोक्तम्। एतावानेव विशेषः। अनुवर्तमाने किद्ग्रहणे छः षत्वं वक्तव्यम्। अननुवर्तमाने त्वनेन छः शत्वे कृते शान्तत्वादेव षो भविष्यतीति प्रष्टा प्रष्टुमित्यादिसिद्धये व्रश्चादिसूत्रे छग्रहणं न कर्तव्यम्। एवं हि वदता भाष्यकृता ऊठ्भाविभ्यो यङ्लुक् नास्तीत्युक्तप्रायम्। अन्यथा दिवेर्यङ्लुकि ईडभावपक्षे देदेति देदेषि इत्यादौ ऊठो भावाभावाभ्यां महान् विशेषः स्यात्। तत्र किद्ग्रहणाननुवृत्तावूठः प्रवृत्त्या देद्योति देद्योषीत्यादिरूपविशेषलाभात्, परन्त्विदं ज्ञापकं 'च्छ्वोः शूड्' इत्यनेन यत्रोठ् प्रवर्तते तत्रैव प्रवर्तते। तज्ज्ञापनस्योक्तसूत्रस्य भाष्यमूलकत्वात् 'ज्वरत्वर' इत्यादिसूत्रेण यत्रोठ् भवति, तत्र यङ्लुग् भवत्येवेति युक्तं माधवादीनां सम्मतञ्च।

ऋधातोर्यङ्लुकि आशीर्लिङि—ऋधातोर्यङ्लुकि द्वित्वे उरदत्वे हलादिःशेषेऽभ्यासे रिकि आशीर्लिङि अरिऋ यात् रीकि च अरी ऋ यात् इति स्थिते 'अभ्यासस्यासवर्णे' इति इकारस्येयङि ऋकारस्य रिङादेशे 'अरियियात्' इति रूपम्। अत्र 'लोपो व्योः' इति यलोपस्तु न, बहिरङ्गत्वेन रिङोऽसिद्धत्वात्। 'अचः परस्मिन्' इति स्थानिवत्त्वाच्च। 'न पदान्त' इति निषेधस्तु न शङ्क्यः। स्वरदीर्घयलोपेषु लोपरूपाजादेश एव न स्थानिवत् इत्युक्तेः।

इति यङ्लुगन्तप्रकरणम्

# अथ नामधातुप्रकरणम्

पुत्रीयति—आत्मनः पुत्रमिच्छतीति विग्रहे 'पुत्र अम्' इति सुबन्तात् 'सुप आत्मनः क्यच्' इति क्यचि अनुबन्धलोपे 'सनाद्यन्ता धातवः' इति 'पुत्र अम् य' इत्यस्य धातुसंज्ञायां 'सुपो धातुप्रातिपदिकयोः' इति अमो लुकि 'क्यचि च'

इति अकारस्य ईत्वे 'पुत्रीय' इति, तस्माद्धातुत्वाल्लटि तिपि शपि पररूपे 'पुत्रीयति' इति निष्पन्नम्।

राजीयति—'राजानमिच्छति' इति विग्रहे द्वितीयान्ताद् राजन्शब्दादिच्छार्थे क्यचि धातुत्वात् सुपो लुकि 'नः क्ये' इति सूत्रेण 'राजन्' इत्यस्य पदत्वात् 'न लोपः प्रातिपदिकान्तस्य' इति नलोपे 'क्यचि च' इतीत्वे 'राजीय' इति, तस्माद्धातुत्वाल्लटि तिपि शपि अनुबन्धलोपे पररूपे 'राजीयति' इति जातम्।

समिधिता (ई० ५४)—समिधमिच्छतीति विग्रहे द्वितीयान्तात् समित् शब्दात् क्यचि धातुत्वात्सुब्लुकि 'नः क्ये' इति नान्तस्यैव पदत्वनियमात् पदत्वाऽभावेन जश्त्वाऽभावे धातुत्वाल्लुटि लुटस्तिबादिकार्ये 'समिध्य ता' इति दशायाम् इटि 'क्यस्य विभाषा' इति यलोपे 'अतो लोपः' इत्यल्लोपे अल्लोपस्य स्थानिवत्त्वाद् लघूपधगुणाऽभावे 'समिधिता' इति। यलोपाऽभावपक्षे 'समिध्यिता' इति च भवति।

राजानति—राजा-इव-आचरतीति विग्रहे 'सर्वप्रातिपदिकेभ्यः–' इति क्विपि सर्वापहारे धातुत्वाल्लटस्तिपि शपि 'अनुनासिकस्य–' इति दीर्घे तत्सिद्धिः।

ओजायते (ई० ४०, ४५)—ओजस्वीव आचरतीति विग्रहे ओजश्शब्दात् क्यङि सुब्लुकि 'सनाद्यन्ताः–' इति धातुत्वाल्लटि ङित्वात् तङि टेरेत्वे 'ओजसोऽप्सरसो नित्यमितरेषां विभाषया' इति वार्तिकेन सकारस्य नित्ये लोपे 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घे शपि पररूपे 'ओजायते' इति।

विद्वायते (ई० ३९, ५१)—विद्वानिव आचरतीति विग्रहे क्यङि सुब्लुकि धातुत्वाल्लटि ङित्वात्तङि टेरेत्वे 'ओजसोऽप्सरसो–' इति वार्तिकेन विभाषया सलोपे 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घे शपि पररूपे 'विद्वायते' इति। पक्षे 'विद्वस्यते' इति।

लोहितायते (ई० ४२)—अलोहितो लोहितो भवतीति विग्रहे 'लोहितादिडाज्भ्यः क्यष्' इति क्यषि सुब्लुकि 'वा क्यषः' इति परस्मैपदाभावपक्षे तङि टेरेत्वे 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घे शपि पररूपे 'लोहितायते' इति।

कष्टायते (ई० ५८)—कष्टाय क्रमते–कष्टायते, पापं कर्तुमुत्सहते इत्यर्थः। अत्र 'कष्टाय क्रमणे' इति सूत्रेण चतुर्थ्यन्तात् कष्टशब्दात् उत्साहेऽर्थे क्यङि धातु-

त्वात् सुपो लुकि ङित्वादात्मनेपदे तङि टेरेत्वे 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घे शपि पररूपे 'कष्टायते' इति ।

रोमन्थायते ( ई० ५५ )—रोमन्थं वर्तयतीति विग्रहे 'कर्मणो रोमन्थ-तपोभ्यां वर्तिचरोः' इति सूत्रेण कर्मीभूतात् रोमन्थशब्दात् क्यङि सुब्लुकि 'सनाद्यन्ताः–' इति धातुत्वाल्लटि ङित्वादात्मनेपदे तङि टेरेत्वे 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घे शपि पररूपे 'रोमन्थायते' इति ।

वाष्पायते ( ई० ५२ )—वाष्पमुद्वमतीति विग्रहे 'शब्दवैरकलहाभ्रकण्वमेघेभ्यः करणे' इति क्यङि सुब्लुकि धातुत्वाल्लटि तङि टेरेत्वे 'अकृत्सार्व–' इति दीर्घे शपि पररूपे उक्तं रूपं निष्पन्नम् ।

सुदिनायते—सुदिनं करोतीत्यर्थे 'सुदिनदुर्दिननीहारेभ्यश्च' इति क्यङि सुब्लुकि लटि तङि 'अकृत्सार्व–' इति दीर्घे शपि पररूपे टेरेत्वे 'सुदिनायते' इति ।

नीहारायते—नीहारं करोति इत्यर्थे 'सुदिनदुर्दिननीहारेभ्यश्च' इति क्यङि सुब्लुकि लटि तङि टेरेत्वे दीर्घे शपि पररूपे उक्तं रूपं सिद्धम् ।

अपीपटत्—पटुमाचष्टे इति विग्रहे 'प्रातिपदिकाद्धात्वर्थे बहुलमिष्ठवच्च' इति कर्मीभूतात् पटुशब्दात् णिचि सुब्लुकि इष्ठवद्भावेन पूर्वं टिलोपे प्राप्ते तम्प्रबाध्य परत्वात् वृद्धौ सत्यां टिलोपे 'सनाद्यन्ताः–' इति धातुत्वाल्लुङि तिपि अडागमे तिप इकारलोपे च्लौ 'णिश्रि–' इति च्लेश्चङि द्वित्वे अभ्यासत्वे हलादिशेषे 'सन्वल्लघुनि–' इति सन्वद्भावे 'सन्यतः' इति इत्वे 'दीर्घो लघोः' इति दीर्घे 'णेरनिटि' इति णिलोपे 'अपीपटत्' इति ।

'णौ चङि–' इत्यत्र भाष्ये तु 'वृद्धेर्लोपो बलीयान्' इत्युक्तम्, तथा च वृद्धेः प्राक् टेः ( उकारस्य ) लोपे अग्लोपित्वात् सन्वद्भावाभावेन इत्वाप्राप्तया 'अपपटत्' इति ।

उत्पुच्छयते ( ई० ५१, ५३ )—कर्मीभूतात् उत्पूर्वकापुच्छशब्दात् 'पुच्छभाण्डचीवराण्णिङ्' इति सूत्रस्थ–'पुच्छादुदसने व्यसने पर्यसने च' इति वार्तिकेन णिङि सुब्लुकि इष्ठवद्भावेन टिलोपे धातुत्वाल्लटि ङित्वात्तङि टेरेत्वे शपि गुणे अयादेशे पररूपे 'उत्पुच्छयते' इति ।

मुण्डयति ( ई० ४३ )—मुण्डं करोतीति विग्रहे कर्मीभूतात् मुण्डशब्दात्

'मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच्' इति णिचि सुब्लुकि इष्ठवद्भावेन टिलोपे धातुत्वाल्लटि तिपि शपि गुणेऽयादेशे 'मुण्डयति' इति ।

हलयति ( ई० ५५ )—'महद्धलं हलिः' हलिं गृह्णातीति विग्रहे 'हल्यादिभ्यो ग्रहणे' इति वार्तिकेन कर्मीभूतात् हलिशब्दात् णिचि 'हलिकल्योरदन्तत्वं च निपात्यते' इति वार्तिकेन निपातनात् इकारस्य अकारे इष्ठवत्त्वेन टेर्लोपे धातुत्वाल्लटि तिपि शपि गुणे अयादेशे पररूपे 'हलयति' इति । निपातनफलं तु 'अजहलत्' इत्यादौ 'अग्लोपित्वात् सन्वद्भावदीर्घौ नेति बोध्यम् ।

वितूस्तयति ( ई० ४० )—तूस्तानि विहन्ति-वितूस्तयति । तूस्तं केशा इत्येके । जटीभूताः केशा इत्यन्ये । पापमित्यपरे । विपूर्वकात् कर्मीभूतात् तूस्तेति प्रातिपदिकात् 'मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच्' इति णिचि इष्ठवत्त्वाट्टिलोपे धातुत्वाल्लटि तिपि शपि गुणे अयादेशे पररूपे 'वितूस्तयति' इति ।

गव्याञ्चकार ( ई० २६, ५० )—गामात्मनः इच्छाञ्चकारेति विग्रहे 'सुप आत्मनः क्यच्' इत्यनेन क्यचि अनुबन्धलोपे 'सुपो धातुप्रातिपदिकयोः' इत्यनेन धात्ववयवत्वात् सुब्लुकि 'सनाद्यन्ता धातवः' इत्यनेन क्यजन्तस्य धातुत्वाल्लिटि आमि 'आम' इत्यनेन लिटो लुकि च कृते 'कृञ्चानुप्रयुज्यते लिटि' इत्यनेन आमन्तलिट्परककृञोऽनुप्रयोगे लिटस्तिपि णलि द्वित्वे अभ्याससंज्ञायाम् उरदत्वे हलादिशेषे चुत्वे मकारस्यानुस्वारे परसवर्णे 'वान्तो यि प्रत्यये' इत्यनेन ओकारस्य वान्तादेशे 'गव्याञ्चकार' इति सिद्धम् । नन्वत्र वान्तादेशे कृते आमः आर्धधातुकत्वात् तस्मिन् परे वकाराद्धल उत्तरस्य यकारस्य 'यस्य हलः' इत्यनेन लोपः कुतो नेति चेन्न, 'सन्निपातपरिभाषया' यकारनिमित्तकावादेशसम्पन्नवकारस्य यकारलोपं प्रति निमित्तत्वाऽसम्भवात् ।

विष्णूयति ( ई० २६, ५८ )—विष्णुमिव आचरतीत्यर्थे 'उपमानादाचारे' इत्यनेन क्यचि सुब्लुकि अनुबन्धलोपे क्यजन्तस्य धातुत्वात् लटि तिपि शपि 'अकृत्सार्वधातुकयोर्दीर्घः' इत्यनेन दीर्घे 'विष्णूयति' इति ।

घटमाख्यदिति ( ई० ४२ )—विग्रहे 'तत्करोति तदाचष्टे' इति णिचि इष्ठवद्भावाद् भसंज्ञायां टिलोपे धातुत्वाल्लटि तिपि शपि अयादेशे 'घटयति' इति । लिटि-घटयाञ्चकार । लुडादौ-घटयिता । घटयिष्यति । घटयतु । अघटयत् । घटयेत् । अजघटत् । अघटयिष्यत् । इति ।

दधिस्यति ( ई० ३६ )—दधि इच्छतीति विग्रहे—'लालसायाम् ( उत्कटे-च्छायाम् ) सर्वेषां प्रातिपदिकानां क्यच् वक्तव्यः, तस्मिन् परे प्रकृतीनां सुगसुकौ च वक्तव्यौ' इत्यर्थक 'सर्वप्रातिपदिकानां क्यचि लालसायां सुगसुकौ' इति वार्तिकेन क्यचि सुकि च कृते सुब्लुकि क्यजन्तस्य धातुत्वाल्लटि तिपि शपि पररूपे 'दधि-स्यति' इति। असुगागमे तु—यणि 'दध्यस्यति' इति भवति।

पुत्रकाम्यति ( ई ५३ )—पुत्रमात्मनः इच्छति इति विग्रहे 'काम्यच' इति सूत्रेण काम्यच् प्रत्यये 'सनाद्यन्ताः—' इति धातुत्वात् सुब्लुकि 'पुत्रकाम्य' इति तस्माल्लटि तिपि शपि पररूपे उक्तं रूपं सिद्धम्। अत्र काम्यचः एकदेशस्य यकार-स्य 'यस्य हलः' इत्यनेन लोपस्तु न, तस्य अनर्थकत्वात्। नन्वेवं 'बेभिदिता' इत्यत्रापि यकारस्य अनर्थकत्वात् लोपो न स्यादिति चेन्न, 'यस्य हलः' इत्यनेन यकाराकारसंघातग्रहणमित्युक्तत्वात्।

अशनायति ( ई० ४२ )—अश्यते यत्तदशनम् = अन्नं, तद् भोक्तुमिच्छ-तीत्यर्थे 'अशनायोदन्य-धनाया-बुभुक्षा-पिपासा-गर्द्धेषु' इत्यनेन 'अशन' शब्दात् क्यचि 'क्यचि चे'ति ईत्वाऽभावे च निपातने सति 'अकृत्सार्वधातुकयोर्दीर्घः' इत्यनेन दीर्घे 'अशनायति' इति सिद्धम्।

अप्सरायते ( ई० ४२, ४७ )—अप्सरश्शब्दाद् 'ओजसोऽप्सरसो नित्य-मितरेषां विभाषया' इति वार्तिकबलात् 'कर्तुः क्यङ्सलोपश्च' इत्यनेन क्यङि सलोपे च कृते 'सनाद्यन्ता धातवः' इत्यनेन धातुसंज्ञायां लटि आत्मनेपदे तप्रत्यये शपि पररूपे एत्वे दीर्घे 'अप्सरायते' इति।

लोहितायति ( ई० ४२ )—'लोहित' शब्दात् भवत्यर्थे 'लोहितादिडाज्भ्यः क्यष्' इति सूत्रेण क्यषि अनुबन्धलोपे, नच 'काम्यच्' इव क्यषोऽपि ककारः उच्चारणसामर्थ्यात् श्रूयत एवेति वाच्यम्? क्यषः ककारस्य भाष्ये प्रत्याख्यानात्। एवं च 'लोहितय' इति स्थिते 'सनाद्यन्ता धातवः' इत्यनेन धातुसंज्ञायां लटि 'वा क्यषः' इत्यनेन परस्मैपदसंज्ञायां तिपि इत्संज्ञायां सार्वधातुकसंज्ञायां शपि पर-रूपे दीर्घे च कृते 'लोहितायति' इति। आत्मनेपदे तु—'लोहितायते' इति भवति। अलोहितो लोहितो भवतीत्यर्थः।

अत्र अभूत-तद्भावविषयत्वं कथं लभ्यमिति चेद् भृशादिसूत्रे 'अच्वेः' इत्यनुवर्तनात् लभ्यते। नन्वेवमभूततद्भावविषयत्वं क्यषोऽपि विशेषणं स्यादिति

-चेत्, अन्यकानुकरणाड्डाचो विहितत्वेन तस्य अभूततद्भावविषयत्वे अनुकरण-त्वस्य भङ्गापतेः । एवञ्च आदिशब्दग्राह्याणां श्यामादिशब्दानामपि न विशेषणम्, आदिशब्दस्य भाष्ये प्रत्याख्यानात् । तथा च वार्तिकम्–'लोहितडाज्भ्यः क्यष्-वचनं, भृशादिष्वितराणि' आदिग्रहणमपनीय लोहितशब्दाड्डाजन्तेभ्यश्च क्यष् वचनं कर्तव्यम्, इतराणि = लोहितादिगणपठितानि, प्रातिपदिकानि भृशादिष्वेव पठनीयानीत्यर्थः । एवञ्च लोहितादिगणपठित-श्यामादिशब्देभ्यः क्यङि नित्य-मात्मनेपदमेवेति ज्ञेयमिति दिक् ।

उदकमिच्छति ( ई० ४४ )—इति विग्रहे 'उदकीयति' इति भवति । तद्धि 'सुप आत्मनः क्यच्' इत्यनेन क्यचि 'क्यचि च' इत्यनेन ईत्वे 'सनाद्यन्ता' इति धातुसंज्ञायां लटि तिपि शपि पररूपे 'उदकीयति' इति ।

भाण्डानि समाचिनोति ( ई० ४४ )—इति विग्रहे 'सम्भाण्डयते' इति भवति । तथाहि—समुपसर्गकभाण्डशब्दात् 'भाण्डात्समाचयने' इति वार्तिकेन णिङि धातुसंज्ञायां लटि ङित्वादात्मनेपदे तप्रत्यये एत्वे शपि गुणे अयादेशे पररूपे च सिद्धिः ।

त्वापयति ( ई० ४३, ४३, ४४ )—त्वामाचष्टे इति विग्रहे युष्मच्छब्दात् णौ 'प्रत्ययोत्तरपदयोश्च' इत्यनेन मपर्यन्तस्य त्वादेशे 'त्व अद् इ' इति स्थिते पर-रूपात् पूर्वं कृताऽकृतप्रसङ्गित्वेन नित्यत्वात् टिलोपे 'त्व इ' इति स्थिते वृद्धौ 'त्वा इ' इति जाते 'अर्ती'त्यनेन पुकि ण्यन्तस्य धातुसंज्ञायां लटि तिपि शपि गुणे अयादेशे पररूपे च 'त्वापयति' इति ।

वस्तुतस्तु—'त्वादयति' इत्येव न्याय्यम् । तथाहि—'मपर्यन्तस्य' इत्य-धिकारात् 'प्रत्ययोत्तरपदयोश्च' इति सूत्रेण त्वादेशे अन्तरङ्गत्वात् पूर्वम् 'अतो गुणे' इति पररूपे ततः 'प्रकृत्यैकाच्' इति टिलोपनिषेधे वृद्धौ च सत्यां तत्सिद्धिः । नच 'प्रकृत्यैकाच्' इति सूत्रस्योदाहरणं वार्तिककारेण 'प्रेष्ठः–प्रेयान्' इति दत्तम् । तस्योदाहरणं भाष्यकारेण टिलोपे कर्तव्ये 'असिद्धवदत्राभात्' इति सूत्रेण प्रादेश-स्याऽसिद्धत्वात्, प्रादेशेऽकारोच्चारणसामर्थ्याद्वेति हेतुद्वयेन साधितम् । एवञ्च— 'प्रकृत्यैकाच्' इति सूत्रं भाष्ये प्रत्याख्यातमिति वाच्यम् ? प्रेष्ठेत्यादिप्रयोगोऽन्य-थासिद्धो न तु 'प्रकृत्यैकाच्' इति सूत्रस्य मुख्योदाहरणमित्येव तत्प्रत्याख्यानात् । मुख्योदाहरणन्तु—'त्वादयति' 'मादयति' इत्यादि ज्ञेयम् । वार्तिककारोक्तोदा-

हस्वत्वमन्यथासिद्धमिति भाष्यतात्पर्यम्। न तु तत्सूत्रमेव न कर्तव्यमिति तत्प्रत्याख्याने तात्पर्यमिति दिक्।

**क्षीरस्यति बालः (ई० ५६)**—क्षीरमिच्छतीति विग्रहे 'सुप आत्मनः क्यच्' इति क्यचि धातुत्वात् सुब्लुकि क्यजन्तस्य धातुत्वाल्लटि तिपि शपि पररूपे 'क्षीरलवणयोर्लालसायाम्' इत्यसुगि 'क्षीरस्यति' इति। 'लालसा' अत्र उत्कटेच्छा।

**कुमारायते (ई० ५८)**—कुमारीवाचरतीति विग्रहे 'क्यङ्मानिनोश्च' इति क्यङि पुंवत्त्वे सुब्लुकि पुंवत्त्वेन ङीषो निवृत्तौ 'अकृत्सार्वधातुकयोः–' इति दीर्घे क्यङन्तस्य धातुत्वाल्लटि तङि शपि पररूपे टेरेत्वे 'कुमारायते' इति।

**सपत्नायते (ई० ३७, ४१, ४४, ४५)**—सपत्नीवाचरतीति विग्रहे—सपत्नायते सपतीयते, सपत्नीयते, इति त्रीणि रूपाणि भवन्ति। तथा हि—

शत्रुपर्यायात् सपत्नशब्दात् 'शार्ङ्गरवाद्यञो ङीन्' इति ङीनि ततः सौ तदन्तात्सपत्नीवाचरतीति विग्रहे 'कर्तुः क्यङ् सलोपश्च' इति क्यङि कङयोरित्संज्ञायां लोपे च 'सुपो धातुप्रातिपदिकयोः' इति सुपो लुकि 'क्यङ्मानिनोश्च' इति पुंस्त्वेन ङीनो निवृत्तौ 'अकृत्सार्वधातुकयोः' इति दीर्घे 'सपत्नाय' इत्यस्य 'सनाद्यन्ता धातवः' इति धातुसंज्ञायां लटि तप्रत्यये शपि शपयोरित्संज्ञायां लोपे च 'सपत्नाय अ त' इति स्थिते 'अतो गुणे' इति पररूपे 'टित आत्मनेपदानां टेरे' इति एत्वे 'सपत्नायते' इति।

समानः पतिः = स्वामी यस्याः इति बहुव्रीहौ तु—सपतिशब्दात् 'नित्यं सपत्न्यादिषु' इति नादेशे नान्तत्वात् ङीपि च कृते उक्तप्रकारेण क्यङि भाषितपुंस्कत्वात् पुंवद्भावेन ङीब्नत्वयोर्निवृत्तौ दीर्घादिकार्ये 'सपतीयते' इति।

विवाहजन्यसंस्कारविशेषनिमित्तकं पतिशब्दमाश्रित्य समानः पतिः = भर्ता यस्याः इति बहुव्रीहौ उक्तरूपेण निष्पन्नस्य सपत्नीशब्दस्य नित्यस्त्रीत्वात् पुंस्त्वाभावेन क्यङादिकार्ये 'सपत्नीयते' इति।

**अजहलत् (ई० ४१)**—हलिं गृह्णाति 'हलयति' तस्य लुङि 'अजहलत्' इति। तथाहि—'हल्यादिभ्यो ग्रहणे' इति वार्तिकेन हलिकल्योरदन्तत्वनिपातनात् हलधातोः 'मुण्डमिश्रश्लक्ष्णलवणव्रतवस्त्रहलकलकृततूस्तेभ्यो णिच्' इति णिचि इष्ठवद्भावेन टिलोपे धातुसंज्ञायां लुङि तिपि मध्ये च्लौ 'णिश्रिद्रुस्रुभ्यः' इति चङि द्वित्वे अभ्यासादिकार्ये 'णेरनिटि' इति णिलोपे 'अजहलत्' इति।

हलिकल्योरिति—हलिकल्योरदन्तत्वनिपातनेन 'वृद्धौ सत्यां टिलोपः' इत्यस्य सिद्धिर्भवति। तथाहि—'वृद्धेर्लोपो बलीयान्' इति भाष्यवचनात् पूर्वं टिलोपे अग्लोपित्वाद् दीर्घसन्वद्भावयोरभावात् 'अजहलत्' 'अचकलत्' इति रूपद्वयसिद्धौ हलिकल्योरदन्तत्वनिपातनं व्यर्थमेव, तदेव व्यर्थीभूय 'वृद्धौ सत्यां टिलोपः' इति वचनं ज्ञापयति। इत्थं च स्वांशे चरितार्थम्। फलञ्च—'अपीपठत्–अपपठत्' इति रूपद्वयसिद्धिः। पूर्वोक्तभाष्यवचनेन पूर्वं टिलोपस्ततो वृद्धिरिति पक्षः सिद्धो भवति। हलिकल्योरदन्तत्वनिपातनेन च पूर्वं वृद्धिस्ततष्टिलोपः इति पक्षः सिद्धो भवति। एवञ्च प्रमाणद्वयेन मतद्वयं सिद्धं भवतीति पूर्वोक्तरूपद्वयस्यापि सिद्धिरिति दिक्।

आचारेऽवगल्भक्लीबहोडेभ्यः क्विब्वा वक्तव्यः (ई० ५०)—आचारेऽर्थे एभ्यः क्विब्वा स्यादित्यर्थः। वाग्रहणात् क्यङपि। वार्तिके अवगल्भादयः पचाद्यजन्ताः। क्विप्सन्नियोगेनानुदात्तत्वमनुनासिकत्वं चाच्प्रत्ययस्य प्रतिज्ञायते। न चात्र क्विप्प्रत्ययसन्नियोगेन अच्प्रत्ययस्यानुनासिकत्वादिनिपातनाद्गल्भादिघटकाकारस्य लोपेऽनेकाच्त्वाभावेन 'अवगल्भाञ्चक्रे' इत्यत्र आम् न स्यादिति वाच्यम्, 'साम्प्रतिकाभावे भूतपूर्वगतिराश्रीयते' इति परिभाषया आम्प्रत्ययस्य सिद्धत्वात्। उक्तवचने प्रमाणञ्च—'आचारेऽवगल्भ' इति प्रकृतवार्तिकमेव। नच आचारेऽर्थे—अवगल्भते, क्लीबते, होडते, इत्यादौ आत्मनेपदार्थं वार्तिकं सार्थकमिति वाच्यम्, 'धातूनामनेकार्थाः' इति वचनेन प्रत्ययरहितगल्भादिधातोरप्याचारेऽर्थे शक्तिप्रदर्शनाद् 'अवगल्भते' इत्यादौ तङः सिद्धत्वात्। वार्तिके अवोपसर्गविशिष्टपाठसामर्थ्यात् केवलगल्भादिधातोः उपसर्गान्तरविशिष्टाच्च क्यङेव भवतीति माधवादयः। परञ्च क्यङ्क्विपोर्नास्ति विवादो द्वाभ्यामपि भाव्यम्। किन्तु अवोपसर्गरहितगल्भादिभ्यः क्विपि सति परस्मैपदमेव स्यात्, नत्वात्मनेपदमित्येव वक्तुं युक्तम्। वार्तिकस्य मुख्यप्रयोजनं प्रयोगे आम्प्रत्ययस्य सिद्धिः। आत्मनेपदं तु गौणफलमिति दिक्।

ओजायते (ई० ४०)—ओजस्वीवाचरतीति विग्रहे 'कर्तुः क्यङ् सलोपश्च' इति सूत्रेण ओजश्शब्दात् क्यङि तत्सन्नियोगशिष्टेन सलोपे 'अकृत्सार्वधातुकयोः' इति दीर्घे धातुसंज्ञायां लटि क्यङो ङित्वादात्मनेपदे 'ओजायते' इति। अत्र क्यङ्सन्नियोगशिष्टसलोपस्तु नित्य एव, 'ओजसोऽप्सरसो नित्यमितरेषां विभाषया' इति वार्तिकेन व्यवस्थितत्वात्।

अवगल्भाञ्चक्रे ( ई० ३८, ४२ )—अवोपसर्गपूर्वकात् 'गल्भ्' धातोः पचाद्यचि कृते निष्पन्नात् 'अवगल्भ' शब्दात् 'आचारेऽवगल्भ-क्लीब-होडेभ्यः क्विब्वा वक्तव्यः' इत्यनेन विभाषया क्विपि तत्सन्नियोगेन चाऽनुदात्तत्वमनुनासिकत्वं चाऽच्प्रत्ययस्य प्रतिज्ञायते, ततो धातुसंज्ञायां लिटि अनुदात्तत्वप्रतिज्ञानादात्मनेपदे तप्रत्यये तस्य एशादेशे 'कास्यनेकाच आम् वक्तव्यः' इत्यनेन आमि 'आमः' इति लिटो लुकि 'कृञ्चानु' इति 'कृ' इत्यनुप्रयोगकलिट्प्रयोगे द्वित्वे अभ्यासादिकार्ये अनुस्वारे परसवर्णे यणि 'अवगल्भाञ्चक्रे' इति ।

( अत्र शङ्कासमाधिरुच्यतामिति प्रश्नश्चेदित्थं समाधेयम् )—

अवगल्भादयः पचाद्यजन्ताः । क्विप्सन्नियोगेनाऽनुदात्तत्वमनुनासिकत्वं चाच्प्रत्ययस्य प्रतिज्ञायते । न चात्र क्विप्प्रत्ययसन्नियोगेन अच्प्रत्ययस्यानुनासिकत्वादिनिपातनाद् गल्भादिघटकाकारस्य लोपेऽनेकाच्त्वाभावेन आम् न स्यादिति वाच्यम्, 'साम्प्रतिकाभावे भूतपूर्वगतिराश्रीयते' इति परिभाषया आम्प्रत्ययस्य सिद्धत्वात् । उक्तवचने प्रमाणञ्च—'आचारेऽवगल्भ' इति वार्तिकमेव । नचाचारेर्थे अवगल्भते इत्यादावात्मनेपदार्थं वार्तिकं सार्थकमिति वाच्यम्, 'धातूनामनेकार्थाः' इति वचनेन प्रत्ययरहितगल्भादिधातोरप्याचारेऽर्थे शक्तिप्रदर्शनादवगल्भते इत्यादौ तिङः सिद्धत्वात् । वार्तिकेऽवोपसर्गविशिष्टपाठसामर्थ्येन केवलगल्भादिधातोः उपसर्गान्तरविशिष्टाच्च गल्भादिधातोः क्यङेव भवतीति माधवादयः । परञ्च क्यङ्क्विपोर्नास्ति विवादो द्वाभ्यामपि भाव्यम्, किन्तु अवोपसर्गरहितेभ्यः गल्भादिभ्यः क्विपि सति परस्मैपदमेव स्यान्न त्वात्मनेपदमित्येव वक्तुं युक्तम् । वार्तिकस्य मुख्यप्रयोजनं प्रयोगे आम्प्रत्ययस्य सिद्धिः । आत्मनेपदन्तु गौणफलमिति दिक् ।

बुभाव ( ई० ४२ )—भूरिव भवतीति विग्रहे, भूशब्दात् 'सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः' इति क्विपि सर्वापहारे क्विबन्तस्य धातुसंज्ञायां लिटि तिपि णलि द्वित्वे अभ्याससंज्ञायां 'ह्रस्वः' इत्यनेन अभ्यासस्य ह्रस्वत्वे 'अभ्यासे चर्च' इति जश्त्वे 'अचोऽञ्णिति' इति वृद्धौ 'बुभाव' इति । नचाऽत्र 'भुवो वुग्लुङ्लिटोः' 'भवतेरः' इति सूत्रद्वयस्य प्रवृत्तिः कुतो नेति वाच्यम्? अभिव्यक्तत्वेन धातुपाठस्थ 'भू' इत्यस्यैव उभयत्र ग्रहणेन 'अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः' इति न्यायेन क्विबन्तस्याऽग्रहणात् ।

औजिढत् ( ई० ३८, ४२, ४८, ५१ )—'वह्' धातोः क्तिनि ढत्व-धत्व-

ष्टुत्व-ढलोपेषु कृतेषु सम्प्रसारणे पूर्वरूपे च 'ऊढिः' तमाख्यदिति विग्रहे 'तत्करोति' इति णिचि टिलोपे 'ऊढि' इति ण्यन्ताल्लुङि तिपि इपाविते 'आडजादीनाम्' इत्याटि 'आटश्च' इति वृद्धौ मध्ये च्लौ 'णि-श्रि-द्रु स्रु' इति चङि 'औ ढि अ त्' इति स्थिते ढत्व-धत्व-ष्टुत्व-ढलोपानामसिद्धत्वात् 'अजादेर्द्वितीयस्य' इति 'ढ्ति' शब्दस्य द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'कुहोश्चुः' इति हस्य चुत्वे 'औजिढत्' इति । अत्र ढलोपे कृते 'ढ्रलोप' इति दीर्घस्तु न, 'असिद्ध'परिभाषया ढलोपस्याऽसिद्धत्वात् ।

ढत्वादीनामसिद्धत्वे कर्त्तव्ये 'पूर्वत्राऽसिद्धीयमद्वित्वे' इत्यस्य प्रवृत्तिरपि न शङ्क्या, तस्याऽनित्यावात् । नच क्वचिदनित्यत्वेऽप्यत्र तदप्रवृत्तौ मानाभाव इति चेत्तन्मते 'ढि' शब्दस्य द्वित्वे 'औडिढत्' इत्येवेति दिक् ।

उः ( ई० ३८ )—अः = विष्णुः, स इवाचरतीति विग्रहे 'सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः' इति वार्तिकेन क्विपि धातुत्वाल्लिटि णलि तस्य जुसि द्वित्वे 'अ अ उस्' इति स्थिते अन्तरङ्गत्वात् पररूपे ततः 'अत आदेः' इति दीर्घे 'आतो लोप इटि च' इत्यालोपे सकारस्य रुत्वे विसर्गे 'उः' इति सिद्धम् ।

**पटपटायते** ( ई० ३८ )—पटच्छब्दात् 'अव्यक्तानुकरणाद् द्व्यजवरार्द्धादनितौ डाच्' इति डाचि विवक्षिते 'डाचि विवक्षिते द्वे बहुलम्' इति द्वित्वे ततो डाचि कृते 'नित्यमाम्रेडिते डाचि' इति पूर्वखण्डान्तस्य तकारस्य, उत्तरखण्डादेः पकारस्य च पररूपे एकस्मिन् पकारे, डित्वाट्टिलोपे पटपटाशब्दाड्डाजन्तात् 'लोहितादिडाज्भ्यः क्यष्' इति सूत्रेण क्यषि, क्यषन्तस्य धातुत्वाल्लटि 'वा क्यषः' इति परस्मैपदविकल्पपक्षे आत्मनेपदे तप्रत्यये शपि पररूपे 'पटपटायते' इति ।

**कनयति** ( ई० ३८, ५४ )—युवानमाचष्टे इति विग्रहे णिचि अनुबन्धलोपे 'युवाल्पयोः कनन्यतरस्याम्' इत्यनेन विभाषया कनादेशे टिलोपे ण्यन्तस्य धातुत्वाल्लटि तिपि शपि गुणे अयादेशे 'कनयति' इति । कनादेशाऽभावपक्षे 'यवयति' इति भवति ।

**त्रापयति** ( ई० ३८ )—तृप्रमाचष्टे इति विग्रहे णिचि अनुबन्धलोपे 'प्रियस्थिरस्फिरोरुबहुलगुरुवृद्धतृप्रदीर्घवृन्दारकाणां प्रस्थस्फवर्बंहिगर्वर्षित्रप्द्राघिवृन्दाः' इति सूत्रेण त्रपादेशे उपधावृद्धौ 'त्रापि' इति ण्यन्ताद्धातुसंज्ञायां लटि तिपि शपि गुणे अयादेशे 'त्रापयति' इति । केचित्त्वत्र संज्ञापूर्वकत्वान्न वृद्धिरित्याहुः ।

अवगल्भाद्यङ्के ( ई० ४२ )—न चात्र क्विप्प्रत्ययसन्नियोगेनाचप्रत्ययस्यानुनासिकत्वादिनिपातनाद् गल्भादिघटकाकारस्य लोपेऽनेकाच्त्वाभावेन आम् न स्यादिति वाच्यम् , 'साम्प्रतिकाभावे भूतपूर्वगतिराश्रीयत' इति परिभाषया आम्प्रत्ययस्य सिद्धत्वात् । उक्तवचने प्रमाणञ्च 'आचारेऽवगल्भ' इत्यादिवार्तिकमेव । न चाचारेऽर्थेऽवगल्भते इत्यादावात्मनेपदार्थं वार्तिकं सार्थकमिति वाच्यम् । 'धातूनामनेकार्थः' इति वचनेन प्रत्ययरहितगल्भादिधातोरप्याचारेऽर्थे शक्तिप्रदर्शनादवगल्भते इत्यादौ तङः सिद्धत्वात् । वार्तिकेऽवोपसर्गविशिष्टपाठसामर्थ्येन केवलगल्भादिधातोः उपसर्गान्तरविशिष्टाच्च गल्भादिधातोः क्यङेव भवतीति माधवादयः ।

परञ्च क्यङ्क्विपोर्नास्ति विवादो द्वाभ्यामपि भाव्यम् । किन्तु अवोपसर्गरहितेभ्यो गल्भादिभ्यः क्विपि सति परस्मैपदमेव स्यान्नत्वात्मनेपदमित्येव वक्तुं युक्तम् । वार्तिकस्य मुख्यप्रयोजनं प्रयोगे आम्प्रत्ययस्य सिद्धिः । आत्मनेपदं तु गौणफलमिति तत्त्वम् ।

उपसर्गसमानाकारम् ( ई० ४४, ४७, ५६, ५८ )—अयमाशयः—युद्धे योऽयं ग्रामशब्द इति व्याख्यानेन केवलग्रामशब्दस्य युद्धे शक्त्यभावात्सङ्ग्रामशब्दस्य लाभात् 'तत्करोति' इत्यादिना सङ्ग्रामयते इत्यादिसिद्धौ चुरादौ 'संग्राम युद्धे' इति संविशिष्टग्रामशब्दो व्यर्थीभूय 'उपसर्गसमानाकारम्' इत्यादिवचनं ज्ञापयति । तेन स्वमनायतेत्यादौ सूपसर्गस्य पृथक्करणं फलं भवति । अथ च ज्ञापकस्य सजातीयापेक्षत्वेन यत्रोपसर्गस्य सम्पूर्णरूपेण स्थितिस्तत्रैव पृथक्करणं भवति, यत्र तु गुणादेशेनोपसर्गस्यापहरणं भवति तत्र पृथक्करणन्न भवति । ततश्च ओढ इवाचर्येति विग्रहे आङः पृथक्करणाभावेनाव्ययपूर्वपदत्वाभावाल्ल्यप् न भवतीति फलम् । ज्ञापकस्य विशेषापेक्षत्वे–'उस्योमाङ्क्ष्वाटः प्रतिषेधो वक्तव्यः' इति वार्तिकं तत्प्रत्याख्यानपरकम् 'आटश्च' इति सूत्रे चकारग्रहणञ्च प्रमाणम् । अन्यथा—ओढीयदित्यादौ धातुसंज्ञायां कर्तव्यायामाङः पृथक्करणेन—'ओमाङोश्च' इति सूत्राप्रवृत्तौ वार्तिकं व्यर्थमेव । एवञ्च पररूपादिकार्याप्रवृत्तौ पुनर्वृद्धिविधानार्थं चकारग्रहणमपि व्यर्थम् । 'आटश्च' इति सूत्रे चकारग्रहणम् 'आटश्च' इति वृद्धिविषये यद्यत् कार्यं प्राप्नोति तत्तत्सर्वं निवारयतीति चकारग्रहणेन पररूपञ्च स्यादिति वार्तिकं निष्प्रयोजनमिति वार्तिकं प्रत्याख्यातं भगवता ॥

वृद्धौ सत्यां टिलोपः ( ई० ५८ )—अयमाशयः—'वृद्धेर्लोपो बलीयान्'

इति भाष्यवचनात्पूर्वं टिलोपे अग्लोपित्वाद्दीर्घसन्वद्भावयोरभावात् 'अजहलत्, अचकलत्' इति रूपद्वयसिद्धौ हलिकल्योरदन्तत्वनिपातनं व्यर्थमेव, तदेव व्यर्थीभूय वृद्धौ सत्त्यां टिलोपो भवतीति वचनं ज्ञापयति । इत्थञ्च स्वांशे चरितार्थं, फलञ्च—अपीपटत्, अपपटदिति रूपद्वयसिद्धिः, पूर्वोक्तभाष्यवचनेन पूर्वं टिलोपस्ततो वृद्धिरिति पक्षः सिद्धो भवति । हलिकल्योरदन्तत्त्वनिपातनेन च पूर्वं वृद्धिस्ततष्टिलोप इति पक्षः सिद्धो भवति । एवञ्च प्रमाणद्वयेन मतद्वयं सिद्धम्भवतीति पूर्वोक्तरूपद्वयस्यापि सिद्धिरिति सारांशः ।

त्वादयति—'मपर्यन्तस्य' इत्यधिकारात् 'प्रत्ययोत्तरपदयोश्च' इति सूत्रेण त्वादेशेऽन्तरङ्गत्वात्पूर्वम् 'अतो गुणे' इति पररूपे ततः 'प्रकृत्यैकाच्' इति टिलोपनिषेधे वृद्धौ च सत्यां तत्सिद्धिः । न च 'प्रकृत्यैकाच्' इति सूत्रस्योदाहरणं वार्तिककारेण प्रेष्ठः प्रेयानीति दत्तम् । तच्चोदाहरणं भाष्यकारेण टिलोपे कर्त्तव्ये 'असिद्धवदत्राभात्' इति सूत्रेण प्रादेशस्यासिद्धत्त्वात्, प्रादेशेऽकारोच्चारणसामर्थ्याद्वेति हेतुद्वयेन साधितम् । एवञ्च 'प्रकृत्यैकाच्' इति सूत्रं भाष्ये प्रत्याख्यातमिति वाच्यम्, प्रेष्ठेत्यादिप्रयोगोऽन्यथासिद्धो न तु 'प्रकृत्यैकाच्' इति सूत्रस्य मुख्योदाहरणमित्येव तद्भाष्याशयात् । मुख्योदाहरणं तु त्वादयतीत्यादयः । वार्तिककारोक्तोदाहरणं त्वन्यथासिद्धं भवतीत्येव भाष्यतात्पर्यम्, न तु तत्सूत्रमेव न कर्तव्यमिति तत्प्रत्याख्याने तात्पर्यमिति भावः ।

**अकवयीत्** ( ई० ५४, ५८ )—कविरिव 'कवयति' । तस्य लुङि 'अकवयीत्' इति । अत्र 'अकवि ईत्' इति स्थिते 'सिचि वृद्धिः–' इति वृद्धिः कुतो नेति न शङ्क्यम्, 'सिचि वृद्धिः' इत्यत्र सिचा धातोराक्षेपात्, 'ऋत इद्धातोः' इत्यतः धातोरित्यनुवर्तनाच्च धातुरेव यो धातुः इति व्याख्यानेन प्रवृत्त्यसम्भवात्, इति कैयटादयः । माधवादयस्तु 'सिचि वृद्धिः' इत्यत्र 'ऋत इद्धातोः' इत्यतः धातुग्रहणानुवृत्तौ मानाभावेन धातुरेव यो धातुरित्युक्तार्थालाभात् वृद्धौ सत्याम् 'अकवायीत्' इति वदन्ति ।

**इदामति** ( ई० ३६ )—इदमिवाचरतीति विग्रहे इदम्शब्दात् 'सर्वप्रातिपदिकेभ्यः क्विब् वा वक्तव्यः' इति वार्तिकेन क्विपि सर्वापहारे सुब्लुकि 'अनुनासिकस्य क्विझलोः क्ङिति' इति सूत्रेण उपधादीर्घे क्विबन्तस्य धातुत्वाल्लटि तिपि शपि अनुबन्धलोपे 'इदामति' इति सिद्धम् ।

**भृशायते** ( ई० ५६ )—अभृशो भृशो भवति भृशायते । अत्र 'भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः' इति सूत्रेण क्यङि सुब्लुकि धातुत्वाल्लटि तङि शपि पररूपे 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घे टेरेत्वे 'भृशायते' इति । 'अत्र सूत्रे 'अच्वेः' इति पर्युदासात् 'अभूततद्भावे' इति लब्धम् ।

**स्वमनायत** ( ई० ३७, ४०, ४१, ५० )—असुमनः सुमनो भवतीत्यर्थे 'भृशादिभ्यो भुव्यच्वेर्लोपश्च हलः' इति क्यङि सकारलोपे च कृते 'अकृत्सार्वधातुकयोर्दीर्घः' इति दीर्घे क्यङन्तस्य धातुत्वाल्लङि तङि सार्वधातुकसंज्ञायां शपि पररूपे मनश्शब्दात् प्रागेवाटि यणि रूपं सिद्धम् ।

ननु सुमनश्शब्दात् क्यङ्विधानेन सुमनश्शब्दस्याङ्गसंज्ञासत्त्वात् सुशब्दात्प्रागेव अट् स्यादिति चेन्न, 'सङ्ग्रामयुद्धे' इत्यत्र युद्धे सङ्ग्रामशब्दः, स च समुपसर्गविशिष्ट एवास्ति, न केवलग्रामशब्दः, ततो ग्रामशब्दपाठेनैव संग्रामशब्दलाभेन समुपसर्गविशिष्टपाठो व्यर्थीभूतो ज्ञापयति—धातुसंज्ञाप्रयोजकीभूतप्रत्ययस्य चिकीर्षितत्वे उपसर्गसमानाकारकपूर्वपदस्य पृथक्करणं भवतीति तात्पर्यात् । तेन स्वमनायत इत्यादौ सूपसर्गस्य पृथक्करणं फलं भवति । अथ च ज्ञापकस्य सजातीयापेक्षत्वेन यत्रोपसर्गस्य सम्पूर्णरूपेण स्थितिस्तत्रैव पृथक्करणं भवति, यत्र तु गुणादेशेन उपसर्गस्यापहरणं भवति तत्र पृथक्करणं न भवति । ततश्च ओढ इव आचर्येति 'ओढायित्वा' इत्यत्र आङः पृथक्करणाभावेन अव्ययपूर्वपदत्वाभावात् 'उन्मनाय्य' 'अवगल्भ्य' इतिवत् ल्यप् न भवतीति फलम् । ज्ञापकस्य विशेषापेक्षत्वे 'उस्योमाङ्क्ष्वाटः प्रतिषेधो वक्तव्यः' इति वार्तिकं तत्प्रत्याख्यानपरकम्—'आटश्च' इति सूत्रे चकारग्रहणं च मानम् । अन्यथा 'औढीयत्' इत्यादौ धातुसंज्ञायां कर्तव्यायाम् आङः पृथक्करणेन 'ओमाङोश्च' इति सूत्राऽप्रवृत्तौ वार्तिकं व्यर्थमेव । एवञ्च पररूपादिकार्याऽप्रवृत्तौ पुनर्वृद्धिविधानार्थं चकारग्रहणमपि व्यर्थम् । 'आटश्च' इति सूत्रे चकारग्रहणं 'आटश्च इति वृद्धिविषये यद्यत् कार्यं प्राप्नोति तत्सर्वं निवारयतीति चकारग्रहणेनैव पररूपं न स्यादिति वार्तिकं निष्प्रयोजनमिति भगवता भाष्यकारेण प्रत्याख्यातम् ।

**एवञ्च अवगल्भत, इति** ( ई० ४६ )—अयम्भावः–युद्धे योऽयं ग्रामशब्द इति व्याख्यानेन केवलग्रामशब्दस्य युद्धे शक्त्यभावात् संग्रामशब्दे लाभे 'तत्करोति' इत्यादिना णिचि संग्रामयते इत्यादि सिद्धौ चुरादौ 'संग्रामयुद्धे' इति संविशिष्ट-

ग्रामशब्दो व्यर्थीभूय 'उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक् क्रियते' इति वचनं ज्ञापयति । तेन स्वमनायत, उन्मनायते, उदमनायत इत्यादौ, तथा अवागल्भत, अवागल्भिष्ट, इत्यादावपि उपसर्गस्य पृथक्करणं फलं भवतीति बोध्यम् । अथ च ज्ञापकस्य सजातीयापेक्षत्वेन यत्रोपसर्गस्य सम्पूर्णरूपेण स्थितिस्तत्रैव पृथक्करणं भवति, यत्र तु गुणादेशेनोपसर्गस्यापहरणं भवति तत्र पृथक्करणं न भवति । ततश्च-ओढ इव आचर्यैति विग्रहे आङः पृथक्करणाऽभावेन अव्ययपूर्वपदत्वाऽभावात् 'ल्यप्' न भवतीति फलम् । ज्ञापकस्य विशेषापेक्षत्वे 'उस्योमाङ्क्ष्वाटः प्रतिषेधो वक्तव्यः' इति वार्तिकं तत्प्रत्याख्यानपरकम् 'आटश्च' इति सूत्रे चकारग्रहणं च प्रमाणम् , अन्यथा 'औढीयति' इत्यादौ धातुसंज्ञायां कर्तव्यायामङः पृथक्करणेन 'ओमाङोश्च' इति सूत्राप्रवृत्तौ वार्तिकं व्यर्थमेव । एवंच पररूपादिकार्याप्रवृत्तौ पुनर्वृद्धिविधानार्थं चकारग्रहणमपि व्यर्थम् । 'आटश्च' इति सूत्रे चकारग्रहणम् 'आटश्च' इति वृद्धिविषये यद्यत् कार्यं प्राप्नोति तत्तत्सर्वं निवारयतीति चकारग्रहणेनैव पररूपन्न स्यादिति वार्तिकं निष्प्रयोजनमिति प्रत्याख्यातं भगवता ।

**नमस्यति देवान्** ( ई० ४५, ५६ )—कारकविभक्तेर्बलीयस्त्वाद् द्वितीया । अत्र 'नमोवरिवश्चित्रङः क्यच्' इति सूत्रेण क्यचि सुब्लुकि धातुत्वाल्लटि तिपि शपि पररूपे 'नमस्यति देवान्' इति । पूजयतीत्यर्थः ।

**वरिवस्यति** ( ई० ५८ )—अत्र 'नमोवरिवश्चित्रङः क्यच्' इति परिचर्यायां क्यचि सुब्लुकि धातुत्वाल्लटि तिपि शपि पररूपे 'वरिवस्यति गुरून्' इति । शुश्रूषते इत्यर्थः ।

**अर्थापयति** ( ई० ५८ )—अर्थं करोति आचष्टे वेत्यर्थे 'सुप आत्मनः–' इति क्यचि सुब्लुकि 'अकृत्सार्वधातुकयोः–' इति दीर्घे 'अर्थवेदयोरप्यापुग्वक्तव्यः' इत्यापुगि धातुत्वाल्लटि तिपि शपि पररूपे उक्तरूपं सिद्धम् ।

**दरदमाचष्टे** ( ई० ४७, ५५ ) इति विग्रहे 'दारदयति' इति भवति । दरदिति कश्चिद्राजा, तस्यापत्यं दारदः ।

**णौ च संश्चङोरिति**—इदं सूत्रं णिजन्तप्रक्रियायामेवोभयत्र पठितम् । तच्च षष्ठाध्यायप्रथमपादस्थं प्रथमम् । सन्परे चङ्परे च णौ श्वयतेः सम्प्रसारणं वा स्यादित्यर्थः । 'अशूशवत्–अशिश्वयत्' इत्युदाहरणे । अपरं द्वितीयाध्यायचतुर्थ-

पादस्थम्। सन्परे चङ्परे च णौ इङो गाङ् वा स्यादित्यर्थः। 'अध्यजीगपत्-अध्यापिपत्' इत्युदाहरणे।

**भ्रशयति** ( ई० ३६ )—भृशमिव आचरतीति विग्रहे 'तत्करोति तदाचष्टे' इति चुरादिगणसूत्रेण सुब्लुकि ततः इष्ठवद्भावाद् भसंज्ञायां वृद्धौ सत्यां पूर्वं वा नित्यत्वात् 'यस्येति च' इत्यलोपे क्यजन्तस्य धातुत्वाल्लटि तिपि शपि अनुबन्धलोपे 'र ऋतः' इत्यनेन रत्वे गुणे अयादेशे 'भ्रशयति' इति सिद्धम्।

**अतितिरायत्** ( ई० ४४, ४५ )—तिर्यञ्चमाचष्टे इत्यर्थे णिचि इष्ठवद्भावेन टिलोपे तस्य बहिरङ्गत्वेनाऽसिद्धत्वात् तिरसस्तिर्यादेशे वृद्धौ आयि 'तिरायि' इत्यस्य धातुसंज्ञायां लुङि तिपि अडागमे मध्ये च्लौ चङि द्वित्वादिकार्ये णिलोपे 'अतितिरायत्' इति रूपम्।

न चात्र टिलोपेन अञ्चधातुत्वाभावात कथं तिर्यादेशः इति वाच्यम्? 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषया तिर्यादेशे कर्तव्ये टिलोपस्याऽसिद्धत्वेन अञ्चधातुत्वसत्त्वात्। न च तिर्यादेशे कृते पुनष्टिलोपः स्यादिति वाच्यम्? यथा अपाचितरामित्यत्र 'असिद्धवदत्राभात्' इति सूत्रेण प्रथमतलोपस्याऽसिद्धत्वेन तरब्-घटकतकारस्य पुनः 'चिणो लुक्' इति सूत्रेण लुक् न भवति, तथाऽत्रापि प्रथम-टिलोपस्यासिद्धत्वेन पुनष्टिलोपाभावात्। 'अङ्गकार्ये कृते पुनर्नाङ्गकार्यम्' इति परिभाषया वा पुनष्टिलोपाभावाच्चेति। न च प्रकृते उपधाह्रस्वः कुतो नेति वाच्यम्? अग्लोपित्वेन 'नाग्लोपिशास्वृदिताम्' इत्यनेन निषेधात्।

**औजढत्** ( ई० ४१, ४५, ४६ )—वह्धातोः क्तप्रत्यये ढत्व-धत्व-ष्टुत्व-ढलोपादिषु कृतेषु 'ऊढ' इति, तमाख्यदित्यर्थे 'तत्करोति तदाचष्टे' इति णिचि इष्ठवद्भावेन टिलोपे प्राप्ते 'णिचि अच आदेशो न द्वित्वे कर्तव्ये' इति निषेधात् धातुसञ्ज्ञायां लुङि तिपि अनुबन्धलोपे मध्ये च्लौ चङि अनुबन्धलोपे ढत्वादीनामसिद्धत्वात् 'हत' इत्यस्य द्वित्वे अभ्याससंज्ञायां हलादिशेषे अभ्यासस्य चुत्वे आदिवृद्धौ 'औजढत्' इति। 'पूर्वत्रासिद्धीयमद्वित्वे' इति ढत्वादीनामसिद्धत्वाभाव-पक्षे ढशब्दस्य द्वित्वे तु 'औडढत्' इति बोध्यम्।

**स्वापयति** ( ई० ५४ )—स्वमाचष्टे इति विग्रहे णिचि सति टिलोपे प्राप्ते तम्प्रबाध्य 'प्रकृत्यैकाच्' इति प्रकृतिभावे 'अचो ञ्णिति' इति वृद्धौ पुकि धातुत्वाल्लटि तिपि शपि गुणे अयादेशे पूर्वरूपे 'स्वापयति' इति।

**द्यौरिवाचरति** ( ई० ३७ )—इति विग्रहे क्विपि 'नः क्ये' इति निषेधेन अपदान्तत्वाद् 'दिव उत्' इत्युत्वाभावे तिपि शिपि लघूपधगुणे 'देवेति' इति माधवः । तत्त्वविदस्तु–लघूपधगुणं बाधित्वा अन्तरङ्गत्वात् 'छ्वो'रिति वकारस्य ऊठि यणि गुणे अवादेशे 'द्यवति' इत्याहुः ।

**कलिं गृह्णाति** ( ई० ३७ ) इति विग्रहे तिपि 'कलयति' इति रूपम् ।

**श्वानमाचष्टे** ( ई० ३७, ५३, ५४, ५६ )—इति विग्रहे णिचि इष्ठवद्भावात् 'नस्तद्धिते' इति टिलोपे भत्वात् सम्प्रसारणे तिपि शबादिकार्ये 'शावयति' इति । नच टिलोपं प्रबाध्य 'प्रकृत्यैकाच्' इति प्रकृतिभावः कुतो नेति वाच्यम् , येन नाप्राप्तन्यायेन टेरित्यस्यैव बाधकत्वात् ।

परे तु—इष्ठनि दृष्टस्यैव–इष्ठवत् , इति टेरित्येव टिलोपो इष्ठनि दृष्टो न तु 'नस्तद्धिते' इति । तेन 'नस्तद्धिते' इत्यस्य 'इष्ठव'दित्यतिदेशाभावेन प्रकृतिभावात् 'टेः' इति लोपस्याऽभावे सम्प्रसारणादिकार्ये 'शुनयति' इत्याहुः ।

**विद्वांसमाचष्टे** ( ई० ४६ )—विद्वयति, विदावयति, विदयति, इति मत-मतान्तरेण रूपत्रयं भवति । तथाहि—'विद्वस्' शब्दात् णिचि टिलोपे धातुत्वाल्लटि तिपि शपि गुणे अयादेशे 'विद्वयति' इति । ननु इष्ठवत्त्वात् भत्वे 'वसोः सम्प्र-सारणम्' इति सम्प्रसारणं कुतो नेति चेन्न, 'अङ्गवृत्ते पुनर्वृत्तावविधिः' इति निषे-धात् । वस्तुतस्तु 'विद्वयति' इत्यत्र 'टेः' इत्यसो लोपे सति वस्वन्तत्वाऽभावात् सम्प्रसारणाप्रसक्तेरङ्गवृत्तपरिभाषोपन्यासो वृथैवेति ।

केचित्तु विद्वच्छब्दाण्णौ इष्ठवत्त्वेन टिलोपे कृते वकारस्य सम्प्रसारणे पूर्वरूपे उकारस्य वृद्धौ आवादेशे धातुत्वाल्लटि तिपि शपि पूर्वरूपे 'विदावयति' इति वदन्ति । 'अपरे तु 'विदयति' इत्येव वदन्तीति ।

**तिराययति** ( ई० ५६ )—तिर्यञ्चमाचष्टे इत्यर्थे णिचि इष्ठवद्भावेन टिलोपे तस्य बहिरङ्गत्वेनासिद्धत्वात् तिरसस्तिर्यादेशे वृद्धौ आयि 'तिरायि' इति ततो लटि तिपि शपि गुणे अयादेशे पररूपे च रूपम् । न चात्र टिलोपेनाञ्चधातुत्वाभावा-त्कथं तिर्यादेश इति वाच्यम् । 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषया तिर्या-देशे कर्तव्ये टिलोपस्यासिद्धत्वेन अञ्चधातुत्वसत्त्वात् । नच तिर्यादेशे कृते पुनष्टि-लोपः स्यादिति वाच्यम् । यथाऽपाचितरामित्यत्र 'असिद्धवदत्राभात्' इति सूत्रेण प्रथमतलोपस्यासिद्धत्वेन तरब्घटकतकारस्य पुनः 'चिणो लुक्' सूत्रेण लुक् न

भवति, तथात्रापि प्रथमटिलोपस्यासिद्धत्वेन पुनष्टिलोपाभावात्। 'अङ्गकार्ये कृते पुनर्नाङ्गकार्यम्' इति परिभाषया वा पुनर्ष्टिलोपाभावाच्चेति दिक्।

शावयति—अयम्भावः-श्वानमाचष्टे इति विग्रहे 'नस्तद्धिते' इति टिलोपे सम्प्रसारणे वृद्धौ सत्यां च तन्सिद्धिः। नचात्र 'प्रकृत्यैकाच्' इति प्रकृतिभावे टिलोपो न स्यादिति वाच्यम्। 'येन नाप्राप्त'न्यायेन 'टेः' इत्यस्यैव बाधकत्वात्। यत्र यत्र 'प्रकृत्यैकाच्' इति सूत्रं प्रवर्तते तत्र तत्र 'नस्तद्धिते' इति सूत्रं न प्रवर्तते, 'टेः' इति सूत्रं तु—यत्र यत्र 'प्रकृत्यैकाच्' इति प्रवर्तते, तत्र तत्र सर्वत्रैव प्रवर्तते, इति 'टेः' इत्यस्यैव बाधकं सूत्रम्। प्रेष्ठेत्यादौ 'प्रकृत्यैकाच्' इति सूत्रविषये 'नस्तद्धिते' इति न प्रवर्तते 'टेः' इति सूत्रन्तु प्रवर्तत एवेति तत्त्वम्। इष्ठनि यद्यत् सूत्रं प्रवर्तते तस्यैव तस्यैव सूत्रस्यातिदेशो भवति। इत्थञ्च ब्रह्मिष्ठ इत्यादौ परत्वात् 'टेः' इत्यनेनैव टिलोपः सिद्धो भवतीति 'नस्तद्धिते' इति सूत्रस्य तत्राप्रवृत्तिः। तथा च 'नस्तद्धिते' इति सूत्राप्रवृत्तौ शुनयतीत्येव रूपं भवतीति केषाञ्चिन्मतम्।

त्वामाचष्टे—इति विग्रहे—'त्वापयति' इति भवति। तथाहि—युष्मच्छब्दात् णौ 'प्रत्ययोत्तरपदयोश्च' इत्यनेन मपर्यन्तस्य त्वादेशे 'त्व अद् इ' इति स्थिते पररूपात् पूर्वं कृताऽकृतप्रसङ्गित्वेन नित्यत्वात् टिलोपे 'त्व इ' इति स्थिते वृद्धौ 'त्वा इ' इति जाते 'अर्ती'त्यनेन पुकि ण्यन्तस्य धातुसंज्ञायां लटि तिपि शपि गुणे अयादेशे पररूपे च 'त्वापयति' इति।

वस्तुतस्तु—'त्वादयति' इत्येव न्याय्यम्। तथाहि—'मपर्यन्तस्य' इत्यधिकारात् 'प्रत्ययोत्तरपदयोश्च' इति सूत्रेण त्वादेशे अन्तरङ्गत्वात् पूर्वम् 'अतो गुणे' इति पररूपे ततः 'प्रकृत्यैकाच्' इति टिलोपनिषेधे वृद्धौ च सत्यां तत्सिद्धिः। न च 'प्रकृत्यैकाच्' इति सूत्रस्योदाहरणं वार्तिककारेण 'प्रेष्ठः-प्रेयान्' इति दत्तम्। तच्चोदाहरणं भाष्यकारेण टिलोपे कर्त्तव्ये 'असिद्धवदत्राभात्' इति सूत्रेण प्रादेशस्याऽसिद्धत्वात् प्रादेशेऽकारोच्चारणसामर्थ्याद्वेति हेतुद्वयेन साधितम्। एवञ्च—'प्रकृत्यैकाच्' इति सूत्रं भाष्ये प्रत्याख्यातमिति वाच्यम्? प्रेष्ठेत्यादिप्रयोगोऽन्यथासिद्धो न तु 'प्रकृत्यैकाच्' इति सूत्रस्य मुख्योदाहरणमित्येव तद्भाष्याशयात्। मुख्योदाहरणन्तु—'स्वादयति' 'मादयति' इत्यादि ज्ञेयम्। वार्तिककारोक्तोदाहरणमन्यथासिद्धमिति भाष्यतात्पर्यम्। न तु तत्सूत्रमेव न कर्त्तव्यमिति तत्प्रत्याख्याने तात्पर्यमिति दिक्।

**अमुमाचष्टे** ( ई० ३७, ४९ )—इति विग्रहे 'अदस् अच् इ' इति स्थिते टेरद्र्यादेशे अच् इत्यस्य टेर्लोपे 'अदद्रि इ' इति स्थिते 'अदसोऽद्रेः पृथङ् मुत्वम्' इति मते दकाराकारयोर्दकाररेफयोश्च मत्वोत्वयोः कृतयोः 'अमुमुइ इ' इति स्थिते प्रथमस्य इकारस्य णिचि परे वृद्धौ आयादेशे अमुमुआयीति ण्यन्ताल्लटि तिपि शपि पररूपे गुणेऽयादेशे–'अमुमुआययति' इति मुत्वस्याऽसिद्धत्वान्न यण् ।

**श्रीमतीं श्रीमन्तं वा**—आचष्टे इति विग्रहे श्रीमतीशब्दाण्णिचि 'णाविष्ठवत्' इत्यतिदेशेन 'भस्याढे' इति पुंवत्त्वे 'विन्मतोः' इति मतोर्लुकि रेफादिकारस्य वृद्धौ अयादेशे च कृते 'श्रायि' इति, तस्माल्लटि तिपि शपि गुणेऽयादेशे 'श्राययति' इति ।

**अशिश्रयत्** ( ई० ५३ )—श्रीमतीं श्रीमन्तं वा आचष्टे इति विग्रहे णिचि णाविष्ठवदित्यतिदेशेन 'भस्याढे–' इति पुंवत्त्वे 'विन्मतोः–' इति मतोर्लुकि धातु॰ त्वाल्लुङि तिपि अडागमे मध्ये च्लौ च्लेश्चङि 'णावचः आदेशो न द्वित्वे कर्तव्ये' इति वृद्धयायादेशयोः प्रागेव श्रीशब्दस्य द्वित्वे अभ्यासत्वे हलादिशेषे उत्तरखण्डे वृद्धयायादेशयोः कृतयोः उपधाह्रस्वे गुणे अयादेशे 'अशिश्रयत्' इति माधवः । मतुपो लुकि सति सन्नियोगशिष्टत्वेन अकारस्यापि लोपसत्त्वेन अग्लोपित्वान्नोपधा- ह्रस्वः इति माधवः ।

**साधयति** ( ई० ४० )—बाढमाचष्टे इति विग्रहे णिचि सुब्लुकि 'अन्तिक- बाढयोर्नेदसाधौ' इत्यनेन बाढशब्दस्य साधादेशे धातुत्वाल्लटि तिपि शपि गुणे- ऽयादेशे पूर्वरूपे 'साधयति' इति ।

**ज्यापयति** ( ई० ५४ )—वृद्धमाचष्टे इति विग्रहे णिचि सुब्लुकि 'वृद्धस्य च' इति वृद्धशब्दस्य ज्यादेशे वृद्धौ पुकि धातुत्वाल्लटि तिपि शपि गुणेऽयादेशे पूर्वरूपे 'ज्यापयति' इति ।

**वर्षयति** ( ई० ५५ )—वृद्धमाचष्टे इति विग्रहे णिचि सुब्लुकि 'प्रियस्थिर–' वृद्धशब्दस्य वर्षादेशपक्षे धातुत्वाल्लटि तिपि शपि गुणेऽयादेशे पूर्वरूपे 'वर्षयति' इति ।

**स्थापयति** ( ई० ४७ )—स्थिरमाचष्टे इति विग्रहे णिचि सुब्लुकि 'प्रिय- स्थिर–' इति सूत्रेण स्थिरशब्दस्य स्थादेशे वृद्धौ पुकि धातुत्वाल्लटि तिपि शपि गुणेऽयादेशे पूर्वरूपे 'स्थापयति' इति ।

त्रापयति ( ई० ३८ )—तृप्रमाचष्टे इति विग्रहे णिचि इष्ठवद्भावेन सुब्लुकि 'प्रियस्थिर-' इत्यादिना तृप्रशब्दस्य त्रपादेशे उपधावृद्धौ धातुत्वाल्लटि तिपि शपि गुणेऽयादेशे पररूपे 'त्रापयति' इति । अत्र संज्ञापूर्वकत्वान्न वृद्धिरित्येके । तन्मते 'त्रपयति' इत्येवेति ।

इति नामधातुप्रकरणम् ।

---

# अथ कण्ड्वादिप्रकरणम्

कण्ड्वादीनां धातुत्वप्रातिपदिकत्वोभयस्वीकारे फलं प्रमाणञ्च ( ई० ४१, ५६ )—कण्डूञ् इति दीर्घपाठेन प्रातिपदिकाः इति ज्ञायते । तथाहि—'कण्डूञ् गात्रविघर्षणे' इति धातोः कण्डु इति ह्रस्वान्त एव पठितव्यः । 'अकृत्सार्वधातुकयोः' इति दीर्घे कण्डूयते इति रूपं सेत्स्यतीति दीर्घान्तपाठो ज्ञापयति 'कण्ड्वादयः प्रातिपदिकाः' इति । यदि च कण्ड्वादयः प्रातिपदिकास्तर्हि 'कण्ड्वादिभ्यो यक्' इति सूत्रे ककारोपादानं व्यर्थमेव स्यात्, तदेव व्यर्थं सद् ज्ञापयति—'कण्ड्वादयो धातवः' इति । इत्थञ्च कण्ड्वादीनां धातुत्वं प्रातिपदिकत्वञ्चेत्युभयं सिद्धम् । अत एवोक्तं भाष्ये—

'धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि । आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः' इति ।

एवञ्च धातुपक्षे—'कण्डूयते' इत्यादीनां सिद्धिः । प्रातिपदिकत्वपक्षे यकि असति सति क्विपि च कृते-कण्डूः, धातुत्वादुवङि कण्डुवौ, कण्डुवः इति, प्रातिपदिकत्वे-यणि कण्ड्वौ, कण्ड्वः इत्यादि ।

कण्ड्वादिभ्य इति ( ई० ३७ )—अत्र सूत्रे 'धातोरेकाचः' इत्यस्माद्धातोरित्यनुवर्तते । तद्ग्रहणाभावे प्रातिपदिकादेव यक् स्यादित्यर्थे तु धातोर्लडादौ कण्डवतीत्याद्यनिष्टापत्तिः स्यात् । सुखदुःखादिप्रातिपदिकेभ्यो यकि अल्लोपाऽसम्भवेन मुख्यरीत्याद्यप्यसिद्धिप्रसङ्गाच्च ।

नच धातोरित्यनुवर्तनात् प्रातिपदिकादित्यर्थः कथं लभ्यते इति चेच्छृणु-कण्डूञ् इति दीर्घपाठेन 'प्रातिपादिकाः' इति ज्ञायते । तथाहि-'कण्डूञ् गात्रविघर्षणे' इति धातौ कण्डु इति ह्रस्वान्त एव पठितव्यः । 'अकृत्सार्वधातुकयोः' इति

दीर्घे कण्डूयते इति रूपे सिद्धे दीर्घान्तपाठो ज्ञापयति 'कण्ड्वादयः प्रातिपदिकाः' इति । यदि च कण्ड्वादयः प्रातिपदिकास्तर्हि 'कण्ड्वादिभ्यो यक्' इति सूत्रे कित्करणं व्यर्थं स्यात्, तदेव व्यर्थं सत् ज्ञापयति-'कण्ड्वादयो धातवः' इति । इत्थं च कण्ड्वादीनां धातुत्वं प्रातिपदिकत्वञ्च सिद्धम् । अत एवोक्तं भाष्ये-'धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि । आह चायमिमं दीर्घं मन्ये धातुर्विभाषितः ।' इति । एवञ्च धातुपक्षे 'कण्डूयते' इत्यादीनां सिद्धिः । प्रातिपदिकत्वपक्षे—यकि असति सति । क्विपि च कृते—कण्डूः धातुत्वादुवङि-कण्डुवौ, कण्डुवः इति । प्रातिपदिकत्वे-यणि कण्ड्वौ, कण्ड्वः इत्यादि ।

**कण्ड्वादीनां धातुत्वं प्रातिपदिकत्वं चेति** ( ई० ४२, ५८ )—'कण्डूञ् गात्रविघर्षणे' इति धातौ 'कण्डु' इति ह्रस्वान्त एव पठितव्यः, 'अकृत्सार्वधातुकयोः' इति दीर्घे 'कण्डूयते' इति रूपं सेत्स्यतीति दीर्घान्तपाठो ज्ञापयति—'कण्ड्वादयः प्रातिपदिकाः' इति। यदि च कण्ड्वादयः प्रातिपदिकाः तर्हि 'कण्ड्वादिभ्यो यक्' इति सूत्रे ककारोपादानं व्यर्थमेव स्यात्, तदेव व्यर्थं सत् ज्ञापयति 'कण्ड्वादयो धातव' इति । इत्थं च कण्ड्वादीनां धातुत्वं प्रातिपदिकत्वं चेत्युभयं सिद्धम् । अत एवोक्तं भाष्ये—'धातुप्रकरणाद्धातुः कस्य चासञ्जनादपि । आह चाऽयमिमं दीर्घं मन्ये धातुर्विभाषितः' इति ।

एवञ्च धातुपक्षे—'कण्डूयते' इत्यादीनां सिद्धिः । प्रातिपदिकत्वपक्षे—यकि असति सति क्विपि च कृते कण्डूः, धातुत्वादुवङि कण्डुवौ, कण्डुवः इति । प्रातिपदिकत्वे—यणि कण्ड्वौ, कण्ड्वः, इत्यादि ।

**असूयते** ( ई० ४५ )—'असु उपतापे' इति कण्ड्वादौ वर्तते, तत्र 'असू असूङ्' इत्येके पठन्ति । ततश्च ङित्त्वपक्षे असूङ्धातोः 'कण्ड्वादिभ्यो यक्' इति यकि धातुत्वाल्लटि तङि शपि टेरेत्वे 'असूयते' इति ।

**ईर्यते** ( ई० ४२ ) 'ईरञ् ईर्ष्यायाम्' इति धातुः, तस्मात् 'कण्ड्वादिभ्यो यक्' इति यकि 'हलि च' इति दीर्घे धातुत्वाल्लटि तङि शपि पररूपे टेरेत्वे 'ईर्यते' इति ।

**मेधायति** ( ई० ३७,३९ )—'मेधा आशुग्रहणे' इति धातोः 'कण्ड्वादिभ्यो यक्' इति यकि धातुत्वाल्लटि तिपि शपि 'मेधायति' इति ।

**सपर पूजायाम्** ( ई० ४० )—धातोः 'कण्ड्वादिभ्यो यक्' इत्यनेन यकि

अतो लोपे 'सपर्य' इति । तस्मात् 'सनाद्यन्ता' इति धातुत्वाल्लुङि तिपि अडागमे मध्ये च्लौ च्लेः सिचि सस्य इटि 'अस्तिसिचो पृक्तेः' इत्यनेन तस्य च ईटि 'यस्य हलः' इति यलोपे 'अतो लोपः' इति अलोपे उपधादीर्घे 'इट ईटि' इति सलोपे सवर्णदीर्घे 'असपारीत्' इति ।

लाट जीवने ( ई० ४० )—अस्मात् 'कण्ड्वादिभ्यो यक्' इति यकि, अतो लोपे 'सनाद्यन्ता' इति धातुत्वाल्लुङि तिपि अडागमे मध्ये च्लौ सिचि सस्य इटि 'अस्तिसिचोऽपृक्तेः' इति तस्य ईटि 'यस्य हलः' इति यलोपे अतो लोपे 'इट ईटि' इति सलोपे सवर्णदीर्घे 'अलाटीत्' इति ।

'तुरण त्वरायाम्' ( ई० ३८ )—अस्माद्धातोर्यकि सनि लुङि प्रथमपुरुषैकवचने 'अतुतुरणिषीत्' इति । तथाहि—'कण्ड्वादिभ्यो यक्' इति यकि अतो लोपे 'तुरण्य' इति । तस्मात् सनि सनः आर्धधातुकत्वादिटि 'सन्यङोः' इति द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'यस्य हलः' इति यलोपे 'अतो लोपः' इति अलोपे 'तुतुरणिस' इति स्थिते सन्नन्तस्य धातुत्वाल्लुङि प्रथमपुरुषैकवचने तिपि अडागमे मध्ये च्लौ तस्य सिचि 'अतुतुरणिस स त' इति स्थिते सस्य 'आर्धधातुकस्येड्वलादेः' इति इटि तस्य 'अस्तिसिचोऽपृक्ते' इति ईटि 'इट ईटि' इति सलोपे सस्य षत्वे अलोपे 'अतुतुरणिषीत्' इति सिद्धम् ।

लुटि तु—'तुतुरणिषिता' इति । तथाहि—'तुरण' इत्यस्माद्धातोर्यकि अतो लोपे 'तुरण्य' इति । तस्मात् सनि इटि द्वित्वादिकार्ये यलोपे अतो लोपे सन्नन्तस्य धातुत्वाल्लुटि प्रथमपुरुषैकवचने तिपि तासिप्रत्यये तिपो डादेशे डित्वाट्टिलोपे 'आर्धधातुकस्येड्वलादेः' इति इटि षत्वे 'तुतुरणिषिता' इति ।

'वरण गतौ' ( ई० ३८ )—अस्माद्धातोर्यकि सनि लुङि प्रथमपुरुषैकवचने 'अवीवरणिषीत्' इति । तथाहि—वरणधातोः 'कण्ड्वादिभ्यो यक्' इति यकि अतो लोपे 'वरण्य' इति । तस्मात् सनि सनः आर्धधातुकत्वादिटि 'सन्यङोः' इति द्वित्वे अभ्याससंज्ञायां हलादिशेषे 'सन्यतः' इति अभ्यासस्यातः इत्वे 'दीर्घो लघोः' इति दीर्घे 'यस्य हलः' इति यलोपे 'अतो लोपः' इति अलोपे 'वीवरणिस' इति स्थिते सन्नन्तस्य धातुत्वाल्लुङि प्रथमपुरुषैकवचने तिपि अडागमे मध्ये च्लौ तस्य सिचि 'आर्धधातुकस्येड्वलादेः' इति सस्य इटि 'अस्तिसिचोऽपृक्ते' इति तस्य ईटि 'इट ईटि' इति सलोपे अलोपे षत्वे 'अवीवरणिषीत्' इति सिद्धम् ।

**मेधा आशुग्रहणे** ( ई० ३७, ३९ )—अस्मात् 'कण्ड्वादिभ्यो यक्' इति यकि 'सनाद्यन्ताः' इति धातुत्वाल्लिटि आमि द्वित्वादिकार्ये प्रथमपुरुषबहुवचने 'मेधायाञ्चक्रुः' इति ।

**अरर आराकर्मणि** ( ई० ३९ )—अस्मात् 'कण्ड्वादिभ्यो यक्' इति यकि 'सनाद्यन्ता' इति धातुत्वाल्लिटि आमि द्वित्वादिकार्ये प्रथमपुरुषबहुवचने 'अररायाञ्चक्रुः' इति ।

**हृणीयते** ( ई० ५८ )—'हृणीङ् रोषणे लज्जायां च' इति धातोः 'कण्ड्वादिभ्यो यक्' इति यकि धातुत्वाल्लटि तङि शपि पररूपे टेरेत्वे उक्तं रूपं सिद्धम् ।

**उरस्यति** ( ई० ४४ )—'उरस् बलार्थः', तस्मात् 'कण्ड्वादिभ्यो यक्' इति यकि धातुत्वाल्लटि तिपि शपि पररूपे 'उरस्यति' इति । बलवान् भवतीत्यर्थः ।

इति कण्ड्वादिप्रकरणम् ।

# अथ प्रत्ययमालाप्रकरणम्

**पुपुत्रीयिषति** ( ई० ५०, ५८ )—'पुत्रीय' इति क्यजन्तात् सनि इटि अतो लोपे 'यथेष्टं नामधातुषु' इति वार्तिकोक्त्या 'सन्यङोः' इति पुत्रेति प्रथमैकाचः द्वित्वे अभ्यासत्वे हलादिशेषे धातुत्वाल्लटि तिपि शपि पररूपे षत्वे उक्तं रूपं सिद्धम् । त्रीति द्वितीयैकाचस्य द्वित्वे तु 'पुतित्रीयिषति' इति भवति ।

**अशिश्वीयिषति** ( ई० ५१ )—अत्र 'यथेष्टं नामधातुषु' इति वार्तिकेन प्रथमैकाचः श्वीत्यस्य द्वित्वं भवति ।

**इन्दिद्रीयिषति** ( ई० ४९ )—इन्द्रीयतेः सनि 'यथेष्टं नामधातुषु' इति वार्तिकेन इष्टवद्भावे सति द्रीशब्दस्य द्वित्वं भवति । 'यि' शब्दस्य द्वित्वे तु 'इन्द्रीयियिषति' इति भवति ।

**चन्दिन्द्रीयिषति** ( ई० ४२ )—अत्र चन्द्रीयतेः सनि 'यथेष्टं नामधातुषु' इति वार्तिकबलात् द्वितीयस्यैकाचः द्वित्वं भवति । 'नन्द्राः–' इति निषेधात् नकारस्य न द्वित्वमिति माधवः । वस्तुतस्तु आदिभूतादचः परेषां नदराणां न द्वित्वमित्येवेति भाष्यसम्मत्या माधवमतमत्र न युक्तिसहमिति तत्त्वविदः ।

**प्रापयियिषति** ( ई० ३७, ४४ )—प्रियमाख्यातुमिच्छति इति विग्रहे 'तत्करोति तदाचष्टे' इति ण्यन्तात् सनि इटि णाविष्ठवत्त्वात् प्रियशब्दस्य 'प्रियस्थिरे'ति प्रादेशे वृद्धौ पुकि णिचो गुणायादेशयोः षत्वे 'प्रापयिष' इति सन्नन्तात् लटि तिपि शपि 'यथेष्टं नामधातुषु' इति वार्तिकेन 'यि' शब्दस्यैव द्वित्वपक्षे पररूपे 'प्रापयियिषति' इति। एवं प्रियमाचक्षाणं प्रेरयतीत्यर्थेऽपि 'प्रापि' इति ण्यन्तादुक्ताद्धेतुमण्णौ तदन्तात् सनि इटि द्वितीयं णिचमाश्रित्य प्रथमणिचो लोपे द्वितीयणिचो गुणायादेशयोः 'प्रापयिष' इति सन्नन्ताल्लटि तिपि शपि उक्तवार्तिकेन यिशब्दस्य द्वित्वादिकार्ये 'प्रापयियिषति' इति।

अत्र 'यथेष्टं नामधातुष्वि'त्याद्यानां त्रयाणामेकाचामेकैकस्य द्वित्वे तु—'पिप्रापयिषति, प्रापिपयिषति, प्रापयियिषति' इति रूपत्रयं सिद्धं भवति।

**वारयियिषति** ( ई० ४१, ४५, ४३ )—उरुमाख्यातुमाचक्षाणं प्रेरयितुं वेच्छतीत्यर्थे उरुशब्दादाचष्टेऽर्थे णिचि 'प्रिय-स्थिर-स्फिर-उरु-बहुल-गुरु-वृद्ध-तृप्र-दीर्घ-वृन्दारकाणां प्र-स्थ-स्फ-वर्-बंहि-गर्-वर्षि-त्रप्-द्राघि-वृन्दाः' इति सूत्रेण वरादेशे उपधावृद्धौ 'वारि' इति ण्यन्तात् सनि इटि णिचो गुणाऽयादेशयोः षत्वे 'वारियिषे'ति सन्नन्तम्। माधवस्तु-वृद्धयङ्गीकारात् वारीत्यस्मात् हेतुमण्ण्यन्तात् सनि इटि प्रथमणेर्लोपे षत्वे 'वारयिषे'त्येव रूपम्। तत्र च 'यथेष्टं नामधातुषु' इत्याश्रित्य वकारस्य द्वित्वे विवारयिषति। रकारस्य द्वित्वे-वारिरयिषति। यकारस्य द्वित्वे—वारयियिषति। इति रूपत्रयं भवति।

इति प्रत्ययमालाप्रकरणम्

# अथ आत्मनेपदप्रकरणम्

**विजयते** ( ई० ३८ )—विपूर्वकात् 'जि' धातोः' 'विपराभ्यां जेः' इत्यनेन आत्मनेपदे लडादिकार्ये 'विजयते' इति भवति।

**पराजयते** ( ई० ३७ )—'विपराभ्यां जेः' इत्यनेनात्र आत्मनेपदं भवति।

**अध्ययनाय क्रमते** ( ई० ७६ )—'वृत्तिसर्गतायनेषु क्रमः' इत्यनेनात्र आत्मनेपदं सिद्धं भवति।

**प्रक्रमते** (ई० ३८)—'प्रोपाभ्यां समर्थाभ्याम्' इत्यनेनात्र आत्मनेपदं भवति।

शतमपजानीते (ई० ३४)—'अपह्नवे ज्ञः' इत्यनेनात्र आत्मनेपदं सिद्ध्यति ।

सन्तिष्ठते ( ई० ३७ )—'समवप्रविभ्यः स्थः' इत्यनेनात्र आत्मनेपदं सिद्धं बोध्यम् ।

संशय्य कर्णादिषु तिष्ठते यः ( ई० ३६ )—अत्र 'प्रकाशनस्थेयाख्ययोश्च' इत्यनेन आत्मनेपदं भवति ।

मुक्तावुत्तिष्ठते ( ई० ३३ )—'उदोऽनूर्ध्वकर्मणि' इत्यनेनात्र आत्मनेपदं बोध्यम् ।

उत्तपते (ई० ३२)—'उद्विभ्यां तपः' इत्यनेनात्र आत्मनेपदव्यवस्था बोध्या ।

आयच्छते (ई० ३४)—'आङो यमहनः' इति सूत्रेणात्र आत्मनेपदं भवति ।

आवधिष्ट-आहत ( ई० ४९ )—आङ्पूर्वाद्धन्धातोः 'आङो यमहनः' इत्यात्मनेपदे लुङि तङि टेरेत्वे च्लौ सिचि इटि 'आत्मनेपदेष्वन्यतरस्याम्' इति पाक्षिके हनो वधादेशे 'उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोगे प्रत्यये चिकीर्षिते पृथक्क्रियते' इति नियमेन 'आङः' पृथक्करणात् वधशब्दात् प्रागटि सवर्णदीर्घे षत्वे ष्टुत्वे 'आवधिष्ट' इति । वधादेशाभावपक्षे तङि च्लौ सिचि 'हनः सिच्' इति सिचः कित्त्वात् 'अनुदात्तोपदेश–' इति नलोपे 'ह्रस्वादङ्गात्' इति सिचो लोपे अटि दीर्घे 'आहत' इति ।

उदायत ( ई० ५४ )—उद् आङ्-पूर्वात् यम्धातोर्लुङि 'आङो यमहनः' इत्यात्मनेपदे तङि च्लौ सिचि 'यमो गन्धने' इति सिचः कित्त्वात् 'अनुदात्तोपदेश' इति नलोपे 'उपसर्गसमानाकारम्–' इति उदः पृथक्करणात् यमः प्रागटि सवर्णदीर्घे 'ह्रस्वादङ्गात्' इति सिचो लोपे 'उदायत' इति ।

सङ्गच्छते ( ई० ३८ )—सम्पूर्वकात्गम्धातोर्लटि 'समो गम्यृच्छिभ्याम्' इत्यात्मनेपदे टेरेत्वे शपि 'इषुगमियमां छः' इति छादेशे तुकि श्चुत्वे जश्त्वे चर्त्वे अनुस्वारे परसवर्णे 'सङ्गच्छते' इति ।

सङ्गसीष्ट–सङ्गंसीष्ट ( ई० ३४ )—सम्पूर्वाद्गम्धातोर्लिङि 'समो गम्यृच्छिभ्याम्' इत्यात्मनेपदे तङि सीयुटि 'सुट् तिथोः' इति सुटि 'वा गमः' इति लिङः कित्त्वेन 'अनुदात्तोपदेश–' इति गमो मस्य लोपे षत्वे ष्टुत्वे अनुस्वारे परसवर्णे 'सङ्गसीष्ट' इति । कित्वाऽभावपक्षे मस्यानुस्वारे 'सङ्गंसीष्ट' इति ।

धातोरर्थान्तरे वृत्तेर्धात्वर्थेनोपसंग्रहात् ।
प्रसिद्धेरविवक्षातः कर्मणोऽकर्मिका क्रिया ॥

अत्र ( १ ) धातोरर्थान्तरे वृत्तेः, ( २ ) धात्वर्थेनोपसंग्रहात् , ( ३ ) प्रसिद्धेः, ( ४ ) अविवक्षातः, इति वाक्यचतुष्टयम् । अकर्मिका क्रियेति सर्वत्र सम्बध्यते । प्रत्येकमुदाहरणं यथा—१. 'नदी वहति' इति । अत्र प्रापणार्थकस्य सकर्मकस्य वहेः स्यन्दनरूपेऽर्थान्तरे वर्तमानत्वात् अकर्मकत्वम् । २. 'जीवति' इति । अत्र प्राणरूपकर्मणो धात्वर्थेन = प्राणधारणरूपेण उपसंग्रहात् = अन्तर्भावात् , जीवतेरकर्मकता । ३. 'मेघो वर्षति' इति । अत्र वर्षणकर्मणो जलस्य प्रसिद्धत्वात् वर्षतेरकर्मकत्वम् । ४. 'हिताश्र यः संशृणुते स किं प्रभुः' ( ई० ४५ ) इति । ( हितात्= हितपुरुषात् , यः, न संशृणुते = स्वहितं न संशृणुते स किंप्रभुः = कुत्सितो राजेत्यर्थः ) अत्र स्वहितस्य वस्तुतः कर्मत्वेऽपि तदविवक्षयाऽकर्मकत्वम् ।

**कृष्णश्चाणूरमाह्वयते** ( ई० ३५ )—'स्पर्द्धायामाङः' इत्यनेनात्र आत्मनेपदं भवति ।

**रथेन सञ्चरते** (ई०३६)—अत्र 'समस्तृतीयायुक्तात्' इति आत्मनेपदं भवति ।

**भार्यामुपयच्छते** ( ई० ३८ )—'उपाद्यमः स्वकरणे' इत्यनेनात्र आत्मनेपदं सिद्धम् ।

**उपायत** ( ई० ४०, ४३ )—उप-आङ्-पूर्वकात् यम्धातोर्लुङि 'उपाद्यमः स्वकरणे' इत्यात्मनेपदे तङि 'उपसर्गसमानाकारम्—' इति आङः पृथक्करणात् यमः प्रागटि सवर्णदीर्घे च्लौ सिचि 'विभाषोपयमे' इति सिचः कित्वात् 'अनुदात्तोपदेश' इति मलोपे 'ह्रस्वादङ्गात्' इति सिज्लोपे 'उप आयत' इति स्थिते सवर्णदीर्घे रूपम्—'रामः सीतामुपायत' इति ।

**दास्या संयच्छते**—अत्र 'अशिष्टव्यवहारे दाणः प्रयोगे चतुर्थ्यर्थे तृतीया' इति वार्तिकेन 'दास्या' इत्यत्र चतुर्थ्यर्थे तृतीया । ततश्च दास्येति तृतीयान्तयुक्तात्सम्पूर्वकाद् दाण्धातोः 'दाणश्च सा चेच्चतुर्थ्यर्थे' इत्यात्मनेपदे लडादिकार्ये तत्सिद्धिः ।

**निविविक्षते**—निपूर्वकाद् विश्धातोः सनि 'हलन्ताच्च' इति सनः कित्वाद्गुणाऽभावे 'सन्यङोः' इति द्वित्वे अभ्यासत्वे हलादिशेषे 'व्रश्चे'ति षत्वे षस्य कत्वे

सनः सस्य षत्वे 'निविविक्ष' इति सन्नन्तस्य धातुसंज्ञायां 'पूर्ववत्सनः' इत्यात्मनेपदे लटस्तप्रत्यये शपि पररूपे टेरेत्वे उक्तं रूपं सिद्धम् ।

**एधो दकस्योपस्कुरुते** ( ई० ४३, ५३ )—अत्र 'गन्धनाऽवक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः' इति सूत्रेण प्रतियत्नेऽर्थे आत्मनेपदं भवतीति विशेषः । प्रतियत्नः = गुणाधानम् । 'अवोदैधौद्मप्रश्रथहिमश्रथाः' इति सूत्रे निपातितः एधशब्दोऽदन्तः । एधश्च उदकं चेति एधोदकं तस्य = एधोदकस्य, उपस्कुरुते = गुणमाधत्ते इत्यर्थः ।

**अनुक्रीडते** ( ई० ३७, ४१ )—अत्र 'क्रीडोऽनुसम्परिभ्यश्च' इत्यनेन आत्मनेपदं भवतीति विशेषः ।

**उत्तपते** ( ई० ३७ )—अत्र 'उद्विभ्यां तपः' इत्यनेन आत्मनेपदं भवतीति विशेषः ।

**संविद्रते** ( ई० ३७, ४३, ५० )—लुग्विकरणकसम्पूर्वकात् 'विद्' धातोर्लटि प्रथमपुरुषस्य बहुवचने रूपमिदम् । अत्र 'विदि-प्रच्छि-स्वरतीनामुपसंख्यानम्' इति वार्तिकेन आत्मनेपदम्, 'वेत्तेर्विभाषा' इत्यनेन विभाषया झादेशस्याऽतो रुडागमश्चेति विशेषः । रुडागमाभावपक्षे तु 'संविदते' इति बोध्यम् ।

**गां जानीते** ( ई० ३७, ३८, ४२ )—'अनुपसर्गाज्ज्ञः' इति सूत्रेणात्र आत्मनेपदमिति विशेषः ।

**विद्यामादत्ते** ( ई० ४१ )—आङ्पूर्वकात् दाधातोर्लटि 'आङो दोनास्यविहरणे' इति सूत्रेण आत्मनेपदे तप्रत्यये शपि तस्य श्लौ 'श्लौ' इति द्वित्वे अभ्यासादिकार्ये आ द दा त इति स्थिते 'अघोः' इति पर्युदासादीत्वाभावे 'श्नाभ्यस्तयोरातः' इत्याल्लोपे 'टित आत्मनेपदानां टेरे' इति एत्वे चर्त्वे आदत्ते, इति । विद्याम् + आदत्ते = 'विद्यामादत्ते, विद्यां गृह्णातीत्यर्थः । नच दाञो ञित्वादेवात्मनेपदसिद्धेः 'आङः' इति सूत्रं किमर्थमिति चेत्सत्यम्, अकर्त्रभिप्रायार्थत्वेनावश्यकत्वात् ।

**आहत** ( ई० ४० )—आङ्पूर्वाद्धन्तेर्लुङि 'आङो यमहनः' इति आत्मनेपदे तप्रत्यये मध्ये च्लौ सिजादेशे इत्वावितौ बलादित्वादिडागमे 'आत्मनेपदेष्वन्यतरस्याम्' इत्यनेन विकल्पेन हनो वधादेशे 'लुङ्लङ्' इति अडागमे दीर्घे 'आवधि स् त' इति स्थिते षत्वे ष्टुत्वे च 'आवधिष्ट' इति । वधादेशाभावपक्षे—'हनः सिच्'

इति कित्संज्ञायाम् 'अनुदात्तोपदेशवनति' इत्यादिसूत्रेण नकारस्य लोपे 'ह्रस्वादङ्गात्' इति सिचो लोपे 'आहत' इति च भवति।

**मा समृत, समार्त** ( ई० ३६, ४१ )—समुपसर्गात् भौवादिकस्य ऋधातोर्लुङि 'अर्तिश्रुदृशिभ्यश्चेति वक्तव्यम्' इति वार्तिकेन आत्मनेपदे तप्रत्यये मध्ये च्लौ तस्य सिजादेशे 'ह्रस्वादङ्गात्' इति सिचो लुकि माङ्योगात् आडागमाभावे 'मा समृत' इति। गुणादेशस्तु न 'उश्च' इति सिचः कित्त्वात्। माङ्योगाभावे तु—आटि 'आटश्च' इति वृद्धौ 'समार्त इति' बोध्यम्।

**उत्कुरुते** ( ई० ४१, ५८ )—'उत्' उपसर्गात् कृधातोर्लटि 'गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः' इति सूत्रेण आत्मनेपदे तप्रत्यये 'तनादिकृञ्भ्यः उः' इत्युप्रत्यये तमाश्रित्य ऋकारस्य गुणे रपरत्वे 'टित आत्मनेपदानां टेरे' इत्येत्वे 'उत्कुरुते' इति।

अयम्भावः—'गन्धने'ति सूत्रे गन्धनं = हिंसा, गन्ध अर्दने, अर्द हिंसायामित्यनयोश्चुरादौ पाठात्। तेन 'उत्कुरुते' इत्यत्रात्मनेपदसिद्धिः। ननु कथमेवं तस्य गन्धने वृत्तिः हिंसाया असत्त्वादिति चेन्मैवम्, उत्कुरुते इत्यस्य सूचयतीत्यर्थाभ्युपगमात्। 'सूचनं' हि प्राणवियोगानुकूलत्वाद्धिंसैवेति बोध्यम्।

**गडुं विनयति** ( ई० ४१, ४२ )—'कर्तृस्थे चाऽशरीरे कर्मणि' इति सूत्रे शरीरतादात्म्यापन्नस्यैव कर्तृतया शरीरस्य कर्तृस्थत्वासम्भवेन शरीरशब्दात् शरीरावयवो लक्ष्यते। तेन 'गडुं विनयति' इत्यत्र कर्मणो गडोः शरीरावयवत्वात् आत्मनेपदाभावेन वि उपसर्गात् णीञ् धातोर्लटि तिपि 'णो नः' इति नत्वे शपि गुणे अयादेशे 'विनयति' इति भवति।

**पदं सुष्टु कारयति** ( ई० ४१ )—अभ्यासवृत्तेर्मिथ्याशब्दोपपदात्कृञः आत्मनेपदं स्यादित्यर्थक 'मिथ्योपपदात्कृञोऽभ्यासे' इति सूत्रे मिथ्योपपदादित्यस्याभावे 'पदं, सुष्टुं = स्वरादिना शुद्धं, कारयति = उच्चारयति' इत्यत्रापि आत्मनेपदं स्यादतः सूत्रे तदावश्यकमिति ध्येयम्।

**शतं प्रकुरुते** ( ई० ४१, ४६ )—अत्र 'गन्धनाऽवक्षेपण-सेवन-साहसिक्य-प्रतियत्न-प्रकथनोपयोगेषु कृञः' इति सूत्रेण उपयोगेऽर्थे आत्मनेपदे तप्रत्ययो भवति। शतं प्रकुरुते इत्यस्य 'धर्मार्थं विनियुक्ते' इत्यर्थः।

**अनुवदति वीणा** ( ई० ४१ )—'अनोरकर्मकात्' इति सूत्रे 'व्यक्तवाचां समुच्चारणे' इत्यतः व्यक्तवाचामित्यनुवृत्तं विषयषष्ठ्यन्तमाश्रीयते । समुच्चारणे इति निवृत्तम् । ततश्च व्यक्तवाग्विषयात् ( मनुष्यकर्तृकात् ) अनुपूर्वादकर्मकाद्वदेरात्मनेपदं स्यादित्यर्थो भवति । तेन 'अनुवदते कठः कलापस्य' इत्यत्रात्मनेपदं सम्पद्यते । व्यक्तवाचामित्यस्यानुवृत्त्यभावे तु 'अनुवदति वीणा' इत्यत्रापि अनुपूर्वाद्वदेरकर्मकत्वेनात्मनेपदस्य दुर्वारत्वापत्तिः स्यादिति प्रष्टुराशयः ।

**मातुः सञ्जानाति** ( ई० ४१ )—'सम्प्रतिभ्यामनाध्याने' इति सूत्रे अनाध्याने इत्यस्याऽभावे अत्राप्यात्मनेपदं स्यादतस्तद्ग्रहणमावश्यकमिति भावः । न च यदा आध्याने कर्मणः शेषत्वविवक्षया षष्ठीमाश्रित्य मातुः सञ्जनातीति प्रयुज्यते तदा सम्पूर्वकस्य जानातेरकर्मकत्वात् 'सम्प्रतिभ्यामनाध्याने' इत्यात्मनेपदस्याऽप्रवृत्तावपि 'अकर्मकाच्च' १।३।४५॥ इति सूत्रेणात्मनेपदं दुर्वारं, तत्र सूत्रे 'अनाध्याने' इत्यस्याभावात् । नन्वेवं 'सम्प्रतिभ्याम्' इत्यत्रानाध्यानग्रहणस्य व्यर्थतापत्तिरिति चेन्मैवं, 'मातरं सञ्जानाति' आध्यायति । आध्यानञ्च, उत्कण्ठापूर्वकं स्मरणम् । इति सकर्मके चरितार्थत्वादिति वाच्यम् , एवं विप्रलम्भे सति 'अनाध्याने' इति योगविभागसामर्थ्यात् 'सम्प्रतिभ्याम्' इति पूर्वयोगेन 'अकर्मकाच्च' इति सूत्रेण च प्राप्तात्मनेपदस्य निषेधः स्यादित्यवधेयमित्याधुनिकाः ।

**उपरमति** ( ई० ४१ )—उपोपसर्गात् 'रम्' धातोः सकर्मकेषु 'उपाच्च' इति सूत्रेण नित्यैव परस्मैपदसंज्ञायाम् 'यज्ञदत्तमुपरमति' इति । उपरमयतीत्यर्थः । अकर्मकेषु तु 'विभाषाऽकर्मकात्' इति सूत्रेण विभाषया परस्मैपदसंज्ञायाम् 'उपरमति उपरमते' इत्युभयमपि भवति, तत्र निवर्तते इत्यर्थो बोध्यः ।

**आहध्वं मा रघूत्तमम्** ( ई० ३६ )—ननु 'आहध्वम्' इत्यादिप्रयोगे रघूत्तमस्य कर्मत्वेन स्वीयाङ्गकर्मकत्वाऽभावादकर्मकत्वाऽभावाच्च 'आङो यमहनः' इति आत्मनेपदाभाव इति चेन्न, प्राप्येत्यध्याहारमाश्रित्य रघूत्तमं प्राप्य माहध्वमिति प्रातिक्रियां प्रत्येव रघूत्तमस्य कर्मतया हन्तेरकर्मकत्वादात्मनेपदस्य निर्बाधात् । न च प्राप्येत्यध्याहारे श्वशुराज्जिह्रेतिवदत्रापि कर्मणि पञ्चम्या भाव्यमिति वाच्यम् , ल्यबन्तं विनैव यत्र ल्यबन्तार्थप्रतीतिस्तत्रैव 'ल्यब्लोपे कर्मण्यधिकरणे च' इति वचनस्य प्रवृत्तित्वात् । अत्र तु ल्यबन्तं विना ल्यबन्तार्थभानं न भवति, प्रत्युत मारणमेव प्रतिभातीति तस्याविषयत्वम् । अथवा भेत्तुमित्यादि तुमुन्नन्ता-

ध्याहारो वा कर्तव्यः । एवम्-'आजघ्ने' विषमविलोचनस्य वक्षः' इत्यत्र विषमविलोचनस्य वक्षः प्राप्य आजघ्ने' इति व्याख्यानेन हन्धातोरकर्मकत्वात् प्रयोगः साधुः । अथवा वक्षो भेत्तुमिति तुमुन्नन्ताध्याहारः कर्तव्यः, यथा लोके—मल्लोऽतिहर्षात्स्वस्यैव वक्षस्ताडयति, तथा विषमविलोचनस्य समीपमेत्य स्वकीयमेव वक्षः आजघ्ने ।

दर्शयते भवः, आरोहयते हस्तीति ( ई० ३६, ४३, ४७, ५४ )—'पश्यति भवः' इति द्वितीयकक्षायां या क्रियोच्यते सैव क्रिया 'दर्शयते भवः' इति चतुर्थक्रियायामुच्यते । एवञ्च क्रियासाम्यात् प्रथमकक्षायां भवरूपकर्मणः कर्तृत्वाच्चात्मनेपदं सिद्धम्भवति । एवं कर्तृस्थक्रियायाम् 'आरोहयते हस्ती' इत्यत्रापि, अथवा 'पश्यन्ति भवम्' 'आरोहन्ति हस्तिनम्' इति प्रथमकक्षायामेव कर्मणो हेतुत्वारोपात् णिचि 'दर्शयति भवः' 'आरोहयति हस्ती' इति तृतीयकक्षायामेव तङ् भवति । न च भवरूपकर्मणः कर्तृत्वाद् 'दर्शयति भवो भक्तान्' इति द्वियीयकक्षायां कथं तङ् न स्यादिति वाच्यम्, अध्यारोपितकर्तृव्यापारेण साम्येऽपि णिजर्थव्यापारस्याधिक्येन समानक्रियत्वाभावात् । तृतीयकक्षायां तु-धातूपात्तव्यापारस्य णिजर्थव्यापारस्य च त्यागेन समानक्रियत्वात् तङ् सिद्धः । न च तृतीयकक्षायामपि चाक्षुषज्ञानविषयीकरणरूपव्यापारयुक्तायाः 'पश्यन्ति भवं भक्ताः' इति प्रथमकक्षास्थक्रियाया अपेक्षया न्यूनता स्यादिति वाच्यम्, एवकारेणाधिकांशस्यैव निस्सारितत्वात् ।

व्यतिलुनीते ( ई० ३६, ४१ )—अत्र कर्तरि कर्मव्यतिहारे' इत्यनेनात्मनेपदं भवति । अन्यस्य ( शूद्रादेः ) योग्यं सस्यादिलवनम् अन्यः ( ब्राह्मणः ) करोतीति 'व्यतिलुनीते' इत्यस्यार्थः ।

अपोपसृष्टकिरतेर्लुङि तिपि ( ई० ३६, ३९ )—'अपाकारीत्' इति भवति । 'अपाच्चतुष्पाच्छकुनिष्वालेखने' इति सूत्रे आलेखनम् = खननम् । तेन 'गजोऽपाकारीत्' इत्यत्र हर्षे सत्यपि आलेखनाऽभावात सुट् न । 'किरतेर्हर्षजीविकाकुलायकरणेष्विति वाच्यम्' इत्यात्मनेपदविधौ ससुट्कानामेव भाष्ये उदाहरणात् तदपि नेति तत्त्वविदः ।

आक्रमते ( ई० ३९ )—आङ्पूर्वकात् उद्गमनार्थक क्रम्धातोः 'आङ उद्गमने' इति सूत्रेण आत्मनेपदे 'आक्रमते' इति ।

**परिमृष्यति** ( ई० ३९ )—परीत्युपसर्गपूर्वात् 'मृष तितिक्षायाम्' इति दैवादिकस्य मृष्धातोः स्वरितेत्त्वात्पदद्वये प्राप्ते 'परेर्मृषः' इति सूत्रेण आत्मनेपदं प्रबाध्य परस्मैपदे 'परिमृष्यति' इति ।

**विवदन्ते** ( ई० ३९ )—क्षेत्रे विरुद्धं व्यवहरन्तीत्यर्थः । 'वि' इत्युपसर्गात् 'वद्' धातोः 'भासनोपसम्भाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः' इति सूत्रेण आत्मनेपदे 'विवदन्ते' इति । 'विमतौ' इत्यस्योदाहरणमेतत् ।

**उपक्रमते** ( ई० ३९ )—उपोपसर्गात् क्रम्धातोः 'प्रोपाभ्यां समर्थाभ्याम्' इत्यनेन आत्मनेपदे 'उपक्रमते' इति ।

**संगिरते** ( ई० ३९ )—समुपसर्गात् 'गॄ' धातोः 'समः प्रतिज्ञाने' इत्यनेन आत्मनेपदे 'संगिरते' इति सिद्धम् ।

**आवधिष्ट** ( ई० ३९ )—हन्धातोर्लुङि 'आङो यमहनः' इत्यनेन आत्मनेपदे तप्रत्यये 'आत्मनेपदेष्वन्यतरस्याम्' इत्यनेन विभाषया हनो वधादेशे अडागमे मध्ये च्लौ च्लेः सिचि 'आ अ वध स तु' इति स्थिते सवर्णदीर्घे सस्य इटि अतो लोपे सकारस्य षत्वे ष्टुत्वे 'आवधिष्ट' इति । वधादेशाभावपक्षे 'आहत' इति ।

**रामः सीतामुपायत** ( ई० ४०, ४२ )—'उप' उपसर्गात् 'यम' धातोर्लुङि 'उपाद्यमः स्वकरणे' इत्यनेन आत्मनेपदे तप्रत्यये मध्ये च्लौ च्लेः सिचि अडागमे सवर्णदीर्घे 'विभाषोपयमने' इत्यनेन सिचः कित्वपक्षे 'अनुदात्तोपदेशे'ति मलोपे 'ह्रस्वादङ्गात्' इति सिज्लोपे 'उपायत' इति । किद्वद्भावाऽभावपक्षे 'उपायंस्त' इति ।

**गर्धयते** ( ई० ४०, ४२, ५४ )—अत्र 'गृधिवञ्च्योः प्रलम्भने' इत्यनेन आत्मनेपदमिति विशेषः ।

**व्यतिपूर्वादिति** ( ई० ४२ )—व्यतिपूर्वात् 'अस्' धातोर्लटि मध्यमपुरुषबहुवचने 'कर्तरि कर्मव्यतिहारे' इत्यात्मनेपदे ध्वमि एत्वे श्नसोरल्लोपः' इति अल्लोपे 'व्यति स् ध्वे' इति स्थिते 'धि च' इति सलोपे 'व्यतिध्वे' इति भवति ।

**उपपूर्वादिति** ( ई० ४२ )—उपपूर्वाद् 'यम्' धातोर्लुङि प्रथमपुरुषस्य बहुवचने 'उपाद्यमः स्वकरणे' इत्यात्मनेपदे सति 'आत्मनेपदेष्वन्यतरस्याम्' इति झस्य अतादेशे अडागमे सवर्णदीर्घे मध्ये च्लौ सिचि 'विभाषोपयमने' इति विभाषया

सिचः कित्वेन 'अनुदात्तोपदेश' इत्यनेन मकारलोपे 'ह्रस्वादङ्गात्' इति सिचो लोपे च विहिते 'उपाय अत' इति स्थिते 'अतो गुणे' इति पूर्वरूपे 'उपायत' इति। किदभावे 'अनुदात्तोपदेश-' इत्यस्याऽप्राप्त्या मस्यानुस्वारे 'उपायंस्त' इति च भवति।

**सुवर्णमुत्तपति** ( ई० ४२ )—'उद्विभ्यां तपः' इत्यत्र 'स्वाङ्गकर्मकाच्चेति वक्तव्यम्' इति वार्तिकं वर्त्तते तेनात्र आत्मनेपदं न भवति। सुवर्णमुत्तपतीत्यस्य सन्तापयति, विलापयति वेत्यर्थः।

**संस्वरते** ( ई० ४२ )—'विदि-प्रच्छि-स्वरतीनामुपसंख्यानम्' इति वार्तिकेन अत्र आमनेपदं भवति।

**माणवकमुपनयते** ( ई० ४२, ४९ )—अत्र 'सम्माननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः' इत्यात्मनेपदं भवति।

**धर्मं जिज्ञासते** ( ई० ४२ )—अत्र 'ज्ञा-श्रु-स्मृ-दृशां सनः' इत्यात्मनेपदमिति विशेषः।

**अपस्किरते वृषः** ( ई० ४२, ४८, ५४ )—अत्र 'किरतेर्हर्षजीविकाकुलायकरणेष्विति वाच्यम्' इति वार्तिकेन आत्मनेपदम्। 'अपाच्चतुष्पाच्छकुनिष्वालेखने' इत्यनेनात्र सुट् च विशेषो भवति। अपस्किरते वृषो हृष्टः = हर्षाद् भूमिं लिखन् धूल्यादि विक्षिपतीत्यर्थः। 'सुडपि हर्षादिष्वेव वक्तव्यः' इति वार्तिकमुक्तं, तेन 'अपकिरति कुसुमम्' इत्यत्र तङ्सुटौ नेति।

**ऋचि क्रमते बुद्धिः** ( ई० ४२, ५४ )—'वृत्तिसर्गतायनेषु क्रमः' इति सूत्रेण आत्मनेपदमत्र विशेषः।

**माणवकं वञ्चयते** ( ई० ४०, ४२, ५४ )—अत्र 'गृधिवञ्च्योः प्रलम्भने' इति सूत्रेण ण्यन्तात् आत्मनेपदमिति विशेषः।

**स्वं यज्ञं यजति**—( ई० ४३, ४९ )—अत्र स्वशब्देन फलस्याऽऽत्मगामित्वावगमात् 'स्वरितञितः कर्त्रभिप्राये क्रियाफले' इति नित्यात्मनेपदं प्रबाध्य 'विभाषोपपदेन प्रतीयमाने' इति विभाषया भवति। तेन विकल्पपक्षे 'स्वं यज्ञं यजति' इति बोध्यम्। अत्र 'स्वम्' इत्यस्य स्वीयमित्यर्थः।

**एधोदकस्योपस्कुरुते** ( ई० ४३ )—'गन्धनाऽवक्षेपण-सेवन-साहसिक्य-

प्रतियत्न-प्रकथनोपयोगेषु कृञः' इत्यनेन प्रतियत्नेऽर्थे आत्मनेपदं भवति। प्रतियत्नो गुणाधानम्।

प्रकृते 'अबोदैधौद्मप्रश्रथहिमश्रथाः' इति सूत्रे निपातितोऽदन्त एधशब्दो गृह्यते चेत्तदा एधाश्च उदकञ्च एधोदकं तस्य एधोदकस्येति बोध्यम्। यदि सान्तो गृह्यते तदा एधांसि च दकं चेति विग्रहः। दकशब्दोऽप्युदकवाची एव—'प्रोक्तं प्राज्ञैर्भुवनममृतं जीवनीयं दकं च' इति हलायुधकोशादिति दिक्।

**क्रमन्तेऽस्मिन् शास्त्राणि** ( ई० ४३ )—अत्र 'वृत्ति-सर्ग-तायनेषु क्रमः' इति सूत्रेण तायनेऽर्थे क्रम्धातोरात्मनेपदं भवति। तायनं वृद्धिः। क्रमन्तेऽस्मिन् शास्त्राणि स्फीतानि भवन्तीत्यर्थः।

**णेरणावति** ( ई० ४१ )—अत्र सूत्रे चत्वारि वाक्यानि प्रतीयन्ते। तथाहि-'णेः' इत्येकं वाक्यम्। 'अणौ यत्कम णौ चेत्' इति द्वितीयम्। 'स कर्त्ता' इति तृतीयम्। 'अनाध्याने' इति चतुर्थम्। आत्मनेपदस्याधिकारः। द्वितीययोगे कर्मपदस्य क्रियापरत्वम्। तृतीययोगे द्वितीययोगस्यानुवृत्तिः, तत्र कर्मपदस्य कर्मकारकबोधकत्वम्। तथा च-ण्यन्तादात्मनेपदं स्यादणौ या क्रिया सैव ण्यन्तेनोच्यते, अणौ यत्कर्मकारकं स चेण्णौ कर्त्तास्यान्नत्वाध्याने इति तदर्थः। एतदुदाहरणानि तु अपरिस्पन्दनसाधनसाध्याः कर्तृस्थभावकाः सपरिस्पन्दनसाधनसाध्याः कर्तृस्थक्रियाश्च। तथाहि—( १ ) पश्यन्ति भवं भक्ताः। ( २ ) पश्यति भवः। ( ३ ) दर्शयन्ति भवं भक्ताः। ( ४ ) दर्शयते भवः। इति क्रमिकोदाहरणानि बोध्यानि।

उदाहरणसङ्गमस्तु इत्थम्—पश्यति भवः इति द्वितीयकक्षायां या क्रियोच्यते सैव क्रिया दर्शयते भव इति चतुर्थकक्षायामुच्यते। एवञ्च क्रियासाम्यात् प्रथमकक्षायां भवरूपकर्मणः कर्तृत्वाच्चात्मनेपदं सिद्धम्भवति। एवं कर्तृस्थक्रियायामारोहयते हस्तीत्यत्रापि अथवा पश्यन्ति भवमारोहयन्ति हस्तिनमिति प्रथमकक्षायामेव कर्मणो हेतुत्वारोपाण्णिचि दर्शयति भवः, आरोहयति हस्तीति। ततश्च णिजर्थव्यापारस्य अध्यारोपितकर्तृव्यापारस्य च त्यागेन दर्शयते भव इति तृतीयकक्षायामेव तङ् भवति। न च भवरूपकर्मणः कर्तृत्वात् दर्शयति भवो भक्तानिति द्वितीयकक्षायां कथं तङ् न स्यादिति वाच्यम्, अध्यारोपितकर्तृव्यापारेण साम्येऽपि णिजर्थव्यापारस्याधिक्येन समानक्रियात्वाभावात्। तृतीयकक्षायां तु धातूपात्तव्यापारस्य णिजर्थव्यापारस्य च त्यागेन समानक्रियात्वात्तङ्सिद्धिः। नच तृतीयकक्षा-

यामपि चाक्षुषज्ञानविषयीकरणरूपव्यापारयुक्तायाः पश्यन्ति भवं भक्ता इति प्रथमकक्षास्थक्रियाया अपेक्षया न्यूनता स्यादिति वाच्यम्, एवकारेणाधिक्यांशस्यैव निस्सारितत्वात्।

**समारत** ( ई० ४३ )—समुपसर्गात् श्लुविकरणक 'ऋ' धातोर्लुङि 'समो गम्यृच्छिभ्याम्' इति सूत्रस्थ—'अर्ति-श्रु-दृ-शिभ्यश्चेति वक्तव्यम्' इति वार्तिकेन आत्मनेपदे तप्रत्यये मध्ये च्लौ तस्य 'सर्ति-शास्त्यर्तिभ्यश्च' इति सूत्रेण अङि 'आडजादीनाम्' इत्यादि 'आटश्च' इति वृद्धिं बाधित्वा पूर्वं 'ऋदृशोऽङि गुणः' इति गुणे रपरत्वे पश्चात् वृद्धौ 'समारत' इति।

भौवादिकस्थस्य 'ऋ' धातोस्तु—'समार्त' इति भवति। तथा हि—समुपसर्गात् 'ऋ' इत्यस्माद्धातोर्लुङि 'अर्ति-श्रु-दृ' इति वार्तिकेन आत्मनेपदे तप्रत्यये अजादित्वादाडागमे मध्ये च्लौ तस्य सिजादेशे 'सम् आ ऋ स् त' इति स्थिते 'उश्च' इति कित्वात् गुणाभावे 'ह्रस्वादङ्गात्' इति सिचो लुकि 'आटश्च', इति वृद्धौ रपरत्वे 'समार्त' इति।

नचात्राऽपि 'सर्तिशास्त्यर्ती'ति च्लेरङ् कुतो नेति वाच्यम्? अत्र सूत्रे लुप्तवकरणेन सासिना साहचर्यात् 'सत्यर्तीति जौहोत्यादिकमेव गृह्यते' इति कौमुद्यामुक्तत्वात्। ( केचित्वत्र 'समार्ष्ट' इति वदन्ति। तद्व्याख्यानन्तु प्रकृतप्रश्नाशयाऽनुपयुक्तत्वादश्रद्धेयमिति दिक्। )

**विनयति विपादिकाम्** ( ई० ४३,५० )—'णीञ् प्रापणे' अस्मात् 'स्वरितञितः' इत्येव आत्मनेपदे सिद्धे 'कर्तृस्थे चाऽशरीरे कर्मणि' इति सूत्रं नियमयति—'कर्मकारके कर्तृस्थे सति णीञ्धातोर्यदात्मनेपदं कर्तृगे फले ञित्वात् प्राप्तं, तच्छरीरावयवभिन्ने एव सति कर्तृकारके स्यात्' इति। नच सूत्रस्थशरीराग्रहणात् शरीरावयव इति कथमुच्यते इति चेत् सत्यम्? शरीरतादात्म्यापन्नस्यैव कर्तृतया शरीरस्य कर्तृस्थत्वासम्भवेन सूत्रे शरीरशब्दात् शरीरावयवी लक्ष्यते। तेन प्रकृते विपादिकायाः शरीरावयवत्वात् आत्मनेपदाभावेन 'वि' उपसर्गात् 'णी' धातोर्लटि तिपि 'णो नः' इति नत्वे शपि गुणे अयादेशे 'विनयति' इति सिद्धं भवतीति। 'पादस्फोटो विपादिका' इत्यमरः।

**दर्शयते भवः इति** ( ई० ४३ )—'णेरणौ यत्कर्म णौ चेत् स कर्ताऽनाध्याने' इत्यस्योदाहरणमिदम्। तस्य सङ्गमस्त्वित्थम्—

पश्यति भवः इति द्वितीयकक्षायां या क्रियोच्यते सैव क्रिया दर्शयते भवः इति चतुर्थकक्षायामुच्यते । एवञ्च क्रियासाम्यात् प्रथमकक्षायां भवरूपकर्मणः कर्तृत्वाच्चात्मनेपदं सिद्धं भवति । एवं कर्तृस्थक्रियायामारोहयते हस्तीत्यत्रापि अथवा पश्यन्ति भवमारोहन्ति हस्तिनमिति प्रथमकक्षायामेव कर्मणो हेतुत्वारोपाण्णिचि दर्शयति भवः, आरोहयति हस्तीति । ततश्च णिजर्थव्यापारस्य अध्यारोपितकर्तृव्यापारस्य च त्यागेन दर्शयते भव इति तृतीयकक्षायामेव तङ् भवति । नच भवरूपकर्मणः कर्तृत्वाद् दर्शयति भवो भक्तानिति द्वितीयकक्षायां कथं तङ् न स्यादिति वाच्यम् । अध्यारोपितकर्तृव्यापारेण साम्येऽपि णिजर्थव्यापारस्याधिक्येन समानक्रियात्वाभावात् । तृतीयकक्षायान्तु धातूपात्तव्यापारस्य णिजर्थव्यापारस्य च त्यागेन समानक्रियात्वात्तङ् सिद्धः । नच तृतीयकक्षायामपि चाक्षुषज्ञानविषयकरणरूपव्यापारयुक्तायाः पश्यन्ति भवं भक्ता इति प्रथमकक्षास्थक्रियाया अपेक्षया न्यूनता स्यादिति वाच्यम्, एवकारेणाऽधिकांशस्यैव निस्सारितत्वात् ।

**व्यतिहे** ( ई० ५८ )—तपसे अयोग्योऽहं शूद्रः तपस्वी भवामीत्यर्थः । अत्र 'कर्तरि कर्मव्यतिहारे' इति आत्मनेपदे सति 'व्यतिस् ए' इति स्थिते 'ह एति' इति सकारस्य हकारे 'व्यतिहे' इति ।

**विक्रीणीते** ( ई० ५८ )—अत्र विपूर्वकात् क्रीञ्धातोः 'परिव्यवेभ्यः क्रियः' इति आत्मनेपदं भवति । ञित्वादात्मनेपदे सिद्धेः किमर्थमिदमिति चेत् ? अकर्त्रभिप्रायार्थमिदमिति बोध्यम् ।

**संक्रीडते** ( ई० ५८ )—अत्र 'क्रीडोऽनुसम्परिभ्यश्च' इति सूत्रेण आत्मनेपदं बोध्यम् ।

**समस्थित** ( ई० ५८ )—समुपसर्गात् स्थाधातोर्लङि 'समवप्रविभ्यः स्थः' इति आत्मनेपदे तप्रत्यये अडागमे 'स्थाघ्वोरिच्च' इति इत्वे उक्तं रूपं सिद्धम् ।

**आदित्यमुपतिष्ठते** ( ई० ५८ )—अभिमुखीभूयाऽवस्थितिपूर्वकस्तुत्यादिभिः पूजयतीत्यर्थः । अत्र 'उपाद्देवपूजासङ्गतिकरणमित्रकरणपथिष्विति वाच्यम्' इति वार्तिकेन आत्मनेपदं भवति ।

**भिक्षुकः प्रभुमुपतिष्ठते** ( ई० ३६ )—'वा लिप्सायामिति वक्तव्यम्' इति वार्तिकेनात्र आत्मनेपदं भवति ।

**वितपते** ( ई० ५८ )—'उद्विभ्यां तपः' इत्यनेनात्र आत्मनेपदं भवति ।

**परस्य शिर आहन्ति** ( ई० ४९ )—अत्र स्वीयाङ्गकर्मकत्वाऽभावादकर्मकत्वाभावाच्च 'आङो यमहनः' इति आत्मनेपदं न भवति ।

**शास्त्रे वदते** ( ई० ५१ )—भासमानो ब्रवीत्यर्थः । अत्र 'भासमानोपसंभाषाज्ञानयत्नविमत्युपमन्त्रणेषु वदः' इति सूत्रेण आत्मनेपदं भवति ।

**व्यक्तवाचाम्** ( ई० ४५ )—मनुष्यादीनां सम्भूयोच्चारणे वदेरात्मनेपदं स्यादिति सूत्रार्थः । उदाहरणं तु 'सम्प्रवदन्ते ब्राह्मणाः' इति ।

**शिशयिषते** ( ई० ५३ )—अत्र 'पूर्ववत्सनः' इति आत्मनेपदं भवति ।

**शुश्रूषते** ( ई० ५४ )—अत्र 'ज्ञाश्रुस्मृदृशां सनः' इत्यनेनात्मनेपदं भवति । 'अज्झनगमां सनि' इति दीर्घः, 'इको झल्' इति सनः कित्त्वम् 'श्रयुकः किति' इति इण्निषेधश्चात्र विशेषः ।

**नियुङ्क्ते** ( ई० ५४ )—'स्वराद्यन्तोपसर्गादिति वक्तव्यम्' इति वार्तिकेनात्र आत्मनेपदमिति विशेषः । स्वरौ अचौ आद्यन्तौ यस्य सः स्वराद्यन्तः, तथाभूतोपसर्गात्परत्व एव युजेरात्मनेपदमित्यर्थः ।

**शिशत्सति** ( ई० ४५ )—ननु 'शदेः शितः' इत्यनेन 'शिशत्सति' इत्यत्र आत्मनेपदं कुतो नेति चेन्न, 'शदेः शितः' इत्यत्र 'पूर्ववत्सनः' इति, 'नानोर्ज्ञः' इत्यत्र नेति चानुवर्त्य—सन्नन्तात् शदेः नात्मनेपदमिति व्याख्यानेनाऽदोषात् ।

नच शिद्भाविनः शदेरात्मनेपदं स्यादित्यर्थे 'शीयते' इत्यत्र आत्मनेपदं भवति, प्रस्तुतव्याख्याने तु प्रकृतवत् तत्राप्यात्मनेपदं न स्यादिति वाच्यम् ? 'शदेः शितः'—'सनो न' इति वाक्यभेदेनाऽदोषात् । एवञ्च—शिद्भाविनो शदेरात्मनेपदं स्यादिति पूर्ववाक्यस्यार्थस्वीकारे 'शीयते' इत्यत्र नाव्याप्तिः । तथा च—शदेः सन्नन्तान्नात्मनेपदमित्यपरवाक्यस्यार्थस्वीकारे 'शिशत्सति' इत्यत्रातिव्याप्तिश्च न । 'शदेरित्यादिसूत्रद्वये' इति मूलोक्ते तु आदिपदेन 'म्रियतेर्लुङ्लिङोश्च' इत्यस्य ग्रहणं बोध्यम् ।

**निविशते** ( ई० ४६, ५८ )—निपूर्वकविश्धातोर्लटि 'नेर्विशः' इति सूत्रेण आत्मनेपदे तप्रत्यये शपि पररूपे एत्वे 'निवशते' इति ।

**प्रकुरुते** ( ई० ४६ )—अत्र 'गन्धनावक्षेपणसेवनसाहसिक्यप्रतियत्नप्रकथनोपयोगेषु कृञः' इति सूत्रेण आत्मनेपदं भवति ।

**बाष्पमुच्चरति** ( ई० ४६ )—उपरिष्टाद्गच्छतीत्यर्थः। 'उदश्चरः सकर्मकात्' इति सूत्रे 'सकर्मकात्किम्' इत्यस्य प्रत्युदाहरणमेतत्।

**देवदत्तं प्रति शुश्रूषते** (ई० ४६ )—'प्रत्याङ्भ्यां श्रुवः' इति सूत्रे 'प्रत्याङौ' सोपसर्गौ एव गृह्येते तेन प्रस्तुतप्रयोगे 'लक्षणेत्थं भूते'ति प्रतेः कर्मप्रवचनीयसंज्ञात्वेन आत्मनेपदनिषेधो न भवतीति विशेषः।

**व्यतिराते** ( ई० ४७ )—लटि प्रथमपुरुषैकद्विबहुवचनेषु रूपमिदम्। अत्र 'कर्तरि कर्मव्यतिहारे' इत्यनेन आत्मनेपदं भवतीति विशेषः।

**समगत** ( ई० ४७ )—'समो गम्यृच्छिभ्याम्' इति सूत्रेण आत्मनेपदे कृते 'वा गमः' इत्यनेन कित्वं भवतीति विशेषः।

**शास्त्रे नयते** ( ई० ४८,५१,५८ )—शास्त्रस्थं सिद्धान्तं शिष्येभ्यः प्रापयतीत्यर्थः। अत्र 'णीञ् प्रापणे' इति धातोः 'संमाननोत्सञ्जनाचार्यकरणज्ञानभृतिविगणनव्ययेषु नियः' इति सूत्रेण आत्मनेपदं भवति।

**पदं मिथ्या कारयते** ( ई० ४८ ) स्वरादिदुष्टमसकृदुच्चारयतीत्यर्थः। अत्र 'मिथ्योपपदात्कृञोऽभ्यासे' इति सूत्रेण आत्मनेपदं भवति।

**माणवकमनुक्रीडति** ( ई० ३६ )—माणवकेन सह अनुक्रीडतीत्यर्थः। अत्र 'क्रीडोऽनुसम्परिभ्यश्च' इत्यनेन 'अनुक्रीडति' इत्यत्रात्मनेपदे प्राप्ते 'अनोः कर्मप्रवचनीयाच्च' इति वार्तिकेन निषेधान्न भवतीति विशेषः।

**गजोपकिरति** ( ई० ३६, ३९ )—अत्र स्वभावाख्यानम्, नतु हर्षो विषयः। तेनाऽत्र 'किरतेर्हर्षजीविकाकुलायकरणेष्विति वाच्यम्' इति वार्तिकेन आत्मनेपदं न। किञ्च हर्षे सत्यपि आलेखनाऽभावात् 'अपाच्चतुष्पाच्छकुनिष्वालेखने' इति सूत्रेण सुटोऽप्राप्तौ 'किरतेर्हर्षजीविके'त्यात्मनेपदविधौ ससुट्कानामेव भाष्ये उदाहरणात् तन्न नेति तत्त्वविदः।

**धनुषि शिक्षते** ( ई० ४४ )—अत्र 'शिक्षेर्जिज्ञासायाम्' इति वार्तिकेन आत्मनेपदं भवति। 'धनुषि शिक्षते' इत्यस्य धनुर्विषये ज्ञाने शक्तो भवितुमिच्छतीत्यर्थः।

**सुस्मूर्षते** ( ई० ४४ )—स्मृधातोः सनि द्वित्वादिकार्ये 'अज्झने'ति दीर्घे

'उदोष्ठ्यपूर्वस्य' इत्युत्वे रपरत्वे 'हलि च' इति दीर्घे 'सुस्मूर्ष' इति सन्नन्तात् 'ज्ञा-श्रु-स्मृ-दृशां सनः' इत्यनेन आत्मनेपदे लटि तप्रत्यये शपि पररूपे एत्वे 'सुस्मूर्षते' इति सिद्धम् ।

इत्यात्मनेपदप्रकरणम् ।

# अथ परस्मैपदप्रकरणम्

**प्रवहति** ( ई० ४६ )—प्रोपसर्गात् 'वह्धातोः 'प्राद्वहः' इति परस्मैपदत्वाल्लटः स्थाने तिबादिकार्ये तत्सिद्धिः ।

**विरमति** ( ई० ४०, ४८ )—वीत्युपसर्गात् रम्धातोः 'व्याङ्परिभ्यो रमः' इति परस्मैपदत्वाल्लटस्तिपि शपि 'विरमति' इति ।

**बोधयति** ( ई० ४८, ५४ )—'बुधयुधनशजनेङ्प्रुद्रुस्रुभ्यो णेः' इत्यनेनात्र परस्मैपदं भवति ।

**अध्यापयति** ( ई० ३८ )—अधिपूर्वादिङः णौ 'क्रीङ्जीनां णौ' इत्यात्वे यणि पुकि 'अध्यापि' इति जाते 'बुधयुध–' इति परस्मैपदे लटि तिपि शपि गुणे अयादेशे 'अध्यापयति' इति ।

**अध्यजीगपत्** ( ई० ३६ )—अधिपूर्वादिङः णौ 'बुधयुधशजनेङ्प्रुद्रुभ्यो णेः' इति परस्मैपदे लुङि तिपि अडागमे तिप इकारलोपे यणि 'णौ च संश्चङोः' इति विभाषया इङो गाङादेशे पुकि 'अध्य गापि त्' इति जाते च्लौ 'णिश्रि–'इति च्लेश्चङि 'णौ चङ्युपधाया ह्रस्वः' इति ह्रस्वे 'सन्यङोः' इति द्वित्वे अभ्यासत्वे हलादि शेषे 'अभ्यासे चर्च' इति जश्त्वे 'सन्यतः' इति इत्वे 'दीर्घोऽकितः' इति दीर्घे 'णेरनिटि' इति णिलोपे 'अध्यजीगपत्' इति ।

**अध्यापिपत्** ( ई० ३३ )—'णौ च संश्चङोः' इति विकल्पपक्षे अधिपूर्वादिङः णौ 'बुधयुध–' इति परस्मैपदे लुङि तिपि तिप इकारलोपे च्लौ 'णिश्रि–' इति च्लेश्चङि 'अधि इ इ अ त्' इति स्थिते 'क्रीङ्जीनां णौ' इत्यात्वे पुकि आटि वृद्धौ यणि 'सन्यतः' इति पिशब्दस्य द्वित्वे णेर्लोपे 'अध्यापिपत्' इति ।

**निगारयति** (ई० ३८)—अत्र 'निगरणचलनार्थेभ्यश्च' इति परस्मैपदं भवति ।

**चलयति** ( ई० ३७ ) 'निगरणचलनार्थेभ्यश्च' इत्यनेनात्र परस्मैपदं सिद्धम् ।

**पाययते** ( ई० ४८ )—पाधातोर्णिचि आदन्तात् युकि 'अणावकर्मकाच्चित्तवत्कर्तृकात्' इति प्राप्तं परस्मैपदं 'न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः' इति निषेधे तङि टेरेत्वे शपि गुणे अयादेशे 'पाययते' इति ।

**दमयते** ( ई० ३६ )—दम् धातोर्णिचि उपधावृद्धौ 'अणावकर्मकात्–' इति प्राप्तं परस्मैपदं 'न पादम्याङ्–' इति निषेधे लटि तङि टेरेत्वे शपि गुणेऽयादेशे 'दमयते' इति ।

**नर्तयते** ( ई० ७७ )—नृत् धातोर्णिचि लघूपधगुणे रपरत्वे 'अणावकर्तृकात्–' इति प्राप्तं परस्मैपदं 'न पादभ्याङ्–' इति निषेधे लटि तङि टेरेत्वे शपि गुणेऽयादेशे 'नर्तयते' इति ।

**प्रावयति** ( ई० ४४ )—'प्रु गतौ' अस्माण्णिचि वृद्धौ आवि प्रावीत्यस्य धातुसंज्ञायां लटि 'बुध-युध-नश-जन-इङ्-प्रु-द्रु-स्रुभ्यो णेः' इत्यनेन परस्मैपदसंज्ञायां तिपि शपि गुणे अयादेशे च कृते 'प्रावयति' इति । 'प्रावयति' इत्यस्य प्रापयतीत्यर्थः ।

**अध्यापयति** ( ई० ४० )—अत्र 'बुध-युध-नश-जनेङ्प्रद्रुस्रुभ्यो णेः' इत्यनेन परस्मैपदमिति विशेषः ।

**जनयति सुखम्** ( ई० ४६, ५६ )—अत्र 'बुधजने'त्यादिसूत्रेण परस्मैपदं ज्ञेयम् ।

**योधयति काष्ठानि** ( ई० ४२ )—अत्र 'बुधजने'त्यादिसूत्रेण परस्मैपदं भवति ।

**आयासयते** ( ई० ४५ )—अत्र 'न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः' इति सूत्रेण परस्मैपदनिषेधो भवति ।

**आदयत्यन्नं वटुना** ( ई० ३६ )—अत्र 'शेषात्कर्तरि परस्मैपदम्' इत्यनेन अकर्त्रभिप्राये परस्मैपदं भवति । ननु 'आदयते देवदत्तेन' इत्यत्रेव 'अदेः प्रतिषेधः' इति वार्तिकेन अत्राऽपि परस्मैपदस्य प्रतिषेधः कुतो नेति चेन्न, 'अनन्तरस्ये'ति न्यायेन 'निगरणचलनार्थेभ्यः' इति सूत्रेण प्राप्तस्यैव परस्मैपदस्य तेन निषेधात् ।

अभिक्षिपति ( ई० ३७ )—'अत्र 'प्रत्यभिभ्यः क्षिपः' इत्यनेन परस्मैपदं भवति।

उपरमति ( ई० ४१ )—उपोपसर्गात् 'रम्' धातोः सकर्मकेषु 'उपाच्च' इति सूत्रेण नित्यैव परस्मैपदसञ्ज्ञायाम्' 'यज्ञदत्तमुपरमति', उपरमयतीत्यर्थः। अकर्मकेषु तु 'विभाषाऽकर्मकात्' इति सूत्रेण विभाषया परस्मैपदसञ्ज्ञायाम् 'उपरमति उपरमते' इत्युभयमपि भवति, तत्र निवर्तते इत्यर्थो बोध्यः।

आशयति ( ई० ५३ )—अत्र 'निगरणचलनार्थेभ्यश्च' इति सूत्रेण आत्मनेपदं भवति।

परिमह्योयते ( ई० ४६ )—'परि' उपसर्गात् ण्यन्तात् 'मुह' धातोः 'अणावकर्मकाच्चित्तवत्कर्मकात्' इति सूत्रेण परस्मैपदसंज्ञायां प्राप्तायां 'न पादम्याङ्याम्' इति सूत्रेण निषिध्यते। 'न पादमि' इति सूत्रे पा-दमि-आङ्यम्-आङ्यस्-परिमुह-रुचि-नृति-वद-वस्-एषां समाहारद्वन्द्वात्पञ्चमीति बोध्यम्।

अनुपराभ्यां कृञ् इति ( ई० ४५ )—नन्वनेन सूत्रेण कर्तरि परस्मैपदविधानात् कर्मकर्तर्यपि तत्प्रसक्तिरिति चेन्मैवम्; कार्यातिदेश-शास्त्रातिदेशपक्षद्वयमध्ये कार्यातिदेशपक्षस्यैव प्राधान्यात् कर्मकर्तर्यात्मनेपदविधायकस्य 'कर्मवत्कर्मणा तुल्यक्रियः' इत्यस्योक्तसूत्रापेक्षया परत्वादनेन तद्बाधे तदप्रसक्तेः। नच कार्यातिदेशपक्षेऽप्यतिदिश्यमानकार्याणामुत्पत्तिदेशस्यैव देशत्वाङ्गीकारात्, शास्त्रातिदेशपक्षे 'कर्मवत्कर्मणा' इत्यनेनात्मनेपदाद्यविधानेन तद्विधायकं 'भावकर्मणोः' इति शास्त्रस्यातिदेशात्तस्य च 'अनुपराभ्याम्' इत्यतः पूर्ववर्त्वेनानेनैव तद्बाधाद्दोषस्तदवस्थ एवेति चेदत्रोच्यते-' 'अनुपराभ्यां कृञः' इत्यत्र 'कर्तरि कर्मव्यतिहारे' इत्यस्मादेकं कर्तृग्रहणमनुवर्तते, तथा 'शेषात् कर्तरि परस्मैपदम्' इत्यतो द्वितीयं कर्तृग्रहणमनुवर्तते। तथा च स्वभावत एव यः कर्ता न तु विवक्षाधीनः कर्मकर्ता तथाविधकर्तर्येव अनुपराभ्यां कृञः परस्मैपदमिति लभ्यते। एवञ्च कर्मकर्तरि नास्य प्रवृत्तिरिति सूत्रस्य प्रयोजनं ब्रवीमीति दिक्।

'अनुपराभ्याम्' ( ई० ३६ )—'अनुपराभ्यां कृञः' इत्यत्र भावे कर्मणि लकारस्य कर्तृगे फले परस्मैपदनिवृत्त्यर्थं कर्तरीत्यस्यानुवृत्तिरिति तत्त्वम्। ननु कर्तरीत्यस्यानुवृत्तावपि अनुक्रियते शब्दः स्वयमेवेत्यत्र कर्मकर्तरि परस्मैपदं दुर्वारमिति चेत्, कर्मकर्तरि 'कर्मवत्कर्मणा तुल्यक्रियः' इत्यात्मनेपदेन परेणास्य

बाधात्। ननु कर्मणि यच्छास्त्रं तत् 'कर्मवत्' इति कर्मकर्तर्यतिदिश्यते। तथा चात्र कर्मकर्तरि भावकर्मणोरित्यात्मनेपदशास्त्रमिहाप्यतिदिश्यते तस्य च परत्वाभावात् कथमस्य बाधः स्यादिति चेन्न, शास्त्रातिदेशस्य कार्यसम्पत्तिरूपफलकत्वात् कार्यातिदेशस्य मुख्यतया तस्यैवेहाश्रयणात्। एवञ्च प्रकृते आत्मनेपदविधायकं 'कर्मवत्कर्मणा' इत्येव। तच्च 'अनुपराभ्याम्' इत्यतः परमिति कर्मकर्तरि नास्य प्रवृत्तिः। यदा शास्त्रातिदेशपक्ष एवाश्रीयते, तदा 'अनुपराभ्यां कृञः' इत्यत्र 'कर्तरि कर्मव्यतिहारे' इत्यस्मादेकं कर्तृग्रहणमनुवर्तते, तथा 'शेषात् कर्तरि परस्मैपदम्' इत्यतो द्वितीयं कर्तृग्रहणमनुवर्तते। तथा च—स्वभावत एव यः कर्ता न तु विवक्षाधीनः कर्मकर्ता तथाविधकर्तर्येव 'अनुपराभ्यां कृञः' परस्मैपदमिति लभ्यते। एवञ्च कर्मकर्तरि नास्य प्रवृत्तिरिति दिक्।

**अनुकर्तरि** ( ई० ४१ )—न च कर्मकर्त्तरि 'अनुपराभ्यां कृञः' इति सूत्रेण परस्मैपदं स्यादिति वाच्यम्। कार्यातिदेशपक्षे 'कर्मवत्कर्मणा तुल्यक्रियः' इति सूत्रेणात्मनेपदं विधीयते। ततश्च परेण 'कर्मवत्कर्मणा तुल्यक्रियः' इति सूत्रेणास्य सूत्रस्य बाधेन परस्मैपदासिद्धेः। शास्त्रातिदेशपक्षेऽपि 'कर्त्तरि कर्मव्यतिहारे' इत्यतः 'शेषात्कर्तरि परस्मैपदम्' इत्यतश्च कर्तृग्रहणद्वयमनुवर्त्त्य मुख्यकर्तर्येव परस्मैपदं भवति, न तु गौणकर्त्तरि, इति परस्मैपदाभावः। शास्त्रातिदेशपक्षे 'अनुपराभ्यां कृञः' इति सूत्रेण 'भावकर्मणोः' इति सूत्रस्यैव बाधे परस्मैपदं दुर्वारम्।

**न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः** ( ई० ४२ )—पा, दमि, आङ्यम्, आङ्यस, परिमुह, रुचि नृति, वद, वस् इत्येतेभ्यो ण्यन्तेभ्यः परस्मैपदं नेत्यर्थः। तेन 'पा' इत्यस्य 'पाययते' इत्यत्र 'निगरणचलनार्थेभ्यश्च' इति परस्मैपदं न। सूत्रे निगरणं = भक्षणम्, 'पा पाने' इत्यत्राऽपि पानमपि भक्षणमेवेति निगरणार्थे विद्यमानं बोध्यम्।

'दमि' इत्यस्य 'दमयते' अत्र 'अणावकर्मकाच्चित्तवत्कर्तृकात्' इत्यनेन परस्मैपदं प्राप्तमनेन निषिध्यते। यद्यपि दिवादौ 'दमिः' सकर्मकोऽस्ति, तथाप्यत्र कर्मणः कर्तृत्वविवक्षायां दमिरकर्मको बोध्यः ( वस्तुतस्तु अकर्मकत्वेऽस्य सूत्रस्य मानत्वेऽपि सकर्मकत्वे मानं चिन्त्यम् )। 'आङ्यम्' इत्यस्य 'आयामयते' इत्यत्र, 'आङ्यस्' इत्यस्य 'आयासयते' इत्यत्र, 'परिमुह' इत्यस्य 'परिमोहयते' इत्यत्र, 'रुचि' इत्यस्य 'रोचयते' इत्यत्र च 'अणावकर्मकाच्चित्तवत्कर्तृकात्' इति प्राप्तं

परस्मैपदम् । एवं चलनार्थक 'नृति' इत्यस्य 'नर्तयते' इत्यत्र 'निगरणचलनार्थेभ्यश्च' इत्यनेन च प्राप्तं परस्मैपदम् भवति । तथा 'वद' इत्यस्य 'वादयते' इत्यत्र, 'वस निवासे' इत्यस्य 'वासयते' इत्यत्र च 'अणावकर्तृकादि'ति प्राप्तं परस्मैपदमिति बोध्यम् ।

**शाययति** ( ई० ५४ )—कृष्णः शेते तं प्रेरयतीति शाययति गोपी कृष्णम् । अत्र 'अणावकर्मकाच्चित्तवत्कर्मकात्' इति सूत्रेण परस्मैपदं भवति ।

**वासयते** ( ई० ४० )—अत्र 'न पादम्याङ्यमस-' इति सूत्रेण परस्मैपदं भवति ।

**दमयन्ती कमनीयतामदम्** ( ई० ३६ )—अत्र वाक्ये 'दमयन्ती' इत्यत्र 'शेषात् कर्तरि परस्मैपदम्' इत्यनेन अकर्त्रभिप्राये परस्मैपदं भवति । 'न पादम्याङ्यमाङ्यसपरिमुहरुचिनृतिवदवसः' इति सूत्रेण परस्मैपदनिषेधस्तु न शङ्क्यः, 'अनन्तरस्ये'ति न्यायेन 'निगरणचलनार्थेभ्यश्च' 'अणावकर्मकाच्चित्तवत्कर्तृकात्' इति सूत्रद्वयप्राप्तस्यैव परस्मैपदस्य तेन निषेधात् ।

**वत्स्र्यति** ( ई० ५१ )—'वृद्भ्यः स्यसनोः' इत्यनेनात्र परस्मैपदं भवति ।

**चिकल्पिषते** ( ई० ५३ )—'लुटि च क्लृपः' इति परस्मैपदविकल्पपक्षे रूपमिदम् ।

इति परस्मैपदप्रकरणम् ।

# अथ भावकर्मप्रकरणम्

**भूयते** ( ई० ४३ )—भावे प्रत्यये कर्तुस्तिङ्वाच्यत्वाऽभावेन अनभिहितत्वात् अनभिहिते कर्तरि तृतीया भवति । एवञ्च—'त्वया मया अन्यैश्च भूयते' इति भवति । नच तिङ्वाच्यभावलकारस्य एकवचनमेव भवति, द्विवचनादिः कुतो नेति वाच्यम् ? तिङ्वाच्या या भावना क्रिया सा शब्दशक्तिस्वभावात् असत्त्वरूपा (लिङ्गसंख्यान्वयाऽयोग्या) ततश्च तस्यां तिङ्वाच्यभावनायां द्वित्वबहुत्वयोरप्रतीतेः ।

**भाविता** ( ई० ५४, ५८ )—भूधातोर्लुटि 'भावकर्मणोः' इत्यात्मनेपदे लुटस्तप्रत्यये तासि कार्येऽपि चिण्वद्भावसामर्थ्यादसत्याऽपि टेर्लोपे 'स्यसिच्सीयुट्तासिषु

भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च' इति चिण्वद्भावे इटि च कृते चिण्वद्भावाद् वृद्धौ आवादेशे 'भाविता' इति । चिण्वदभावपक्षे इटि गुणे अवादेशे भवितेति । ण्यन्तात् 'भावि' इत्यस्मात् कर्मणि प्रत्ययेऽपि 'भाविता' इति भवति । तत्र चिण्वद्भावे इटि च कृते तस्याभीयत्वेनासिद्धत्वाण्णिलोप इति विशेषः । अत्र चिण्वदभावपक्षे इटि गुणे अयादेशे 'भावयिता' इति बोध्यम् ।

**भाविषीष्ट** ( ई० ४०, ५४, ५८ )—भूधातोर्णौ वृद्धौ आवादेशे भावीति, तस्मादाशीर्लिङि 'भावकर्मणोः' इत्यात्मनेपदत्वाल्लिङस्तप्रत्यये सीयुटि सुटि यलोपे 'स्यसिचसीयुट्तासिषु' इति चिण्वद्भावे इटि च कृते वृद्धौ आवादेशे उभयोः सकारयोः षत्वे ष्टुत्वे 'भाविषीष्ट' इति । चिण्वदभावे तु 'भविषीष्ट' इति । अत्र गुणावादेशौ इति विशेषः । ण्यन्तात् 'भावि' इत्यस्मात् कर्मणि प्रत्ययेऽपि 'भाविषीष्ट' 'भावयिषीष्ट' इति भवति । अत्र चिण्वद्भावे इटि च कृते तस्याभीयत्वेन असिद्धत्वाण्णिलोपो भवति, चिण्वदभावे तु इटि कृते गुणायादेशौ भवतः । इति विशेषः ।

**भावयामासे** ( ई० ४० )—भूधातोर्णौ वृद्धौ आवादेशे भावीतिण्यन्तात्कर्मणि लिटः आमादेशे लिटो लुकि आमन्तलिटपरकाऽसानुप्रयोगे लिटः स्थाने तादेशे तस्य 'लिटस्तझयोरि'ति ऐसादेशे णेरिकारस्य गुणेऽयादेशे च कृते 'भावयामासे' इति । न नु भावयामास् ए इति स्थिते 'ह एति' इति सकारस्य हकारः कुतो नेति चेन्न, सार्वधातुक एच एति परे तेन हकारविधानात् ।

**अभावयिषताम्** ( ई० ४७ )—ण्यन्ताद् भूधातोर्भावकर्मणि लुङि प्रथमपुरुषद्विवचने चिण्वदिडभावपक्षे वलादिलक्षणे इटि तस्य 'अनाभीयत्वेन असिद्धत्वाभावादनिटीति निषेधाण्णिलोपाभावे णेर्गुणाऽयादेशयोः कृतयोः 'अभावयिषाताम्' इति ।

**अभावि** ( ई० ३८ )—भूधातोर्भावे लुङि 'भावकर्मणोः' इत्यात्मनेपदे लुङस्तप्रत्यये अटि च्लौ 'चिण् भावकर्मणोः' इति च्लेश्चिणि वृद्धौ आवादेशे 'चिणो लुक्' इति तलोपे 'अभावि' इति ।

**अनुभूयते** ( ई० ३२ )—'उपसर्गेण धात्वर्थो बलादन्यत्रनीयते' इति स्मरणादत्र अकर्मकोऽपि भूधातुः उपसर्गवशात् सकर्मकः इति विशेषः ।

**भाव्यते**—भूधातोर्णिचि वृद्धौ आवादेशे 'भावि' इति । तस्मात् कर्मणि लटि

'भावकर्मणोः' इत्यात्मनेपदे लटस्तप्रत्यये टेरेत्वे 'सार्वधातुके यक्' इति यकि 'णेर-निटि' इति णिलोपे 'भाव्यते' इति ।

बुभूषिष्यते ( ई० ३९ )—सन्नन्तात् भूधातोर्भावे लृटि आत्मनेपदे तप्रत्यये 'बुभूषत' इति स्थिते स्यप्रत्यये कृते 'स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झन-ग्रहदृशां चिण्वदिट् च' इति सूत्रेण चिण्वद्भावसन्नियोगशिष्टेन इटि ततः 'अचो ञ्णिति' इति प्राप्तां वृद्धिं बाधित्वा परत्वाद् 'अतो लोपः' इति अलोपे उभयोः सकारयोः षत्वे टेरेत्वे 'बुभूषिष्यते' इति । चिण्वद्भावपक्षेऽपि बलादिलक्षणे इटि रूपं तुल्यम् ।

बोभूय्यते—यङन्ताद्भूधातोर्भावे लटि 'भावकर्मणोः' इत्यात्मनेपदत्वाल्ल-टस्तप्रत्यये टेरेत्वे 'सार्वधातुके यक्' इति यकि 'अतो लोपः' इति यङोऽकारस्य लोपे 'बोभूय्यते' इति ।

अस्तावि—'ष्टु' इत्यत्र षस्य सत्वे ष्टुत्वनिवृत्तौ 'स्तु' इति । तस्मात् कर्मणि लुङि 'भावकर्मणोः' इत्यात्मनेपदत्वाल्लुङस्तप्रत्यये अटि च्लौ 'चिण् भावकर्मणोः' इति च्लेश्चिणि वृद्धौ आवादेशे 'चिणो लुक्' इति तस्य लुकि 'अस्तावि' इति ।

अस्तोषाताम् ( ई० ४५ )—इदञ्च 'स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदे-शेऽज्झनग्रहदृशां वा चिण्वदिट् च' इति सूत्रेण चिण्वद्भावसन्नियोगशिष्टविहित इडभावपक्षे रूपम् ।

आरिता ( ४०, ४३, ४८, ५१ )—ऋधातोः कर्मणि लुटि 'भावकर्मणोः' इत्यात्मनेपदत्वाल्लुटः स्थाने तप्रत्यये तासि 'स्यसिच्–' इति चिण्वदिटि चिण्वद्भा-वाद् 'अचो ञ्णिति' इति वृद्धौ रपरत्वे तस्य डादेशे डित्वादभस्यापि टेर्लोपे 'आरिता' इति । चिण्वदिडभावपक्षे गुणे 'अर्ता' इति ।

तायते ( ई० ३६ )—तन्धातोः कर्मणि लटस्तप्रत्यये यकि 'तनोतेर्यकि' इत्यात्वे सवर्णदीर्घे 'तायते' इति । आत्वाऽभावपक्षे 'तन्यते' इति ।

अन्वतप्त ( ई० ५४, ५८ )—'अनु' पूर्वात् तप्धातोः कर्मणि लुङस्तप्रत्यये अटि यणि च्लौ 'चिण् भावकर्मणोः' इति च्लेश्चिणि प्राप्ते 'तपोऽनुतापे च' इति तन्निषेधे च्लेः सिचि 'झलो झलि' इति सलोपे 'अन्वतप्त' इति । पापेनेति शेषः । पापेनेति कर्तरि तृतीया । ननु अनुपूर्वस्य तपेः पश्चात्तापार्थकत्वे असंगतिः, नहि पापस्य सूर्यादिवत्तपनशक्तिरस्ति, शोकार्थकत्वे तु अकर्मकत्वापत्त्या कर्मणि लकार

एव न स्यादिति चेन्न, अनुपूर्वकस्य तप्धातोः उपसर्गवशात् अभिहननार्थके प्रवर्तमानत्वेन सकर्मकत्वस्य जागरूकत्वात् ।

**स्मारिता** ( ई० ३८ )—स्मृधातोः कर्मणि लुटि परत्वान्नित्यत्वाच्च गुणे रपरे कृतेऽजन्तत्वाऽभावेऽप्युपदेशग्रहणात् 'स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च' इत्यनेन चिण्वदिटि च कृते णित्वादुपधावृद्धौ 'स्मारिता' इति । चिण्वद्भावाभावपक्षे 'स्मर्ता' इति ।

**दायिता** ( ई० ३८ )—दाधातोः कर्मणि लुटि 'स्यसिजि'ति चिण्वदिटि च कृते 'आतो युक् चिण्कृतोः' इति युकि 'दायिता' इति । चिण्वद्भावपक्षे 'दाता' इति भवति ।

**दायिषीष्ट** ( ई० ३९, ५० )—दा धातोर्भावे आशिषलिङि आत्मनेपदे तप्रत्यये 'लिङः सीयुट्' इति सीयुडागमे 'सुट्तिथोः' इत्यनेन सुडागमे 'स्यसिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां चिण्वदिट् च' इत्यनेन चिण्वद्भावसन्नियोगसिष्टेन इटि 'आतो युक्चिण्कृतोः' इत्यनेन युगागमे उभयोः सस्य षत्वे ततः ष्टुत्वे 'दायिषीष्ट' इति । चिण्वद्भावाऽभावपक्षे 'दासीष्ट' इति ।

**शय्यते** ( ई० ४२ )—अकर्मकशीङ्धातोर्भावे प्रत्यये सति 'भावकर्मणोः' इति तङ्प्रत्यये टेरेत्वे 'सार्वधातुके यक्' इति यकि 'अयङ्यिः क्ङिति' इति अयङादेशे 'शय्यते' इति ।

**अघानिष्यत** ( ई० ४२ )—सकर्मकात् 'हन्' धातोर्लृङि प्रथमपुरुषैकवचने 'भावकर्मणोः' इति तङि 'लुङ्-लङ्-लृङ्' इत्यडागमे स्यप्रत्यये 'स्य-सिच्-सीयुट्-तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट् च' इत्यनेन चिण्वद्भावे इडागमे च कृते चिण्वद्भावात् वृद्धौ 'हो हन्तेर्ञ्णिन्नेषु' इति कुत्वे सस्य षत्वे 'अघानिष्यत' इति । चिण्वद्भावाऽभावे तु-'अहनिष्यत' इति । न च चिणि वधादेशस्य दृष्टत्वात् तद्भावपक्षे वधादेशः कुतो नेति वाच्यम् ? 'अङ्गस्ये'त्यधिकारादाङ्गस्यैवातिदेशात् ।

**घानिषीष्ट** ( ई० ३६, ४० ५१ )—हन्धातोर्भावकर्मणि आशीर्लिङि तप्रत्यये 'लिङः सीयुटि तस्य सुडागमे सुटः सकारस्य षत्वे ष्टुत्वे 'हन् सीष्ट' इहि स्थिते 'हनो वध लिङी'ति सूत्रस्य 'वध्यात्' इत्यत्र कर्तरि लिङि चारितार्थ्येन अपवादत्वात्तं प्रबाध्य 'स्यासिच्सीयुट्तासिषु भावकर्मणोरुपदेशेऽज्झनग्रहदृशां वा चिण्वदिट्

च' इति सूत्रेण आर्धधातुके सीयुटि परे चिण्वत्त्वे सन्नियोगशिष्टत्वेन इटि च कृते चिण्वत्त्वात् 'अचोऽञ्णिति' इति वृद्धौ सस्य षत्वे 'हो हन्तेः' इति कुत्वे 'घानिषीष्ट' इति। चिण्वत्त्वाऽभावपक्षे—'हन् सीष्ट' इति स्थिते वधादेशे वलादित्वादिडागमे 'अतो लोपः' इत्यलोपे सन्नियोगशिष्टत्वेन सस्य षत्वे 'वधिषीष्ट' इति।

**अघानिषाताम्** (ई० ४५)—इदन्तु चिण्वदिटि पक्षे 'हो हन्तेः' इति कुत्वेन ज्ञेयम्। चिण्वदिडभावपक्षे तु—'हनः सिच्' इत्यनेन कित्त्वात् 'अनुदात्तोपदेश' इत्यनेनाऽनुनासिकलोपे 'अहसाताम्' इति। वधादेशपक्षे तु—'अवधिषाताम्' इति बोध्यम्।

**ग्राहिता** (ई० ४८)—अत्र चिण्वदिटि कृते चिण्वद्भावाद् वृद्धौ 'ग्राहिता' इति। अत्र 'ग्रहोऽलिटि दीर्घः' इत्यनेन दीर्घस्तु न, वलादिलक्षणस्यैव इटः तेन दीर्घविधानात्। चिण्वदिडभावपक्षे तु 'ग्रहीता' इति।

**अन्वतप्त पापेन** (ई० ५४)—अत्र 'चिण्भावकर्मणोः' इति सूत्रेण च्लेः चिण् प्राप्तः 'तपोऽनुतापे च' इति निषेधान्न भवति। पापेन इत्यत्र कर्तरि तृतीया। पापेन अभ्याहत इत्यर्थः। एवञ्च अन्वतप्त इत्यत्र कर्मणि लुङिति बोध्यम्। यद्वा—शोकार्थकमाश्रित्य भावे लुङीति। ततश्च परिणाममसमीक्ष्य सहसा किञ्चिदकृत्यं कृत्वा पश्चादुःखमन्वभवदित्यर्थः। अत्र दुःखानुभव एव शोकः। शोकार्थे अकर्मकस्तु धात्वर्थेनोपसङ्ग्रहाद्बोध्यः।

**अगारीध्वम्** (ई० ४१)—गिरतेः कर्मणि लुङि ध्वमि सिचि 'स्यसिजि'ति चिण्ववदिटि वृद्धौ रपरत्वे अडागमे 'वृतो वा' इति चिण्वदिटो दीर्घाप्राप्तया। 'धि च' इति सलोपे 'अगारीध्वम्' इति। पक्षे 'लिङ्सिचोरात्मनेपदेष्वि'ति इटि 'वृतो वा' इति दीर्घविकल्पे 'अगरीध्वम्–अगरिध्वम्' इति। एषु 'अचि विभाषा' इति वैकल्पिकलत्वे 'विभाषेटः' इति ढत्वविकल्पे ढधयोर्वस्य लस्य च 'अनचि च' 'यणो मयः' इति द्वित्वविकल्पे षण्णवति। 'लिङ् सिचोः' इति इडभावे 'उश्च' इति कित्त्वेन गुणाभावे इत्त्वे रपरत्वे 'हलि च' इति दीर्घे 'इणः षीध्वम्' इति नित्यढत्वे उक्तसूत्रेण ढवमानां द्वित्वविकल्पे अष्टौ, उक्तसङ्कलने चतुरधिकं शतमिति। एतदेवोक्तं मूले—

> इड् दीर्घश्चिण्वदिट् लत्वं द्वित्वत्रिकं तथा।
> इत्यष्टानां विकल्पेन चतुर्भिरधिकं शतम्॥ इति।

**शामिता** ( ई० ४१, ४९ )—शम्धातोर्ण्यन्ताण्णौ पूर्वं णेर्लोपे लुटि तासि अनुबन्धलोपे ततः ण्यन्तस्याजादित्वाच्चिण्वदिटि तस्याभियत्वेनासिद्धतया अनिटीति निषेधाभावाण्णिलोपे 'चिण्णमुलोर्दीर्घोऽन्यतरस्याम्' इति सूत्रेण दीर्घविकल्पे शामिता—शमिता इति । पक्षे शमयिता इत्यपि भवति ।

**शम्यते मोहः** ( ई० ३६, ४० ४७ )—शम्धातोर्हेतुमण्णौ उपधावृद्धौ अमन्तत्वेन मित्त्वाद् ह्रस्वे शमीत्यस्मात् कर्मणि लटि आत्मनेपदे तप्रत्यये यकि णिलोपे शपि पररूपे 'शम्यते' इति । अत्र भावे लट् तु न' हेतुमण्ण्यन्तस्य सकर्मकत्वात् ।

**चिण्णमुलोरिति** ( ई० ३५ )—चिण्परे णमुल्परे च णौ मितामुपधाया दीर्घो वा स्यादित्यर्थः । 'शामिता-शमिता' इत्युदाहरणम् ।

**चिण्णमुल् इति** ( ई० ४५, ५८ )—न च 'चिण्णमुलोः' इति सूत्रे दीर्घग्रहणं व्यर्थम् , 'चिण्णमुलोरन्यतरस्याम्' इत्येतावतैव 'मितां ह्रस्वः' इति पूर्वसूत्रादनुवृत्तस्य ह्रस्वस्यैव विकल्पे दीर्घविकल्पसिद्धेरिति वाच्यम् , शामिता-शमिता इत्युक्तप्रयोगयोः ह्रस्वविकल्पो न स्यात , प्रथमणिलोपस्य 'अचः परस्मिन्' इति स्थानिवत्वेन व्यवहिततया चिण्परकणिपरकत्वाभावात् । दीर्घविकल्पविधौ तु प्रथमस्य णिचो लोपो न स्थानिवत् , दीर्घविधौ स्थानित्वनिषेधात । भाष्यकारस्तु 'न पदान्त' इति सूत्रे 'पूर्वत्रासिद्धे न स्थानिवत्' इत्येव सिद्धत्वात् तत्र द्विर्वचनसवर्णानुसारदीर्घजश्चरविधीन् प्रत्याख्यातवान् । नच ण्यन्ताण्णौ 'चिण्णमुलोः' इति दीर्घे कर्तव्ये प्रथमणिलोपस्य स्थानिवत्वं दुर्वारम् , 'चिण्णमुलोः' इति दीर्घस्य पूर्वत्रासिद्धीयत्वाभावात् । ततश्च प्रथमणिचा व्यवहितत्वात् दीर्घानापत्तिः, एवञ्च तत्र दीर्घे कर्तव्ये स्थानिवत्वनिवारणाय दीर्घग्रहणमावश्यकत्वात् कथं दीर्घग्रहणं प्रत्याख्यातमिति वाच्यम् , 'चिण्णमुलोः' इति दीर्घविधौ णाविति णित्वजातिप्रधानो निर्देशः । चिण्णमुल्परकणित्वजातौ परत इति यावत् । णित्वजातिश्च णिद्वयेऽस्तीति प्रथमणेः स्थानिवत्वेऽपि दीर्घस्य निर्बाधत्वात् । एवञ्च ह्रस्वदीर्घयोर्विशेषाभावात् ह्रस्वविकल्प एव क्रियताम् , मास्तु दीर्घग्रहणमिति भाष्यतात्पर्यम् ।

[ **चिण्णमुलोर्दीर्घोऽन्यतरस्याम्** ( ई० ४५,५८ )—ननु 'चिण्णमुलोः' इति सूत्रे दीर्घग्रहणं व्यर्थम् 'चिण्णमुलोरन्यतरस्याम्' इत्येतावतैव 'मितां ह्रस्वः' इति पूर्वसूत्रादनुवृत्तस्य ह्रस्वस्यैव विकल्पे दीर्घविकल्पाऽसिद्धेरिति चेन्न, शम्धातोर्ण्यन्ता-

ण्णौ पूर्वं णेर्लोपे लुटि तासि ण्यन्तस्याऽजादित्वाच्चिण्वदिटं तस्याभीयत्वेनाऽसिद्ध-तया अनिटीति निषेधाभावाण्णिलोपे दीर्घविकल्पे सति 'शमिता', 'शामिता' इति रूपद्वयमिष्यते, ह्रस्वविकल्पविधाने तु-ह्रस्वविकल्पो न स्यात्, प्रथमणिलोपस्य 'अचः परस्मिन्' इति स्थानिवत्त्वेन व्यवहिततया चिण्परकणिपरकत्वाऽभावात्। दीर्घविकल्पविधौ तु-प्रथमस्य णिचो लोपो न स्थानिवत्, दीर्घविधौ स्थानिवत्व-निषेधात्। भाष्यकारस्तु—'न पदान्त' इति सूत्रे 'पूर्वत्राऽसिद्धे न स्थानिवत्' इत्येव सिद्धत्वात् तत्र द्विर्वचनसवर्णानुस्वारदीर्घजश्चरविधीन् प्रत्याख्यातवान्। नच ण्यन्ताण्णौ 'चिण्णमुलोः' इति दीर्घे कर्तव्ये प्रथमणिलोपस्य स्थानिवत्वं दुर्वारम् 'चिण्णमुलोः' इति दीर्घस्य पूर्वत्रासिद्धीयत्वाभावात्, ततश्च प्रथम णिचा व्यव-हितत्वात् दीर्घानापत्तिः, एवञ्च तत्र दीर्घे कर्तव्ये स्थानिवत्वनिवारणाय दीर्घ-ग्रहणस्यावश्यकत्वात् कथं दीर्घग्रहणस्य प्रत्याख्यानमिति चेन्न, 'चिण्णमुलोः' इति दीर्घविधौ णाविति णित्वजातिप्रधानो निर्देशः-चिण्णमुल्परकणित्वजातौ परत इति यावत्, णित्वजातिश्च णिद्वये अस्तीति प्रथमणेः स्थानिवत्वेऽपि दीर्घस्य निर्बा-धत्वात्। एवञ्च-ह्रस्वदीर्घयोर्विशेषाभावात् ह्रस्वविकल्प एव क्रियतां मास्तु दीर्घ-ग्रहणमिति भाष्याशयः।]

[ 'प्रकृतो मितां ह्रस्व एव तु न ( ई० ४३ )—ननु 'चिण्णमुलोः' इति सूत्रे दीर्घग्रहणं व्यर्थम्। चिण्णमुलोरन्यतरस्याम्' इत्येतावतैव 'मितां ह्रस्वः' इति पूर्व-सूत्रादनुवृत्तस्य ह्रस्वस्यैव विकल्पे दीर्घविकल्पासिद्धेरिति चेन्न, शम्धातोर्ण्यन्ताण्णौ पूर्वं णेर्लोपे लुटि तासि ण्यन्तस्याजादित्वाच्चिण्वदिटं तस्याभीयत्वेनासिद्धतया अनि-टीति निषेधाभावाण्णिलोपे दीर्घविकल्पे सति 'शमिता-शामिता' इति रूपद्वय-मिष्यते। ह्रस्वविकल्पविधाने तु ह्रस्वविकल्पो न स्यात् प्रथमणिलोपस्य 'अचः परस्मिन्' इति स्थानिवत्त्वेन व्यवहिततया चिण्परकत्वाभावात्। दीर्घविकल्पविधौ तु प्रथमस्य णिलोपो न स्थानिवत् दीर्घविधौ स्थानिवत्त्वनिषेधात्। भाष्यकारस्तु-'न पदान्त' इति सूत्रे 'पूर्वत्रासिद्धे न स्थानिवत्' इत्येव सिद्धत्वात् तत्र द्विर्वचन-सवर्णानुस्वारदीर्घजश्चरविधीन् प्रत्याख्यातवान्। नच ण्यन्ताण्णौ 'चिण्णमुलोः' इति दीर्घे कर्त्तव्ये प्रथमणिलोपस्य स्थानिवत्त्वं दुर्वारम्, 'चिण्णमुलोः' इति दीर्घे कर्त्तव्ये स्थानिवत्त्वनिवारणाय दीर्घग्रहणस्यावश्यकत्वात् कथं दीर्घग्रहणस्य प्रत्या-ख्यानमिति चेन्न, 'चिण्णमुलोः' इति दीर्घविधौ णाविति णित्वजातिप्रधानो निर्देशः। चिण्णमुल्परकणित्वजातौ परत इति यावत्। णित्वजातिश्च णिद्वयेऽस्तीति प्रथमणेः

स्थानिवत्त्वेऽपि दीर्घस्य निर्बाधत्वात् । एवञ्च ह्रस्वदीर्घयोर्विशेषाभावात् ह्रस्वविकल्प एव क्रियतां मास्तु दीर्घग्रहणमिति भाष्याशयः । ]

**शंशामिता** ( ई० ५३ )—शम्धातोर्यङि शंशम्येत्यस्माद्धेतुमण्णौ 'यस्य हलः' इति यलोपे अतो लोपे शंशमीत्यस्मात्कर्मलकारे णिलोपे लटि 'शंशम्यते'. कर्मणि लुटि तु 'चिण्णमुलो दीर्घोऽन्यतरस्याम्' इति दीर्घविकल्पे 'शंशामिता–शंशमिता' इति । चिण्वत्त्वाऽभावे वलादिलक्षणे इटि 'शंशमिता' इति च सिद्धं भवति ।

**'नोदात्तोपदेशस्य मान्तस्यानाचामेः'** ( ई० ४४ )—'मृजेर्वृद्धिः' इत्यतो वृद्धिरिति, 'अत उपधायाः' इत्यतः उपधायाः इति, 'अचो ञ्णिति' इत्यतः ञ्णितीति, 'आतो युक्' इत्यतः चिण्णकृतोरिति चानुवर्तते । ततश्च—'उदात्तोपदेशस्य अनाचमेः मान्तस्य उपधाया वृद्धिर्न स्याच्चिणि ञिति णिति कृति च' इत्यर्थो भवति । तेन—'अशमि–अदमि' इत्यत्र शम्धातोर्दम्धातोश्च लुङि चिणि 'अत उपधायाः' इति वृद्धिर्न भवति ।

अनुदात्तोपदेशाः सङ्गृहीताः ततोऽन्य गर्वाऽपि धातुरुदात्तोपदेशः । 'उदात्तोपदेशस्य प्रत्युदाहरणम्—'अगामी'ति गमेरनुदात्तोपदेशत्वात् वृद्धिनिषेधो न । आङ्पूर्वश्चमिराचमिः तद्वर्जस्य–अनाचमेः । 'अनाचमेः' इत्यस्य प्रत्युदाहरणम्–'आचामी'ति । अनाचमेरित्युक्तेरिह नोपधावृद्धिनिषेधः । 'मान्तस्य' प्रत्युदाहरणम्–'अवादी'ति । वद्धातोर्मान्तत्वाभावान्नोपधावृद्धिः ।

**अशमि** ( ई० ४३ )—शम्धातोर्लुङि तिपि अडागमे च्लेश्चिणि 'चिणते-पदः–' इति तशब्दस्य लोपे 'अशमि' इति । 'अत उपधाया' इति वृद्धिस्तु न, 'नोदात्तोपदेशस्य मान्तस्याऽनाचामेः' इति निषेधात् ।

**अजागारि** ( ई० ५० )—जागृधातोः कर्मणि लुङि तिपि आत्मनेपदे तप्रत्यये अडागमे मध्ये च्लौ च्लेश्चिणादेशे 'चिणो लुक्' इति तलोपे वृद्धौ 'अजागारि' इति । गुणस्तु न, 'जाग्रोऽविचिण्णल्ङित्सु' इत्युक्तेः ।

**प्रपूर्वाल्लभेरिति** ( ई० ४२ )—प्रपूर्वात् 'लभ्' धातोः कर्मणि लुङि प्रथम-पुरुषैकवचने आत्मनेपदे तप्रत्यये अडागमे सवर्णदीर्घे मध्ये च्लौ तस्य चिणादेशे 'चिणो लुक्' इति तशब्दस्य लुकि 'विभाषा चिण्णमुलोः' इति व्यवस्थितविकल्प-त्वात् नित्यं नुमि अनुस्वारे परसवर्णे च 'प्रालम्भि' इति भवति ।

व्यवस्थितविकल्पत्वादित्यस्य कोऽर्थः इति येच्छृणु-प्रादेरुपसर्गात्परस्य लभेर्नित्यं नुम्, अनुपसर्गात् परस्य तु लभेर्विभाषया नुमिति व्यवस्थितविकल्पाश्रयणादुपसर्गपूर्वस्य लभेर्नित्यं नुमित्यर्थः। स्पष्टं चेदं भाष्ये।

**गौर्दुह्यते पयः** ( ई० ५४ )—गोपेनेति शेषः। अत्र गोरप्रधानकर्मत्वात् तस्मिन् कर्मणि लकारः। तिङाऽभिहितत्वाद् गोः प्रथमा। प्रधानकर्मत्वात् पयः इति प्रथमान्तम्, तस्य तिङाऽनभिहितत्वात्।

**बोध्यते माणवकं धर्मः** ( ई० ४३ )—बुध्यर्थकस्याऽपि प्रधाने गौणे वा कर्मणि स्वेच्छया लादयो भवन्ति। अत एव-बोध्यते माणवकं धर्मः—'बोध्यते माणवको धर्मम्' इति वा भवतीति।

बीजञ्चात्र मूलस्थ-द्विकर्मकाणां धातूनां कर्मप्रत्ययस्य व्यवस्थैव। तथाहि—

'गौणे कर्मणि दुह्यादेः प्रधाने नी-हृ-कृष्-वहाम्।
बुद्धि-भक्षार्थयोः शब्दकर्मकाणां निजेच्छया॥
प्रयोज्यकर्मण्यन्येषां ण्यन्तानां लादयो मताः॥' इति।

दुह्याच्-प्रभृतीनां द्वादशधातूनां गौणे कर्मणि लादयो भवन्ति। गौर्दुह्यते पयः। गोपेनेति शेषः। अत्र गोरप्रधानकर्मत्वात् तस्मिन् कर्मणि लकारः। तिङा अभिहितत्वात् गोः प्रथमा। प्रधानकर्मत्वात् पयः इति द्वितीयान्तम्। नी-हृ-कृष्-वहां प्रधाने कर्मणि लादयो भवन्ति। अजा ग्रामं नीयते, ह्रीयते, कृष्यते, उह्यते। इति। अत्र अजायां प्रधानकर्मणि लकारः। ग्रामस्याऽनभिहितत्वात् द्वितीया। बुध्यर्थकस्य भक्षार्थकस्य शब्दकर्मणाञ्च प्रधाने वा गौणे वा कर्मणि स्वेच्छया लादयो भवन्ति। बोध्यते माणवको धर्मम्। बोध्यते माणवकं धर्मः इति वा। भोज्यते माणवकमोदनः। भोज्यते माणवकः ओदनमिति वा। वेदोऽध्याप्यते विधिं हरिणा, वेदमध्याप्यते विधिरिति वा। अन्येषां गत्यर्थादीनां प्रयोज्यकर्मणि लकारः। देवदत्तो ग्रामं गम्यते, अत्र प्रयोज्यकर्मणि देवदत्ते इति गमेर्ण्यन्तात्कर्मणि लः।

**मासमास्यते देवदत्तेन** ( ई० ३७ )—ये अकर्मकाः 'कर्तुरीप्सिततमं कर्म' 'तथायुक्तं चानीप्सितमि'ति सूत्रसिद्धकर्मरहिताः 'आस उपवेशने, वृतु वर्तने' इत्यादयः, तेषाम् 'अकर्मकधातुभिर्योगे' इति वार्तिकसिद्धकर्मणां कर्मणि भावे च लकार इष्यते' इत्यर्थक—'अकर्मकाणां कालादिकर्मणां कर्मणि भावे च लकार इष्यते' इति वचनेन भावे लकारे 'मासमास्यते' इति। कर्मणि प्रत्यये तु—मासस्याऽभिहितत्वात् प्रथमायां 'मासः आस्यते' इति।

**अकामि**—कम्धातोर्णिचि 'नोदात्तोपदेशस्य-' इति प्राप्तमुपधावृद्धिनिषेधम् 'अनाचमिकमिवमीनामिति वक्तव्यम्' इति निषेधात् उपधावृद्धौ लुङि तङि अटि च्लौ च्लेश्चिणि 'चिणो लुक्' इति तलोपे 'अकामि' इति।

**अभाजि** (ई० ३७, ४२, ५३)—भञ्ज्धातोः कर्मणि आत्मनेपदे लुङस्तप्रत्यये अटि च्लौ 'चिण् भावकर्मणोः' इति च्लेश्चिणि 'भञ्जेश्च चिणि' इति पाक्षिके नलोपे 'अत उपधायाः' इति वृद्धौ 'चिणो लुक्' इति तलोपे 'अभाजि' इति। पक्षे 'अभञ्जि' इति।

**अलम्भि** (ई० ३८)—लभ्धातोः कर्मणि आत्मनेपदे लुङस्तप्रत्यये अटि च्लौ 'चिण् भावकर्मणोः' इति च्लेश्चिणि 'चिणो लुक्' इति तलोपे 'विभाषा चिण्णमुलोः' इति नुमि अनुस्वारे परसवर्णे 'अलम्भि' इति। नुमोऽभावे उपधावृद्धौ 'अलाभि' इति।

इति भावकर्मप्रकरणम्।

# अथ कर्मकर्तृप्रकरणम्

**पच्यते ओदनेन** (ई० ५४, ५८)—ननु देवदत्त ओदनं पचति पचतो देवदत्तस्यौदनेन स्वयमेव पच्यते इत्यत्र भावे लकारे कर्तुरनभिहितत्वेन 'कर्मवत्कर्मणा' इत्यतिदेशादनभिहिते कर्मणि द्वितीया स्यादिति चेन्न, मूलोक्तपथा लकारवाच्यस्यैव कर्तुः कर्मवद्भावात्। भावे लकारे तु लकारवाच्यो भावो वर्तते नतु कर्तेति कर्मवद्भावाभावान्न द्वितीया। यगात्मनेपदञ्च 'भावकर्मणोः' 'सार्वधातुके यक्' इति सूत्राभ्यां सिद्धम्। न च 'पच्यते ओदनो, 'भिद्यते काष्ठम्' इत्यादौ लकारवाच्यः कर्ता वर्तत इति कर्मवद्भावात्कर्मणि यद्यत्कार्यं भवति तत्तत्कर्मकर्त्तर्यपि स्यादिति तव्यादिप्रत्ययोऽपि स्यादिति वाच्यम्, लकारवाच्यो यः कर्ता तस्य लान्तकार्ये एव कर्मवद्भावात्, लान्तस्य कार्यञ्च यगात्मनेपदादि। अत एव भेत्तव्यं कुसूलेन स्वयमेवेत्यत्र कुसूलरूपकर्मकर्त्तरि तव्यप्रत्ययो न, किन्तु भावे एव। इत्थञ्च भिद्यते कुसूल इत्यादौ च द्वितीयापि न भवति। कर्मणि लकारे भिद् ल् इति दशायां यद्यत्कार्यं भवति तत्तत्कर्मकर्त्तर्यपि स्यात्, कुसूलरूपकर्म तु लान्तभागाद् भिन्नमस्तीति कृत्यप्रययस्तत्र दुर्लभः।

**पच्यते फलम्**—रामः फलं पचतीत्यत्र रामस्य कर्तृत्वेन अविवक्षायां फलरूपस्य कर्मण एव कर्तृत्वेन विवक्षायां 'पच्' धातोरकर्मकत्वात् कर्तरि लटि लटा कर्तुरुक्तत्वात् प्रथमायां 'कर्मवत् कर्मणा तुल्यक्रियः' इति फलस्य कर्तुः कर्मवद्भावात् 'भावकर्मणोः' इत्यात्मनेपदे लटस्तप्रत्यये टेरेत्वे 'सार्वधातुके यक्' इति यकि 'पच्यते फलम्' इति सिद्धम् ।

**चिकीर्षते कटः**—स्वयमेव इच्छाविषय इत्यर्थः । अत्र कृधातोः किरादिगणपठितत्वात् 'भूषावाचिनां किरादीनां सन्नन्तानां च यकचिणौ चिण्वदिट् च नेति वक्तव्यम्' इति वार्तिकेन कर्मकर्तर्यपि यक्निषेधात् कृधातोः सनि इत्वे रपरत्वे दीर्घे द्वित्वादिकार्ये षत्वे तङि टेरेत्वे शपि पररूपे 'चिकीर्षते' इति ।

**तपस्तप्यते तापसः** ( ई४ ४३ )—अत्र तपिरर्चनार्थः प्राजापत्यादिकृच्छ्राद्यात्मकं तपः सम्पादयतीत्यर्थः । सम्पादनस्यात्मकर्तृस्थत्वात् तपोरूपकर्मस्थत्वाऽभावात् 'कर्मवत्—' इत्यप्राप्ते 'तपस्तपः कर्मकस्यैव' इत्यनेन कर्मवत्वं विधीयते । तेन यगात्मनेपदादि सिद्ध्यति ।

**गौः पयो दुग्धे** ( ई० ३६ )—गौः स्वयमेव पयः उत्सृजतीत्यर्थः । अत्र 'दुहिपच्योर्बहुलं सकर्मकयोरिति वाच्यम्' इति कर्मकर्तृभूतायां गवि सत्याम् दुहधातोर्लटि 'भावकर्मणोः' इत्यात्मनेपदे तङि टेरेत्वे 'न दुहस्नुनमां यक्चिणौ' इति यक्निषेधे शपि 'अदिप्रभृतिभ्यः शपः' इति शपो लुकि 'झषस्तथोः—' इति धत्वे 'दादेः—' इति घत्वे जश्त्वे 'दुग्धे' इति ।

**उदुम्बरः फलं पच्यते**—उदुम्बरो वृक्षः स्वयमेव कालविशेषमनपेक्ष्य फलं पक्वाश्रयं करोतीत्यर्थः । अत्र 'दुहिपच्योर्बहुलं सकर्मकयोरिति वाच्यम्' इति कर्तुः कर्मवद्भावे सति 'पच्यते' इत्यत्र यगादि सिद्ध्यति ।

**पच्यते तण्डुलः** ( ई० ३७, ४०, ५४ )—अत्र 'कर्मवत्कर्मणा तुल्यक्रियः' इति सूत्रेण कर्मस्थया क्रियया तुल्यक्रियस्य कर्त्तुः कर्मवद्भावे 'सार्वधातुके यक्' इति यगादिकार्ये कृते 'पच्यते' इति । 'तण्डुलः' इत्यत्र तु कर्तुरभिहितत्वात् प्रथमा भवति ।

**सृज्यते स्रजं भक्तः** ( ई० ३७, ५६ )—श्रद्धया निष्पादयतीत्यर्थः । अत्र 'सृजेः श्रद्धोपपन्ने कर्तर्येवेति वाच्यम्' इति वार्तिकेन श्रद्धोपपन्नेऽर्थे बहुलप्रकारेण कर्तुः कर्मवद्भावे श्यनि 'सृज्यते' इति ।

**ओदनः पच्यते** ( ई० ४० )—अत्र 'कर्मवत्कर्मणा तुल्यक्रियः' इति कर्तुः कर्मवद्भावेन पच्धातोः 'सार्वधातुके यक्' इति यक्, भावकर्मणोः, इत्यात्मनेपदम् च भवतः।

**तपस्तपः कर्मकस्यैव** ( ई० ३६, ३८ )—उपवासादिरूपतपस्तापसं तपति दुःखीकरोतीत्यर्थः। एवञ्च तापसस्य कर्मत्वे तप्धातोर्दुःखजननमर्थः। तापसः स्वयमेव तप्यते अर्थात्तपः अर्जयतीति तापसस्य कर्तृत्वे तपेरर्जनरूपार्थः। एवं हि—कर्मस्था क्रिया दुःखजननरूपा, कर्तृस्था क्रिया तु अर्जनरूपेति क्रियाभेदात् सकर्मकत्वाच्चाप्राप्ते कर्मवद्भावे 'तपस्तपः कर्मकस्य' इति सूत्रं विध्यर्थम्। एवकारस्तु व्यर्थ एवेति वृत्तिकारादयः। वस्तुतस्तु कर्मत्वकर्तृत्वरूपावस्थाद्वयेऽपि तापसः उपवासादिजन्यकृशतादिरूपशरीरसन्तापमनुभूय पुण्यविशेषमर्जयतीति कर्मस्था क्रिया कर्तृस्था क्रिया च समानेति कर्मवद्भावे प्राप्ते—'सकर्मकाणां कर्मवद्भावश्चेत्तर्हि तपेरेव' इति नियमार्थं सूत्रम्। तथा च 'सकर्मकाणां प्रतिषेधो वक्तव्यः' इति वार्तिकमपि न कर्तव्यम्। नियमेनैव एवकारे लब्धे सूत्रे एवकारग्रहणं व्यर्थं सत—'तप्धातोरपि यदि कर्मवद्भावश्चेत्तर्हि तपः कर्मकस्यैवेति द्वितीयं नियमं करोति। तेन 'सुवर्णमुत्तपति' इत्यादौ कर्मवद्भावो न भवतीति फलमिति दिक्।

**कर्मणेति किम्** ( ई० ३६, ३९, ४९ )—'कर्मवत् कर्मणा तुल्यक्रियः' इति सूत्रे कर्मणेत्यस्याऽभावे—'असिना छिनत्ति' 'स्थाल्यां पचति' इत्यत्र करणाधिकरणयोर्यो व्यापारः, स एवेदानीम् 'असिश्छिनत्ति' 'स्थाली पचति' इत्यादौ कर्तृस्थ इति तत्रापि कर्मत्वं स्यात्, तन्माभूदित्येवमर्थं कर्मणेति पदमित्यर्थः। ननु तुल्यक्रियः कर्ता कर्मवद्भवतीत्युक्तेः केनेत्याकाङ्क्षायामनेककारकोपस्थितावपि कर्मवदिति प्रत्यासत्या कर्मणेति लभ्यत एवेति चेत्तर्हि—'गच्छति ग्रामः' 'आरोहति हस्ती' इत्यादौ कर्तृस्थक्रियेभ्यो कर्मत्वनिवृत्त्यर्थं तदिति स्यात्। न चैवमपि पचिभिदिप्रभृतीनामेव गमिरुहिप्रभृतीनां सकर्मकत्वे फलस्य कर्मनिष्ठत्वे च तुल्ये कर्तृस्थभावका गम्यादयः इति कथं ज्ञातव्या इति वाच्यम्, यत्र कर्मणि क्रियाकृतो विशेषो दृश्यते-यथा 'पक्वेषु-तण्डुलेषु' यथा वा 'छिन्नेषु काष्ठेषु' तत्र कर्मस्था क्रिया, नेतरत्र। नहि पक्वापक्वतण्डुलेष्विव गतागतग्रामेषु आरूढानारूढहस्त्यादिषु वा क्रियाकृतं वैलक्षण्यं प्रत्यक्षमुपलभ्यत इति।

**गौः पयो दुग्धे** ( ई० ३६ )—अत्र दुहेः कर्मकर्तरि 'न दुहस्नुनमां यक्चिणौ'

इति सूत्रेण यकि निषेधे शपि तस्य 'अदिप्रभृतिभ्यः शपः' इति लुकि हस्य धत्वे जश्त्वे तस्य धत्वे एत्वे 'दुग्धे' इति। अत्र प्रकृतसूत्रेण यको निषेधेऽपि 'दुहश्च' इति सूत्रेण विकल्पेन 'पक्षे' चिण् स्यादेवेति न विस्मर्तव्यम्।

**रज्यति रज्यते ता वस्त्रम्** ( ई० ३६, ५४ )—अत्र 'रञ्ज् रागे' इत्यस्माद्धातोः 'कुषि रञ्जोः प्राचां श्यन् परस्मैपदं च' इति यग्विषये यकं प्रबाध्य प्राचां मते श्यनि ततः सन्नियोगशिष्टत्वात् परस्मैपदे च विहिते 'रज्यति' इति सिद्धं भवति। अन्यमते तु—यकि आत्मनेपदे 'रज्यते' इति च भवति।

**भिद्यते काष्ठम्** ( ई० ५१ )—अत्र 'कर्मवत्कर्मणा तुल्यक्रियः' इति सूत्रेण कर्मस्थया क्रियया तुल्यक्रियस्य कर्तुः कर्मवद्भावे 'सार्वधातुके यक्' इति यगादिकार्ये 'भिद्यते' इति। 'काष्ठम्' इत्यत्र तु कर्तुरभिहितत्वात् प्रथमा।

**युज्यते ब्रह्मचारी योगम्** ( ई० ५० )—अत्र 'सृजेः श्रद्धोपपन्ने कर्तर्येवेति वाच्यम्' इति वार्तिकेन श्रद्धोपपन्नेर्थे बहुलप्रकारेण कर्तुः कर्मवद्भावे सति यगपवादश्यनादिकार्ये कृते 'युज्यते' इति भवति। ब्रह्मचारी प्राणायामाभ्यासादिश्रमबाहुल्यं विना स्वयमेव योगेन सम्बध्यते इत्यर्थः।

**अलङ्कुरुते कन्या** ( ई० ४९ )—स्वयमेव अन्यप्रयत्नं विना भूषणक्रियावतीत्यर्थः। अत्र 'भूषाकर्मकिरादिसनां चान्यत्रात्मनेपदात्' इति वार्तिकेन निषेधात् भूषार्थकत्वात् कर्मकर्तरि तङेव न तु यक्।

**प्रस्नुते** (ई० ५८)—अन्तर्भावितण्यर्थोऽत्र स्नुधातुः। अत्र कर्मस्थक्रियात्वात् कर्मवत्त्वेन यकि प्राप्ते 'न दुहस्नुनमां यक्चिणौ' इति सूत्रेण निषेधो भवतीति विशेषः।

**भावे लकारे इति** ( ई० ४२ )—ननु कर्मणः कर्तृत्वविवक्षायां भावे लकारे पच्यते ओदनेन, भिद्यते काष्ठेन, इत्यत्र कर्मकर्तुस्तिङाऽनभिहितत्वात् द्वितीया स्यात्, कर्मवत्त्वातिदेशादिति चेन्न, भावे प्रत्यये च कर्तुर्लकारेणाऽनुपस्थितेः।

**गच्छति ग्रामः** (ई० ४२, ४३)—'कर्मवत्कर्मणा तुल्यक्रियः' इति सूत्रे 'कर्मणे'त्यस्याऽभावे 'असिना छिनत्ति' 'स्थाल्यां पचति' इत्यत्र करणाधिकरणयोर्यो व्यापारः स एव इदानीम् 'असिश्छिनत्ति' 'स्थाली पचती'त्यादौ कर्तृस्थ इति तत्राऽपि कर्मवत्त्वं स्यात्, तन्माभूदित्येवमर्थं कर्मणेति पदम्। नन्वेवं तुल्यक्रियः कर्ता कर्मवद्भवति इत्युक्ते केनेत्याकाङ्क्षायामनेककारकोपस्थितावपि कर्मवदिति प्रत्या-

सत्त्या कर्मणेति लभ्यते एव इति चेत्? तर्हि 'गच्छति ग्रामः' इत्यादौ कर्तृस्थक्रियेभ्यः कर्मवत्त्वनिवृत्त्यर्थं तदिति स्यात्। नचैवमपि पचि-भिदिप्रभृतीनामेव गमिरुहिप्रभृतीनां सकर्मकत्वे फलस्य कर्मनिष्ठत्वे च तुल्ये कर्तृस्थभावका गम्यादय इति कथं ज्ञातव्या इति तु न शङ्क्यम्? यत्र कर्मणि क्रियाकृतो विशेषो दृश्यते यथा पक्वेषु तण्डुलेषु, यथा वा छिन्नेषु काष्ठेषु, तत्र कर्मस्था क्रिया नेतरत्र। नहि पक्वापक्वतण्डुलेष्विव गतागतग्रामेषु आरूढानारूढहस्तिष्वित्यादौ वा क्रियाकृतं वैलक्षण्यं प्रत्यक्षमुपलभ्यते इति।

**कारिष्यते घटः** ( ई० ४१ )—अयंभावः ज्ञानेच्छयोरिव यत्नस्यापि कर्तृस्थत्वात् तद्वाचिनः कृञोऽपि कर्ता न कर्मवत् स्यात्। ततश्च 'क्रियते घटः स्वयमेव' इत्यत्र यगादिर्नोपपद्यते इति चेत् न, 'करोति' इत्यस्योत्पादनार्थकत्वात्। उत्पत्तिश्च कर्मस्थेति, उत्पन्नेऽनुत्पन्ने च वैलक्षण्यस्य प्रत्यक्षत्वात्। अत एव (कृञः कर्तुः कर्मस्थत्वादेव) क्रियते घटः इत्यत्र यक्। तासि-चिण्वदिट्पक्षे कारिता तदभावे कर्ता। लृटि-चिण्वदिटि पक्षे कारिष्यते तदभावपक्षे 'ऋद्धनोः स्ये' इतीटि करिष्यते इत्यादि सिद्धम्।

**कुष्यते पादः स्वयमेव** ( ई० ४१ )—कुष्णाति पादं देवदत्तः इति मुख्यकर्तृलकारे पादः कर्म तस्य पुरुषप्रयत्नमनपेक्ष्य कर्तृत्वविवक्षायां 'प्राचां श्यन्परस्मैपदं च' इति सूत्रेण श्यनि परस्मैपदे च 'कुष्यति' इति। 'प्राचां' ग्रहणात् सूत्रस्य वैकल्पिकत्वेन तदुभयाभावे यकि आत्मनेपदे च कृते 'कुष्यते' इति रूपम्। यकश्यनोस्तु स्वरे विशेषः।

**अन्योन्यं स्पृशतः** ( ई० ३८ )—अत्र 'सकर्मकाणां प्रतिषेधो वक्तव्यः' इति वार्तिकेन कर्मवद्भावप्रतिषेधो भवति।

**अवाकीर्ष्ट** ( ई० ४४ )—भूषणक्रियावाचिनां किरादीनां सन्नन्तानां च यक्चिणौ चिण्वदिट् च नेति वाच्यमित्यर्थक—'भूषाकर्मकिरादिसनां चान्यत्रात्मनेपदात्' इति वार्तिकेन निषेधादत्र चिण न भवति, किन्तु 'लिङ्सिचोरात्मनेपदेषु' इति वेट्।

**उदपुपुच्छ** ( ई० ४४ )—ण्यन्तस्य श्रन्थेः ग्रन्थेः ब्रूञः आत्मनेपदविधावकर्मकस्य च यक्चिणोः प्रतिषेधो भारद्वाजीयाऽभिमते इत्यर्थक—'णिश्रन्थिग्रन्थिब्रूञात्मनेपदाऽकर्मकाणामुपसंख्यानम्' इति वार्तिकेनाऽत्र चिण् निषेधो भवति।

**अचिकीर्षिष्ट** ( ई० ४६, ५६ )—अत्र 'मूषाकर्मकिरादिसनां नान्यत्रात्मनेपदात्' इति वार्तिकनिषेधात् च्लेश्चिण् न भवतीति विशेषः।

**अवारोधि** ( ई० ४६ )—गौर्गोपेनेति शेषः। अत्र गोः कर्मणः कर्तृत्वविवक्षाया अभावात् 'न रुधः' इत्यनेन चिण् निषेधो नेति विशेषः।

**व्यकारिष्ट** ( ई० ४६ )—अत्र 'णिश्रन्थिग्रन्थिब्रूञात्मनेपदाऽकर्मकाणामुपसङ्ख्यानम्' इति वार्तिकेन चिणि निषिद्धे ण्यन्तत्वाभावाच्चङभावे सिचि चिण्वदिटि वृद्धिः। चिण्वदिडभावपक्षे–'व्यकृत' इति भवति।

**भावे लकारे इति** ( ई० ४२, ५४, ५८ )—ननु कर्मणः कर्तृत्वविवक्षायां भावे लकारे पच्यते ओदनेन, भिद्यते काष्ठेन, इत्यत्र कर्मकर्तुस्तिङाऽनभिहितत्वात् द्वितीया स्यात्, कर्मवत्त्वातिदेशादिति चेन्न, भावे प्रत्यये च कर्तुर्लकारेणानुपस्थितेः।

[ **गच्छति ग्राम इति** ( ई० ४२, ४३ )—'कर्मवत्कर्मणा तुल्यक्रियः' इति सूत्रे 'कर्मणे'त्यस्याऽभावे 'असिना छिनत्ति' 'स्थाल्यां पचति' इत्यत्र करणाधिकरणयोर्यो व्यापारः स एव इदानीम् 'असिश्छिनत्ति' 'स्थाली पचती'त्यादौ कर्तृस्थ इति तत्राऽपि कर्मवत्त्वं स्यात्, तन्माभूदित्येवमर्थं कर्मणेति पदम्। नन्वेवं तुल्यक्रियः कर्त्ता कर्मवद्भवति इत्युक्ते केनेत्याकाङ्क्षायामनेककारकोपस्थितावपि कर्मवदिति प्रत्यासत्त्या कर्मणेति लभ्यत एव इति चेत्? तर्हि 'गच्छति ग्रामः' इत्यादौ कर्तृस्थक्रियेभ्यः कर्मवत्त्वनिवृत्त्यर्थं तदिति स्यात्। नचैवमपि पचि–भिदिप्रभृतीनामेव गमिरुहिप्रभृतीनां सकर्मकत्वे फलस्य कर्मनिष्ठत्वे च तुल्ये कर्तृस्थभावका गम्यादय इति कथं ज्ञातव्या इति तु न शङ्क्यम्? यत्र कर्मणि क्रियाकृतो विशेषो दृश्यते यथा पक्वेषु तण्डुलेषु, यथा वा छिन्नेषु काष्ठेषु, तत्र कर्मस्था क्रिया नेतरत्र। नहि पक्वापक्वतण्डुलेष्विव गतागतग्रामेषु आरूढानारूढहस्तिष्वित्यादौ वा क्रियाकृतं वैलक्षण्यं प्रत्यक्षमुपलभ्यते इति। ]

**अजा ग्रामं नयति** ( ई० ४० )—अत्र 'कर्मवत् कर्मणा प्रतिषेधो वक्तव्यः' इति वार्तिकेन नयतेर्द्विकर्मकतया अजारूपकर्मणः कर्तृत्वविवक्षायां कर्मस्थया क्रियया तुल्यक्रियत्वसत्त्वात् प्राप्तस्य कर्मवद्भावस्य ग्रामरूपकर्मणा सकर्मकत्वान्निषेधे न तत्प्रयुक्तयगादिकं भवतीति।

वस्तुतस्तु—गमनानुकूलव्यापाररूपेण अजानिष्ठफलेन नेतृव्यापारेण वा तत्र विशेषादर्शनेन कर्मस्थक्रियत्वाऽभावादिदं चिन्त्यम्। यदि ग्रामसंयोग एव

तथेत्युच्यते तर्हि ग्रामं गच्छतीत्यादौ ग्रामेऽपि पुरुषसंयोगरूपविशेषदर्शनात् 'रोचे लिट्' स्याऽपि कर्मस्थत्वं स्यात् । अत एव अन्योन्यमाश्लिष्यत इत्येवोदाहृतं भा।

उदशिश्रियत् ( ई० ४० )—'उत्' उपसर्गात्ण्यन्तात् श्रिधातोः कर्मकर्तरि लुङि तिपि अडागमे मध्ये च्लौ 'यक्चिणोः प्रतिषेधे हेतुमण्णिश्रिब्रूञामुपसंख्यानम्' इति वार्तिकेन कर्मत्वात्प्राप्तचिणो निषेधात् 'णिश्रीति' च्लेश्चङि द्वित्वादिकार्ये णिलोपे इयङि तकारस्य जश्त्वे 'उदशिश्रियत्' इति ।

कोषिषीष्ट ( ई० ४५ )—अत्र आर्धधातुकत्वेन यगविषयत्वात् 'कुषि रञ्जोः प्राचां श्यन् परस्मैपदं च' इत्यनेन श्यन्न भवति । परस्मैपदं कुतो न भवतीति न शङ्क्यम् ? परस्मैपदस्य श्यन्सन्नियोगशिष्टत्वेन विहितत्वात् ।

इति कर्मकर्तृप्रकरणम् ।

# अथ लकारार्थप्रकरणम्

**स्मरसि कृष्ण यद् वने वत्स्यामः तत्र गाश्चारयिष्यामः ( ई० ३४ )**—पूर्वं वने अवसाम, तत्र वने गाः अचारयाम, इति यत् तत् हे कृष्ण स्मरसीत्यर्थः । अत्रोभयत्र लङि प्राप्ते तम्प्रबाध्य 'विभाषा साकाङ्क्षे' इत्यनेन विभाषया लृट् । पक्षे लङ् ।

**जगाम किम् ?**—अत्र 'प्रश्ने चासन्नकाले' इति सूत्रेण लिड्विषये लङ्लिटौ स्तः । तेन पक्षे 'अगच्छत् किम् ?' इत्यपि भवति ।

**यजतिस्म युधिष्ठिरः**—अत्र 'लट् स्मे' इति सूत्रेण यज्धातोः लिड्विषये लट् भवति ।

**यावद् भुङ्क्ते ( ई० ३७, ५६ )**—'अत्र' 'यावत् पुरानिपातयोर्लट्' इति सूत्रेण भविष्यत्यर्थे लट् भवति ।

**कदा गमिष्यसि ! एष गच्छामि**—कदा गमिष्यसीति प्रश्ने एष गच्छामी-त्युत्तरम् । अत्र भूधातोः भविष्यति लृटि प्राप्ते तम्प्रबाध्य 'वर्तमानसामीप्ये वर्तमान-वद्वा' इति वर्त्तमानवद्भावात् लटि मिपि शपि 'इषुगमि-' इति छत्वे तुकि श्चुत्वे 'अतो दीर्घो यञि' इति दीर्घे तत्सिद्धिः ।

**कृष्णं नमेच्चेत् सुखं यायात्** ( ई० ३६ )—अत्र नमस्कारः सुखहेतुरिति हेतुहेतुमद्भावसत्वात् 'नम' धातोः 'या' धातोश्च भविष्यति लृटि प्राप्ते तं प्रबाध्य 'हेतुहेतुमतोर्लिङ्' इति लिङि तिबादिकार्ये तत्सिद्धिः।

**वसन् ददर्श** ( ई० ३६, ३७, ४६ )—ननु वस् धातोः 'वर्तमाने लट्' इति वर्तमानकालविहितलटः स्थाने 'लटः शतृ–' इति 'शतरि' निष्पन्नस्य 'वर्तमानकालिकवासकर्तुः' देवदत्तादेः 'परोक्षे लिट्' इति भूतकालविहितलिट्प्रत्ययघटित–'ददर्शे'ति तिङन्तप्रतिपाद्यभूतकालिकदर्शनकर्तृत्वं न स्यादिति चेन्मैवम्, 'धातुसम्बन्धे प्रत्ययाः' इति सूत्रेण विहितकालातिरिक्तकालेऽपि प्रत्ययस्य विधानेन प्रकृते प्रधानभूतभूतकालिकलिट्प्रत्ययान्तददर्शेति पदप्रतिपाद्यदर्शनक्रियानुरोधेन वस्धातोरपि भूतकाले एव उक्तसूत्रद्वारा लटो जायमानत्वेन वसन्निति पदेनापि अतीतकालस्यैव बोधेन भूतकालिकवासकर्तृभूतदेवदत्तादिकर्तृकातीतकालिकं दर्शनमित्यस्यैव तादृशवाक्यात् शाब्दबोधस्य जायमानतया पूर्वोक्तदोषविरहादिति दिक्।

**वसन् ददर्श** ( ई० ५७ )—अयमाशयः–ददर्शेति भूतकालिकक्रियादर्शनेन संयोगे वसन्नित्यत्र भूतकाले लट् भवति। एवं भवितेति भविष्यत्कालिकक्रियायोगे सोमयाजीत्यत्रापि भविष्यदर्थे णिनिः। अन्यथा 'करणे यजः' इत्यनेन भूतार्थे विहितो णिनिर्भविष्यदर्थे दुर्लभः स्यात्। नच 'वसन्' इति वर्तमानक्रियादर्शनेन ददर्शेति वर्तमाने लिडेव स्यादिति वाच्यम्। तिङ्वाच्यक्रियायाः प्राधान्येन गुणभूतक्रियायामेव विपर्ययात्।

**पुरीमवस्कन्द०**—बली = रावणः, नमुचिद्विषा = इन्द्रेण सह, विगृह्य = विरोधं प्राप्य, पुर्याः = अमरावत्याः, अवस्कन्दनं = पीडनम्, नन्दनवनस्य लवनं रत्नानां मोषणम्, अमराङ्गनानां हरणम्, इत्येवं प्रकारेण अहर्दिवम् = अहन्यहनि, अस्वास्थ्यं चक्रे, कृतवानित्यन्वयः। इत्थं शब्दः इति पर्यायः अवस्कन्दनादिक्रियाविशेषाणाम् अस्वास्थ्यक्रियासामान्ये अभेदं ग्राहयति।

( बली रावण इन्द्र से वैर कर स्वर्ग को घेर लिया और नन्दन वन को कैकवार उजाड़ डाला, रत्नों को चुरा लिया तथा देवाङ्गनाओं का ( भी ) अपहरण किया—इस प्रकार उसने दिन-रात स्वर्गको अस्वास्थ ( अस्तव्यस्त ) कर डाला। )

**अभिजानासि यद्वने अभुञ्जमहि** ( ई० ५३ )—अत्र 'न यदि' इति निषेधात् 'अभिज्ञावचने लृट्' इति लृट् न भवति।

**सुप्तोऽहं किल विललाप** ( ई० ४६ )—'विललाप' इत्यत्र 'परोक्षे लिट्' इति लिट्। पारोक्ष्यमत्र चित्तविक्षेपादिना बोध्यम्।

**स्म पिता ब्रवीति** ( ई० ४६, ४७ )—अत्र वाक्ये 'ब्रवीति' इत्यत्र 'अपरोक्ष्ये च' इति सूत्रेण लट् भवति।

**शीघ्रं वप्स्यामः** ( ई० ४६ )—अत्र 'क्षिप्रवचने लृट्' इति सूत्रेण लृट् भवति।

**अलं कृष्णो हस्तिनं हनिष्यति** ( ई० ४६ )—'सम्भावनेऽलमिति चेत् सिद्धाप्रयोगे' इति सूत्रस्य प्रत्युदाहरणमेतत्। तत्र हि 'सिद्धाप्रयोगे' इत्यस्याऽभावे अत्राऽपि लिङि 'हनिष्यति' इत्यत्र 'हन्यात्' इत्यनिष्टापत्तिः स्यात्।

**भुञ्जीय इतीच्छति** ( ई० ४६ )—अत्र 'लिङ् च' इति सूत्रेण लिङ् भवति।

**अपि गिरिं शिरसा भिन्द्यात्** ( ई० ३६, ४५ )—प्रायेण शिरसा गिरिं भेत्तुमयम् अलम् ( समर्थः ) इत्यर्थः। अत्र वाक्ये 'भिन्द्यात्' इत्यत्र 'सम्भावनेऽलमिति चेत् सिद्धाऽप्रयोगे' इति सूत्रेण लिङ् भवति।

**क्रियासमभिहारे लोट्** ( ई० ३६, ५४ )—समभिहारे लोट्, लोटो हिस्वौ, वा च तध्वमोः' इत्यत्र चत्वारि वाक्यानि। तत्र—'क्रियासमभिहारे लोट्' इति प्रथमं वाक्यम्। पौनः पुन्यं भृशार्थश्च क्रियासमभिहारः। ततश्च–पौनःपुन्ये भृशार्थे च द्योत्ये धातोर्लोट् स्यादिति तदर्थः। 'लोटो हिस्वौ' इति द्वितीयं वाक्यम्, पूर्ववाक्यविहितस्य लोटो हिस्वावादेशौ स्तः तथामपवादौ इति तदर्थः। ननु तर्हि हि–स्वयोरुभयोरपि लादेशत्वात् परस्मैपदत्वं स्यात्, अस्य स्वादेशस्य तङ्प्रत्याहारप्रविष्टत्वाऽभावेन 'तङानावात्मनेपदम्' इत्यस्याऽप्रवृत्तेः, किंच अनयोर्हिस्वयोः 'तिप्तस्झी'ति सूत्रानन्तर्भूतत्वात् तिङन्तत्वं च दुर्लभं स्यादिति चेत्? 'लोटो हिस्वौ' इति द्वितीयवाक्ये तावत् 'क्रियासमभिहारे लोट्' इति प्रथमवाक्यात् 'लोट्' इत्यनुवृत्तं स्थानषष्ठ्या विपरिणीतं तृतीयं वाक्यं सम्पद्यते। तत्र हि 'लोटो हिस्वौ' इति द्वितीयवाक्यात् 'हि-स्वौ' इत्यनुवृत्तं धर्मपरमाश्रीयते। तथा च—लोडादेशौ हि स्ववद्भवतः इति लभ्यते, कौ भवतः इत्याकाङ्क्षायां पूर्ववाक्योपस्थितौ 'हि-स्वौ' इति गम्यते। ततश्च—'याविमौ तिङन्तभूतौ हिस्वावुक्तौ तौ प्रसिद्धलोडादेशतिङन्तभूतहिस्ववद्भवतः' इति तृतीयं वाक्यं पर्यवस्यति। तिङन्तभूतहिस्वयोस्तावत्क्रमात् परस्मैपदत्वमात्मनेपदत्वं तिङन्तत्वं च प्रसिद्धम्। अतः

प्रकृतौ 'हि-स्वौ' क्रमात्परस्मैपदात्मनेपदसंज्ञौ स्तः, लिङ्संज्ञौ चेत्यर्थः। लिङ्त्वात् पदत्वसिद्धिः।

**ननु करोमि भोः** ( ई० ३७, ४७ )—अकार्षीः किम्? इति प्रश्ने प्रतिवचनमिदम्। अत्र वाक्ये 'करोमि' इत्यत्र 'ननौ पृष्टप्रतिवचने' इति सूत्रेण भूते लट्। ( अकार्षमित्यर्थः )।

**पुरा भुङ्क्ते** ( ई० ३७, ४० )—निश्चितं भोक्ष्यते इत्यर्थः। अत्र 'यावत् पुरानिपातयोर्लट्' इति सूत्रेण भविष्यतीत्यर्थे लट्।

**कर्मकर्तरि कृत्यक्तखलर्थानामभावे इति** ( ई० ३७ )—'व्यत्ययो बहुलं' 'लिङ्याशिष्यङ्' इति संहितापाठे अनुस्वारस्य परसवर्णेन जाते लकारे द्विलकारकाल्ल इत्यनुवृत्त्या लकारवाच्यस्यैव कर्तुः कर्मवद्भाव इति 'कर्मवत् कर्मणा तुल्यक्रियः' इत्यस्यार्थलाभेन यगादिकमेव नतु द्वितीयेति भावः। अत एव कृत्यक्तखलर्था न कर्मकर्तरि, किन्तु भाव एवेति भावः। लकारेणैव कर्मकर्तुरुपस्थानेन कृदादिप्रसक्तिर्न, उक्तार्थानामप्रयोगात्। लविधेः पूर्वं तु सुतरां न तत्प्रसक्तिर्लकारोपस्थाप्यकर्तुरभावेन कर्मकत्वाऽभावात्।

**त्वं स्म अध्यापय** ( ई० ३७, ४७ )—अत्र अधीष्टे विहितस्य लिङमपवाद 'अधीष्टे च' इति सूत्रेण लोट्।

**वोताप्योः इति** ( ई० ३७ )—'वोताप्योः' इति भूते लिङ्निमित्ते लृङ् वेत्यधिकृतत्वादुक्तविषये भूतकाले लृङ् वा भवति। तेन 'कथं नाम तत्रभवान् धर्ममत्यक्षत् अत्याक्षीद्वा' इति फलसिद्धिर्भवति।

**नाहं कलिङ्गान् जगाम** ( ई० ४०, ४५, ५३ )—कलिङ्गेषु = कलिङ्गो नाम निषिद्धो देशः, तेषु ( जनपदविशेषवाचित्वाद् बहुवचनम् ) अवात्सीः। अतस्त्वया न सहवासयोग्य इति प्रश्ने—'नाऽहं कलिङ्गान् जगाम' इत्युत्तरम्। अत्र 'जगाम' इत्यत्र 'अत्यन्ताऽपह्नवे लिड्वक्तव्यः' इति वार्तिकेन अपरोक्षार्थे लिट् भवति। द्वित्वादिकार्यन्तु पूर्ववत्। वार्तिके 'अपह्नवः = अपलापः। प्रस्तुतवाक्ये तद्देशगमनोत्तरकालिकवासविषयकप्रश्ने करणीभूतगमनस्यैवाऽपलापात् अत्यन्तापह्नवो ज्ञेयः।

**कच्चिज्जीवति** ( ई० ४० )—'कामप्रवेदनेऽकच्चिति' इति सूत्रस्य प्रत्युदाह-

रणमेतत्। तत्र हि अकच्चितीत्यस्याऽभावे अत्राऽपि लिङ् स्यात्। कच्चिच्छब्दस्ये-च्छार्थकत्वाऽभावात् 'इच्छार्थेष्वप्यत्र लिङ् नेति तत्त्वविदः।

**ऊर्ध्वं मुहूर्तात् यजतिस्म** ( ई० ४० )—अत्र 'यजताम्' इत्यत्र 'लट् स्मे' इति सूत्रेण लट् भवतीति विशेषः।

**नाकार्षम्** ( ई० ४५ )—अकार्षीः किम्? इति प्रश्ने—'न करोमि' 'नाऽकार्षम्'। अहं नु करोमि, 'अहं न्वकार्षम्' इत्युत्तरम्। 'अत्र' 'नन्वोर्विभाषा' इति सूत्रेण विभाषया लङ् भवति।

**आशंसे क्षिप्रमधीयीय** ( ई० ४५ )—अत्र 'आशंसावचने लिङ्' इत्यनेन लिङ् भवति।

**आश्चर्यमन्धो नाम कृष्णं द्रक्ष्यति** ( ई० ४५ )—अत्र 'शेषे लृडयदौ' इत्यनेन लृड् भवति।

**पुरा यास्यति** ( ई० ४७ )—'यावत् पुरानिपातयोर्लट्' इति सूत्रस्य प्रत्युदाहरणान्तरमेतत्। अत्र पुर् शब्दस्य तृतीयैकवचनान्तं 'पुरा' इति। तेन अत्र याधातोर्लट् नेति।

**धान्यमवाप्स्म** ( ई० ४७ )—देवः = मेघः, अवर्षीच्चेद्धान्यमवाप्स्म। अत्र 'आशंसायां भूतवच्च' इत्यनेन भूतवद्भावात् वप्धातोर्भविष्यति लुङि उत्तमपुरुषबहुवचने अवाप्स्मेति सिद्धं भवति।

**हन्तीति पलायते** ( ई० ४७ )—'हेतुहेतुमतोर्लिङ्' इति सूत्रे लिङ्ग्रहणसामर्थ्यात् 'भविष्यत्येवेष्यते' इत्युक्तत्वादत्र लिङ् न।

**कतमं भोजयसि** ( ई० ४२, ५१ )—अत्र 'किं वृत्ते लिप्सायाम्' इत्यनेन भविष्यति विभाषया लट्। पक्षे लुट्-लृटौ यथाप्राप्तमपि भवतः। तेन 'कं कतरं कतमं वा भोजयसि, भोजयिष्यसि, भोजयितासि वा' इति रूपाणि भवन्तीति।

**न मर्षये हरिं निन्देत्** ( ई० ४२ )—अत्र 'अनवक्लृप्त्यमर्षयोरकिंवृत्तेऽपि' इत्यनेन लिङिति विशेषः।

**कृष्णश्चेद् भुङ्क्ते त्वं गाश्चारय** ( ई० ४८, ५४ )—कृष्णभोजनकाले त्वं गाश्चारय इत्यर्थः। अत्र 'लोडर्थलक्षणे च' इति सूत्रेण भुङ्क्ते इत्यत्र विभाषया

लङ् भवति । पक्षे लुट्लृटावपि । कृष्णश्चेद् भोक्ता, भोक्ष्यते वा, एवं गाथारय इत्यप्युदाहार्यम् ।

**याहि याहीति याति** ( ई० ४८, ५६ )—अत्र 'क्रियासमभिहारे लोट्, लोटो हिस्वौ, वा च तध्वमोः' इत्यनेन लोट्, तस्य सर्वपुरुषवचनविषये परस्मैपदिभ्यः कर्तरि हिः, एवञ्च 'याही'ति । अत्र 'यथाविध्यनुप्रयोगः पूर्वस्मिन्' इति लोट्प्रकृतिभूत एव धातुरनुप्रयोज्यः, तत अनुप्रयोगात् यथा यथं लडादयस्तिबादयश्च भवन्ति । ततः संख्याकालयोः पुरुषविशेषार्थस्य चाऽभिव्यक्तिः । अत्र 'क्रियासमभिव्याहारे द्वे वाच्ये' इति द्वित्वे याहि याहीति याति, यातः, यान्ति, इत्यनुप्रयोगात् सर्वलकाराः सर्वपुरुषवचनानि च भवन्ति । पुनः पुनरतिशयेन वा एककर्तृकं वर्तमानकालिकं यानं यातीत्यर्थः । अत्र इति शब्दस्तु अभेदान्वये तात्पर्यं ग्राहयतीति दिक् ।

**याहि याहि**—अतिशयेन पुनः पुनर्वा यातीति-याहि याहीति याति । अतिशयेन पुनःपुनर्वा यातः इति-याहि याहीति यातः । अतिशयेन पुनःपुनर्वा यान्तीति-याहि याहीति यान्ति । अतिशयेन पुनः पुनर्वा यासीति—याहि याहीति यासि । अतिशयेन पुनः पुनर्वा याथः इति-याहि याहीति याथः । अतिशयेन पुनः पुनर्वा याथेति-याहि याहीति याथ । यात यातेति वा याथ । अतिशयेन पुनः पुनर्वा यामीति- याहि याहीति यामि । अतिशयेन पुनः पुनर्वाः यावः इति-याहि याहीति यावः । अतिशयेन पुनः पुनर्वा यामः इति-याहि याहीति यामः । एवमात्मनेपदेष्वपि ध्वंविषये ज्ञेयम् ।

**धातुसम्बन्धे प्रत्ययाः** ( ई० ४८ )—धातोः सम्बन्धः धातुसम्बन्धः तस्मिन् धातुसम्बन्धे । धातुशब्देन धात्वर्थो लक्ष्यते । ततश्च धात्वर्थयोः सम्बन्धे सति प्रत्ययाः स्युरिति लब्धम् । कस्मिन्नर्थे इत्याकाङ्क्षायां 'काल' इति गम्यते, तत्र 'वर्तमाने लट्' इत्यादिभिः तत्तत्कालविशेषे प्रत्ययसिद्धेस्ततोऽन्यस्मिन् काले इति गम्यते । तदाह मूले—धात्वर्थानां सम्बन्धे यत्र काले प्रत्यया उक्तास्ततोऽन्यत्रापि स्युरिति । धात्वर्थानामित्यत्र उदाहरणबहुत्वाभिप्रायेण बहुवचनमुक्तं वृत्तिकृता ।

**मुहूर्तादुपरि उपाध्यायश्चेदागच्छति** ( ई० ४१ )—अत्र वाक्ये लोडर्थलक्षणे वर्तमानाद्धातोर्लिङ्लटौ वा स्तः इत्यर्थक-'लिङ् चोर्ध्वमौहूर्तिके' इति सूत्रेण

लटि आगच्छति इति । लिङि तु आगच्छेत् इति । पक्षे लुट्लृटौ–आगन्ता आगमिष्यति वा इत्यपि भवति ।

**वसन्तीह पुरा छात्राः** ( ई० ४१ )—अत्र वाक्ये वसन्ति इत्यत्र पुराशब्दयोगे भूतानद्यतने लुङ्लटौ वा स्तः, नतु स्मयोगे इत्यर्थक–'पुरि लुङ्चाऽस्मे' इति सूत्रेण लट् । लुङि तु 'अवात्सीः' इति । पक्षे यथाप्राप्तम् अर्थात् अनद्यतनपरोक्षभूते लिट्–ऊषुः । परोक्षाऽविवक्षायां तु लङ् 'अवसन्' इति वा भवति ।

**अधीष्वाऽधीष्वेत्यधीते** ( ई० ४१ )—पुनः पुनः अतिशयेन वा अध्ययनमित्यर्थे 'क्रियासमभिहारे लोट् लोटो हिस्वौ वा च तध्वमोः' इति लोटि आत्मनेपदसंज्ञायां ध्वम्विषये स्वादेशे षत्वे 'क्रियासमभिहारे द्वे वाच्ये' इति द्वित्वे अधीऽष्वाधीष्व इति । ततो यथाविध्यनुप्रयोगः पूर्वस्मिन्नित्यनेन लोट्प्रकृतेरनुप्रयोगे तस्मात्संख्याकालयोः पुरुषविशेषार्थस्य च विवक्षायां लट् 'अधीते' इति । ततश्चाभेदान्वयतात्पर्यग्राहकेतिशब्दबलात्पुनः पुनरतिशयेन वाऽध्ययनाभिन्नैककर्तृकवर्तमानकालिकमध्ययनमिति बोधः । ध्वम्विषये स्वादेशस्य विकल्पविधानात् पक्षे अधीध्वमधीध्वमिति यूयमधीध्वे ( अधीध्वम् ) इत्यपि बोध्यम् ।

**आशंसेऽधीयीय** ( ई० ३८, ४५ )—गुरुरुपेयाच्चेदाशंसे 'अधीयीय' । अत्र 'आशंसावचने लिङ्' इति सूत्रेण भविष्यत्यर्थे लिङ् ।

**सम्भावयामि भुञ्जीत** ( ई० ३८ )—अत्र 'विभाषा धातौ सम्भावनवचनेऽयदि' इति सूत्रेण सम्भावनेऽर्थे विभाषया लिङि 'भुञ्जीत' इति । लिङभावे 'भोक्ष्यते' इति वा भवति ।

**भविष्यति मर्यादावचनेऽवरस्मिन्** ( ई० ३८ )—भविष्यति काले मर्यादोक्तावक्वरस्मिन् प्रविभागेऽनद्यतनवन्न भवतीति सूत्रार्थः । योऽयमध्वा गन्तव्य आपाटलिपुत्रात्तस्य यदवरं कौशाम्ब्यास्तत्र सक्तून् 'पास्यामः' इत्युदाहरणम् । अत्र कौशाम्ब्या इति मर्यादा गम्यते, अवरमित्यनेन अवरत्वं गम्यते, तेन भविष्यत्यनद्यतने लुटं प्रबाध्य लृडेव भवतीति ।

**समुच्चये सामान्यवचनस्य** ( ई० ३८, ४५ )—समुच्चये लोड्विधौ सामान्यार्थकस्य धातोरनुप्रयोगः स्यादिति सूत्रार्थः । सक्तून् पिब, धानाः खादेत्यभ्यवहरतीत्याद्युदाहरणम् ।

**अथ तत्र वा त्वमेवं कुर्याः** ( ई० ४३ )—यच्चेति समुदाये यत्रशब्दे च प्रयुज्यमाने अनवक्लृप्त्यमर्षयोर्लिङ् स्यादित्यर्थक—'यच्चयत्रयोः' इति सूत्रेण अत्र लृटमपवाद्य लिङ् भवति। अत्रोदाहरणे यच्चेति यत्रेति च अनवक्लृप्त्यमर्षद्योतकौ। त्वमेवं कुर्याः इत्येतन्न श्रद्दधे न मर्षयामि वेत्यन्वयो बोध्यः।

**अपिधास्यति द्वारम्** ( ई० ४० )—'उताप्योः समर्थयोः' इति सूत्रस्य प्रत्युदाहरणमेतत्। तत्र हि समर्थयोर्ग्रहणाऽभावे अत्राऽपि लिङ् स्यादिति भावः।

**यजतां भवान्** ( ई० ४०, ४४ )—यजतामित्यत्र 'प्रैषातिसर्गप्राप्तकालेषु कृत्याश्च' इत्यनेन लोडिति विशेषः।

**आगच्छत् किम्** (ई० ५८)—अत्र 'प्रश्ने चासन्न काले' इति सूत्रेण लिङ्विषये लङ् भवतीति विशेषः।

**कदा कर्हि वा भुङ्क्ते** ( ई० ५४ )—अत्र 'विभाषा कदाकर्ह्योः इति सूत्रेण भविष्यत्यर्थे विभाषया लङ् भवति। लङभावपक्षे यथाप्राप्तं लृट्लुटौ भवतः। तेन 'कदा कर्हि वा भुङ्क्ते-भोक्ष्यते-भोक्ता वा' इति भवति। ननु कर्हियोगे लङभावपक्षे लुडेव उचितः न तु लृट्, 'अनद्यतने र्हिलन्यतरस्याम्' इति र्हिलन्तकर्हियोगविरोधादिति चेन्न, लुड्दाहरणस्य कदायोगमात्रविषयत्वात्।

**कथं धर्मं त्यजेः त्यजसि वा** ( ई० ५०, ५४ )—अत्र 'विभाषा कथमि लिङ् च' इति सूत्रेण गर्हायां कालत्रयेऽपि लिङ् चाल्लट् च भवतीति विशेषः।

**इच्छेत्-इच्छति वा**—अत्र 'इच्छार्थेभ्यो विभाषा वर्तमाने इति सूत्रेण विभाषया लिङ्, पक्षे लट्।

**त्वं भारं वहेः** ( ई० ५४ )—अत्र 'शाकि लिङ् च' इति सूत्रेण लिङ् भवति।

इति लकारार्थप्रकरणम्।

# अथ कृदन्ते कृत्यप्रकरणम्

**एधितव्यम्**—एध्धातोः 'कर्तरि कृत्' इति सूत्रं प्रावध्य 'तयोरेव कृत्यक्तखलर्थाः' इति नियमेन 'तव्यतव्यानीयरः' इति तव्यप्रत्यये 'आर्धधातुकस्येड्वलादेः' इति इटि 'एधितव्य' इति स्थिते 'कृत्तद्धितसमासाश्च' इति प्रातिपदिकसंज्ञायां सौ 'भावे औत्सर्गिकत्वं क्लीबत्वं च' इति क्लीबत्वात् सोरमि पूर्वरूपे 'एधितव्यम्' इति।

**भिदेलिमाः**—भिद्धातोः 'केलिमर उपसंख्यानम्' इति वार्तिकेन केलिमरप्रत्यये अनुबन्धलोपे विभक्तिकार्ये 'भिदेलिमाः, सरलाः' इति। सरलाः वृक्षविशेषाः।

**वास्तव्यः**—( ई० ३७, ५६, ५८ )—वसतीति वास्तव्यः। वस्धातोः 'वसेस्तव्यत् कर्तरि णिच्च' इति तव्यप्रत्यये णिद्वद्भावे च कृते णित्वादुपधावृद्धौ विभक्तिकार्ये 'वास्तव्यः' इति।

**प्रेङ्खणीयम्**—'इखि गतौ' इति भौवादिकः परस्मैपदी धातुः। इदित्वान्नुमि अनुस्वारे परसवर्णे च कृते 'इङ्ख' इति, तस्मात् अनीरप्रत्यये कृते 'इजादेः सनुमः इति णत्वे विभक्त्यादिकार्ये 'प्रेङ्णीयम्' इति।

**प्रभानीयम्**—प्रोपसर्गात्भाधातोः अनीयरप्रत्यये सवर्णदीर्घे 'कृत्यचः'इति णत्वे प्राप्ते 'न भाभूपूकमिगमिप्यायीवेपाम्' इति निषेधे विभक्तिकार्ये 'प्रभानीयम्' इति।

**चेयम्** ( ई० ५८ )—चेतुं योग्यं चेयम्। चीधातोः 'अचो यत्' इति यत्प्रत्यये 'आर्धधातुकं शेषः' इति तस्यार्धधातुकत्वे गुणे कृदन्तत्वात् सौ सोरमि पूर्वरूपे 'चेयम्' इति।

**देयम्** ( ई० ५८ )—दातुं योग्यं देयम्। दाधातोः 'अचो यत्' इति यत्प्रत्यये 'ईद्यति' इति ईत्वे यतः आर्धधातुकत्वात् गुणे विभक्तिकार्ये 'देयम्' इति।

**शप्यम्** ( ई० ३७ )—शप्तुं योग्यं शप्यम्। 'शप् आक्रोशे' इति धातोः 'पोरदुपधात्' इति यत्प्रत्यये विभक्तिकार्ये 'शप्यम्' इति।

**उपलभ्यः साधुः** ( ई० ३४ )—अत्र साधुशब्दात् प्रशंसागम्यमाने सति 'उपात्प्रशंसायाम्' इति सूत्रेण यादौ प्रत्यये विवक्षिते उपात्परस्य लभेर्नुमि अदुपधत्वाऽभावात् 'पोरदुपधात्' इति यत्प्रत्ययस्याऽप्रवृत्तेः 'ऋहलोर्ण्यत्' इति ण्यति नस्यानुस्वारे परसवर्णे विभक्तिकार्ये 'उपलम्भ्यः' इति समीपे प्राप्य इत्यर्थः।

शक्यम् ( ई० ३३ )—शक्तुं योग्यं शक्यम्। शक्धातोः 'शकिसहोश्च' इति यति विभक्तिकार्ये 'शक्यम्' इति।

अवद्यं–पापम् ( ई० ४१ )—नञुपपदात् वद्धातोः 'अवद्यपण्यवर्या गर्ह्यपणितव्यानिरोधेषु' इति सूत्रेण गर्ह्यायां 'वदः सुपि क्यप् च' इति क्यपं प्रबाध्य निपातनात् यति विभक्त्यादिकार्ये 'अवद्यं पापम्' इति। गर्हितत्वादवाच्यमित्यर्थः।

पण्यम् (ई० ३४)—'पण व्यवहारे स्तुतौ च' इति धातोः व्यवहारेऽर्थे 'अवद्यपण्यवर्या—' इति सूत्रेण निपातनात् यति विभक्तिकार्ये 'पण्यम्' इति विक्रेयमित्यर्थः।

अर्यः ( ई० ३६ )—'ऋ गतौ' इत्यस्माद्धातोः 'अर्यः स्वामिवैश्ययोः' इति सूत्रेण ण्यतं प्रबाध्य निपातनात् यति गुणे विभक्तिकार्ये 'अर्यः' इति।

आर्यः—ऋधातोः 'ऋहलोर्ण्यत्' इति ण्यति वृद्धौ रपरत्वे विभक्तिकार्ये 'आर्यः-ब्राह्मणः' इति सिद्धम्। 'अर्यः स्वामिवैश्ययोः इति सूत्रस्य प्रत्युदाहरणमेतत्।

ब्रह्मोद्यम्—( ई० ५८ )—ब्रह्म = वेदं, तं वदतीति ब्रह्मोद्यम्। ब्रह्मोपपदात् वद्धातोः 'वदः सुपि क्यप् च' इति सूत्रेण क्यपि 'वचिस्वपि–' इति सम्प्रसारणे पूर्वरूपे गुणे विभक्तिकार्ये उक्तं रूपं सिद्धम्।

ब्रह्मभूयम्—ब्रह्मणो भावः-ब्रह्मभूयम्। ब्रह्मोपपदात् भूधातोः 'भुवो भावे' इति क्यपि कित्वात् गुणाऽभावे विभक्तिकार्ये उक्तं रूपं सिद्धम्।

इत्यः, स्तुत्यः ( ई० ५४, ५८ )—एतुं योग्यः 'इत्यः' इण्धातोः 'एतिस्तुशास्वृदृजुषः क्यप्' इति क्यपि 'ह्रस्वस्य पिति कृति तुक्' इति तुकि विभक्तिकार्ये 'इत्यः' इति। एवं स्तोतुं योग्यः स्तुत्यः। स्तुधातोः क्यपि तुकि 'स्तुत्यः' इति।

शिष्यः ( ई० ३७ )—शासितुं योग्यः शिष्यः। शास्धातोः 'एतिस्तुशास्वृदृजुषः क्यप्' इति क्यपि 'शास इदङ्हलोः' इत्युपधाया इत्वे 'शासिवसिघसीनां च' इति सस्य षत्वे विभक्तिकार्ये 'शिष्यः' इति।

वृत्यः ( ई० ३४ )—वरितुं योग्यः वृत्यः। वृधातोः 'एतिस्तुशास्–' इति क्यपि तुकि विभक्तिकार्ये 'वृत्यः' इति। 'वृङ् सम्भक्तौ' इत्यस्मात् ण्यति वृद्धौ विभक्तिकार्ये 'वार्या ऋत्विजः' इति भवति। अत्र क्यप् तु न, 'वृ इति वृञो ग्रहणं न 'वृङः' इत्युक्तत्वात्।

आदृत्यः, जुष्यः ( ई० ३३ )—आङुपसर्गात् दृधातोः 'एतिस्तुशास्वृदृजुषः

क्यप् इति क्यपि 'ह्रस्वस्य पिति कृति तुक्' इति तुकि विभक्तिकार्ये 'आदृत्यः' इति । एवं जुष्धातोः क्यपि विभक्तिकार्ये 'जुष्यः' इति ।

मार्ग्यः ( ई० ५६, ५८ )—मार्जितुं योग्यः—मृज्यः, मार्ग्यः । 'मृजेर्विभाषा' इति क्यबभावपक्षे मृज्धातोः 'ऋहलोर्ण्यत्' इति ण्यति 'मृजेर्वृद्धिः' इति वृद्धौ रपरत्वे 'चजोः कु घिण्ण्यतोः' इति कुत्वे 'मार्ग्यः' इति । क्यपि तु 'मृज्यः' इति ।

पाव्यम् ( ई० ३१ )—पूधातोः 'ओरावश्यके' इति ण्यति 'अचो ञ्णिति' वृद्धौ 'वान्तो यि—' इत्यावादेशे विभक्तिकार्ये 'पाव्यम्' इति ।

[ अवश्यलाव्यम्—

लुम्पेदवश्यमः कृत्ये, तुं काममनसोरपि ।
समो वा हिततयोर्मांसस्य पचि युड्घञोः ॥

लुम्पेदिति—कृत्प्रत्यये परे अवश्यमशब्दस्य मकारो लुप्यते । काममनसोः परयोः तुमो मकारो लुप्यते । हिततयोः परयोः समो मकारो वा लुप्यते, युड्घञ्परके पच्धातौ परे इत्यर्थः । उदाहरणानि यथा—अवश्यलाव्यम् । वक्तुकामः । गन्तुमनाः । सततम्–सन्ततम् । सहितं–संहितम् । मांसपचनी । मांस्पाकः इत्यादि ]

भव्यः ( ई० ४५, ५५ )—भवतीति भव्यः । भूधातोः 'भव्यगेयप्रवचनीयोपस्थानीयजन्याप्लाव्यापात्या वा' इति सूत्रेण कर्तरि निपातनात् यत्प्रत्यये गुणे अवादेशे विभक्तिकार्ये 'भव्यः' इति ।

वाच्यम् (ई० ५७)—वच्धातोः 'ऋहलोर्ण्यत्' इति ण्यति वृद्धौ 'वचोऽशब्दसंज्ञायाम्' इति कुत्वनिषेधे विभक्तिकार्ये 'वाच्यम्' इति 'वस्तु' इति शेषः । शब्दाख्यायां तु 'वाक्यम्' इति भवति ।

पुष्यः ( ई० ५४ )—पुष्यन्त्यस्मिन्नर्थाः—पुष्यः । पुष्धातोः 'पुष्यसिध्यौ नक्षत्रे' इति निपातनात् क्यपि कित्वात् गुणनिषेधे विभक्तिकार्ये 'पुष्यः' इति । अन्यत्र तु 'पौष्यः' इति भवति ।

जित्यः ( ई० ३३ )—जिधातोः 'विपूयविनीयजित्या मुञ्जकल्कहलिषु' इति सूत्रेण हल्यर्थे निपातनात् क्यपि कित्वात् गुणनिषेधे विभक्तिकार्ये 'जित्यः' इति ।

प्रतिगृह्यम् ( ई० ३७ )—प्रत्युपसर्गात् ग्रह्धातोः 'प्रत्यपिभ्यां ग्रहेः' 'छन्द-

सीति वक्तव्यम्' इति छन्दसि क्यपि 'ग्रहिज्ये'ति सम्प्रसारणे 'विभक्तिकार्ये' 'प्रतिगृह्यम्' इति । लोके तु ण्यति वृद्धौ 'प्रतिग्राह्यम्' इति भवति ।

**आर्यगृह्यः**—आर्यैर्गृह्यते-आर्यगृह्यः । तत्पक्षाश्रित इत्यर्थः । अत्र 'पदाऽस्वैरिबाह्यापक्ष्येषु च' इति सूत्रेण ग्रहेः क्यपि 'ग्रहिज्ये'ति सम्प्रसारणे कार्ये 'आर्यगृह्यः' इति ।

**कृत्यं-कार्यम् । वृष्यं-वर्ष्यम्**—कर्तुं योग्यं कार्यम् । कृधातोः कृवृषोः' इति विभाषया क्यपि कित्वात् गुणनिषेधे 'ह्रस्वस्य पिति-' इति विभक्तिकार्ये 'कृत्यम्' इति । पक्षे ण्यति अचो ञ्णितीति वृद्धौ 'कार्यम्' इति । वृष्धातोः क्यपि 'वृष्यम्' इति । ण्यति सति गुणे 'वर्ष्यम्' इति ।

**अमावास्या (ई० ५८)**—अमा सह वसतोऽस्यां चन्द्रार्कौ इति अमावास्या । अत्र 'अमावास्यादन्यतरस्याम्' इति सूत्रेण अमोपपदात् वसतेरधिकरणे ण्यति, वृद्धौ सत्यां पाक्षिको ह्रस्वाऽभावश्चानेन निपात्यते, तेन पक्षे 'अमावस्या' इत्यपि भवति ।

**चित्यः**—चीयते इति चित्यः । 'चित्याग्निचित्ये च' इति सूत्रेणात्र चिधातोः अग्न्याधारस्थलविशेषेऽर्थे निपातनात् कर्मणि क्यपि कित्वात् गुणनिषेधे विभक्तिकार्ये 'चित्यः' इति सिद्धम् ।

**वासरूपविधेरिति ( ई० ४७ )**—'वाऽसरूपोऽस्त्रियाम्' इति परिभाषया लोट्कृत्यसंज्ञकप्रत्ययश्च पर्यायेण भविष्यतीति 'प्रैषादि' सूत्रे कृत्यग्रहणं स्त्र्यधिकारादूर्ध्वं 'वासरूपोऽस्त्रियाम्' इति सूत्रं क्वचिन्न प्रवर्तते इति ज्ञापयति । एवञ्च 'क्तल्युट्तुमुन्खलर्थेषु मिथो बाध्यबाधकभावो न भवती'ति वचनं सिद्धम् । तेन 'हसितं हसनम्' इति भावे विहितयोः क्तल्युट्प्रत्यययोर्विषये 'भावे' इति सूत्रेण घञ्प्रत्ययो न भवति । अथ च 'ईषत्पानः' इति खलर्थे खल्प्रत्ययश्च न भवतीति फलम् । अत्र लाघवात् 'शकि लिङ् च' इति सूत्रे चकारग्रहणेनैव पूर्वोक्तज्ञापनसम्भवे 'प्रैषादि' सूत्रे कृत्यग्रहणं न कार्यमिति दिक् ।

**निर्विण्णः ( ई० ४२ )**—विद्धातोः 'तयोरेव कृत्यक्तखलर्थाः' इति कर्मणि क्तप्रत्यये 'रदाभ्याम्' इति दकारादुत्तरस्य तकारस्य पदस्य च नत्वे 'निर्विन् न' इति स्थिते नकारस्य अचः परत्वाभावात् नकारेण व्यवधानाच्च 'कृत्यचः' इति

सूत्रेण णत्वाप्राप्तया 'निर्विण्णस्योपसंख्यानम्' इति वार्तिकेन परस्य णत्वे पूर्वस्य ष्टुत्वे 'निर्विण्णः' इति ।

**अजर्यम्** ( ई० ४१ )—न जीर्यतीत्यजर्यम् । जरितृ न भवतीत्यर्थः । मित्रत्व-धावत्‌ अत्र जॄधातोः 'तयोरेव' इति भावे क्तप्रत्ययप्राप्ते 'अजर्यं सङ्गतम्' निपातनात् कर्तरि यत् । अत एव-'तेन सङ्गतमार्येण रामाजर्यं कुरु द्रुतम्' संगच्छते । हे राम ! तेन = आर्येण, अजर्यम् = अनश्वरं, सङ्गतं = सङ्गमं, शीघ्रं, कुरु, इत्यर्थः । ननु यदा सङ्गतं चेद्विशेष्यं तदेवोक्तसूत्रेण यत्प्रत्ययो निपात्यते । ततश्च 'मृगैरजर्यं जरसा' इति कालिदासप्रयोगाऽनापत्तिः स्यादिति चेन्मैवम् , अत्र वाक्ये सङ्गतमिति विशेष्यमध्याहार्येण सम्भवात् ।

**पञ्च प्रयाजाः** ( ई० ४१ )—अयञ्च 'प्रयाजाऽनुयाजौ यज्ञाङ्गे' इति निपातनात्सिद्धं भवति ।

**सान्नाय्यम्** ( ई० ४१, ४९, ५० )—सम्यक् नीयते होमार्थमग्नीति सान्नाय्यं हविर्विशेषः । अत्र सम्पूर्वान्नीधातोः 'पाय्य-सान्नाय्य-निकाय्य-धाय्य-मान-हवि-निवास-सामिधेनीषु' इति सूत्रेण निपातनात् ण्यत् , आयादेशः, समो दीर्घश्च भवति ।

**संवाह्यम्** ( ई० ४१ )—अग्निधारणार्थे स्थलविशेषेऽभिधये सम्पूर्वात् वह्-धातोः 'अग्नौ परिचाय्योपचाय्यसमूह्याः' इति सूत्रेण निपातनात् कर्मणि ण्यति सम्प्रसारणे दीर्घे च कृते 'समूह्यम्' इति भवति । अन्यत्र 'संवाह्यम्' इति । उपसर्गभिन्ने तु कर्मणि ण्यति सति 'वाह्यम्' इत्येव स्यात् ।

**पाय्यं मानम्** ( ई० ५७ )—मीयते अनेनेति पाय्यं मानम् । अत्र 'पाय्य-सान्नाय्य-' इति पूङ्धातोः निपातनात् ण्यति वृद्धौ आयादेशे विभक्तिकार्ये 'पाय्यम्' इति ।

**प्रवपणीयम्** ( ई० ३९ )—'कृत्यचः' इति नित्यमेवाऽत्र णत्वं भवति । 'हलश्चेजुपधात्' इति सूत्रस्य प्रत्युदाहरणमेतत । तत्र हि इजुपधात् इत्यस्याऽभावेऽत्राप्यनेन वैकल्पिकणत्वं स्यात् ।

**पण्या** ( ई० ३९, ५२ )—'पण व्यवहारे' अस्माद्धातोः 'अवद्यपण्यवर्या गर्ह्यपणितव्याऽनिरोधेषु' इति सूत्रेण निपातनादत्र यत्प्रत्ययो भवति । यद्यपि

'पण व्यवहारे स्तुतौ च' इति धातोरर्थद्वयमस्ति, तथापि पण्यशब्दस्य प्रयोगबलेन व्यवहर्तव्ये एव रूढत्वादिह व्यवहारार्थक एव गृह्यते। स्तुतौ तु—ण्यति उपधावृद्धौ 'पाण्यम्' इति भवति।

लभ्यम् (ई० ३९)—लब्धुं योग्यं लभ्यम्। लभ्धातोः 'पोरदुपधात्' यत्प्रत्यये कृदन्तत्वात्प्रातिपदिकसंज्ञायां सौ सकारस्य अमादेशे पूर्वरूपे इति। ननु यण्ण्यतोरसारूप्यात् 'वाऽसरूपोऽस्त्रियाम्' इति परिभाषया 'ऋहलो' इति कदाचिण्ण्यदपि कुतो नेति चेन्न, 'नानुबन्धकृतमसारूप्यम्' इति 'वाऽसरूप' सूत्रे भाष्ये उक्तत्वात्।

प्रेन्वनम् (ई० ४६)—'इवि प्रीणने' प्रोपसर्गादस्माल्ल्युटि तस्य अनादेशे गुणे कृदन्तत्वात् सौ तस्य अमादेशे पूर्वरूपे 'प्रेन्वनम्' इति। अत्र 'इजादेः स नुमः' इति णत्वन्तु न, नुम्ग्रहणमनुस्वारोपलक्षणार्थमिति 'अट्कुप्वाङि'ति सूत्रेऽप्युक्तत्वात्।

प्रणाय्यः (ई० ४६)—प्रोपसर्गात् णीधातोः 'प्रणाय्योऽसम्मतौ' इति सूत्रेण ण्यति वृद्धौ सत्याम्, आयादेशश्च निपात्यते।

जन्यम् (ई० ३६, ४०, ५७)—'जनी प्रादुर्भावे' अस्मात् 'तकिशसिचतियतिजनिभ्यो यद्वाच्यः' इति वार्तिकेन यत्प्रत्यये कृदन्तत्वात्प्रातिपदिकसंज्ञायां सौ तस्य अमादेशे पूर्वरूपे 'जन्यम्' इति सिद्धम्। न च ण्यत्प्रत्ययेऽपि 'जनिवध्योश्च' इति वृद्धिनिषेधात् 'जन्यम्' इति सिद्धौ यद्विधानं व्यर्थमिति वाच्यम्, 'यतोऽनावः' इत्याद्युदात्तविधानार्थं स्वरे आवश्यकत्वात्।

निकाय्यः (ई० ३६)—निचीयतेऽस्मिन् धान्यादिकमिति 'निकाय्यो' निवासः। अत्र 'नि' उपसर्गात् चिञ् धातोः 'पाय्यसान्नाय्यनिकाय्यधाय्या मानहविर्निवाससामिधेनीषु' इति सूत्रेण अधिकरणे ण्यत्, आय्, धात्वादेः कुत्वं च निपातनाद् भवति। वृद्धिस्तु णित्वाद् 'अचो ञ्णिति' इत्यनेनैवेति न विस्मर्तव्यम्।

न क्वादेरिति—'चजोः' इति सूत्रे 'निष्ठायामनिट्' इति पठित्वा—निष्ठायामनिट्धातोश्चजोः कुत्वमित्यर्थे गर्जधातोर्निष्ठायां सेट्त्वेन 'गर्ज्यम्' इत्यादौ 'न क्वादेः' इति सूत्रोदाहरणे कुत्वाभावं सम्पाद्य वार्तिककारेण प्रत्याख्यातं तत्सूत्रम्। अर्जितर्जिप्रभृतीनां निष्ठायां सेट्त्वेन कुत्वाभावः। मुचुग्लुचुप्रभृतीनां क्वादिगणपठितत्वेऽपि 'उदितो वा' इति सूत्रेण क्त्वायां वेट्त्वात् 'यस्य विभाषा' इति निष्ठाविषये

अनिट्त्वात् 'चजोः' इति इष्टं कुत्वं भवत्येव । न च 'न क्वादेः' इति सूत्रसत्तायां भ्रुग्गुम्लुचुप्रभृतीनां कुत्वं न भवति, सूत्राभावे तु प्राप्नोतीति मतद्वये प्रयोगवैलक्षण्यात् प्रत्याख्यानासङ्गतिरिति वाच्यम् ? परस्परविरोधेऽपि यथोत्तरमुनिवाक्यस्य प्रामाण्यात् । एवञ्च वार्तिककारानुरोधेन भ्रुग्गुम्लुचुप्रभृतीनां कुत्वं स्वीकर्तव्यमिति दिक् ।

**प्रपवणीयः** (ई० ३८)—प्रपूर्वकात् ऋकारेत्संज्ञक 'पू' धातोः—धातोः तव्यत्-तव्य-अनीयर्-प्रत्ययाः स्युरित्यर्थकेन 'तव्यत्तव्यानीयरः' इति अनीयर्प्रत्यये अनुबन्धलोपे उकारस्य गुणे अवादेशे 'प्रपवनीय' इति स्थिते उपसर्गस्थान्निमित्तात्परस्याऽच उत्तरस्य कृत्स्थस्य नस्य णत्वं स्यादित्यर्थकेन 'कृत्यचः' इति सूत्रेण णत्वे कृदन्तत्वात् प्रातिपदिकसंज्ञायां सौ तस्य रुत्वे विसर्गे 'प्रपवणीयः' इति सिद्धम् । 'न भाभूपूकमिगमिप्यायीवेपाम्' इति सूत्रे 'पूञ एवेह ग्रहणमिष्यते' इति वार्तिकोक्त्या अत्र णत्वनिषेधो न ।

**उपसर्या गौः** (ई० ३८)—गर्भाधानार्थं वृषभेणोपगन्तुं योग्या गौरित्यर्थः । अत्र उपोपसर्गात् 'सृ' धातोः गर्भग्रहणे प्राप्तकाला स्त्रीपशुव्यक्तिर्विवक्षिता चेदुपसर्या इति निपात्यते इत्यर्थक 'उपसर्या काल्या प्रजने' इति सूत्रेण ण्यत्प्रत्ययं प्रबाध्य निपातनात् यत्प्रत्यये गुणे स्त्रीत्वाट्टापि कृदन्तत्वात् सौ तस्य हल्ङ्यादिना लोपे 'उपसर्या' इति ।

**प्रख्यानीयम्** ( ई० ४७ )—प्रोपसर्गात् ख्याधातोः अनीयर्प्रत्यये विभक्त्यादिकार्ये 'प्रख्यानीयम्' इति । 'कृत्यचः' इति णत्वं तु न, 'चक्षिङः ख्याञ्' इति सूत्रे भाष्ये 'ख्शाञः शस्य यो वा' इत्युक्तत्वात् यत्वस्याऽसिद्धत्वात् शकारव्यवधानेन 'चुटुतुलशर्व्यवायेन' इति निषेधात् ।

**अनुद्यम्** ( ई० ४७, ५७ )—नञि उपपदे वद्धातोः 'वदः सुपि क्यप् च' इति क्यपि 'वचिस्वपी'ति सम्प्रसारणे पूर्वरूपे विभक्त्यादिकार्ये 'अनुद्यम्' इति, 'वचनाऽनर्हं गुरुनाम' इति शेषः । 'अवद्यपण्यवर्या गर्ह्यपणितव्याऽनिरोधेषु' इति सूत्रस्य गर्ह्येत्यस्य प्रत्युदाहरणमेतत् ।

**ओकः** ( ई० ४७ )—उच्धातोः 'इगुपधज्ञाप्रीकिरः कः' इति सूत्रेण कप्रत्यये 'ओक उचः के' इत्यनेन के परे निपातनात् उचेर्गुणे कुत्वे स्वादिकार्ये 'ओकः शकुन्तवृषलौ' इति ।

**त्याज्यम्** ( ई० ५७ )—त्यज्धातोः 'ऋहलोर्ण्यत्' इति ण्यति 'चजो'रिति कुत्वे प्राप्ते 'त्यजेश्च' इति वार्तिकेन निषेधे 'अचोञ्णिति' इति वृद्धौ विभक्तिकार्ये 'त्याज्यम्' इति।

**चत्यम्** ( ई० ४३, ४५ )—इदित्संज्ञक-चत्धातोः 'तकि-शसि-चति-यति-जनिभ्यो यद्वाच्यः' इति वार्तिकेन यत्प्रत्यये कृदन्तत्वात् सौ तस्य अमादेशे पूर्वरूपे च 'चत्यम्' इति।

**वध्यः** ( ई० ४३, ४५, ५८ )—'हन्' धातोः 'हनो वा तद्वधश्च वक्तव्यः' इति वार्तिकेन यत्प्रत्यये हनो वधादेशे च कृते कृदन्तत्वात् सौ रुत्वे विसर्गे 'वध्यः' इति। यदभावपक्षे तु-'ऋहलोर्ण्यत्' इति ण्यत्प्रत्यये 'हनस्तोऽचिण्णलोः' इति नकारस्य तकारे 'हो हन्तेः' इति कुत्वे उपधावृद्धौ कृदन्तत्वात् सौ रुत्वे विसर्गे घात्यः इति भवति। वधादेशोस्तु न, यत्सन्नियोगशिष्टत्वेन विहितत्वात्।

**अथ कथं भार्या वधूरिति** ( ४३, ४९ )—ननु 'भृञोऽसंज्ञायाम्' इति सूत्रे भार्या क्षत्रिया इति पुँल्लिङ्गे संज्ञायां क्यपोऽभावं कुर्वत्सचरितार्थमिति स्त्रीलिङ्गे संज्ञायां न प्रवर्तिष्यते इति भार्या वधूरित्यत्र 'संज्ञायां समजनिषत्' इत्यादिना क्यपा भाव्यमिति चेन्न, 'एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य' इति परिभाषया 'डुभृञ् धारणपोषणयोः' इत्यस्मात् क्र्यादिपठितदीर्घान्तात् 'भृ भरणे' इत्यस्मात् वा ण्यन्तप्रत्ययस्य सिद्धत्वात्। 'संज्ञायां समजनि' इत्यादि सूत्रे ह्रस्वान्त-भृञ्धातोः पाठेन दीर्घान्तभृञ्धातुविषये तत्सूत्राऽप्रवृत्तिः। डुभृञ्धातौ अनुबन्ध-द्वयं वर्तते भृञ्धातौ चैकानुबन्धो वर्तते, इति डुभृञ्धातुविषयेऽपि तत्सूत्राऽप्रवृत्ति-रिति दिक्।

**आचर्य्यो देशः** ( ई० ४८ )—आङुपसर्गात् चर्धातोः 'चरेराङि चाऽगुरौ' इति वार्तिकेन यत्प्रत्यये 'अचो रहाभ्यां द्वे' इति द्वित्वे कृदन्तत्वात्प्रातिपदिक-संज्ञायां सौ सकारस्य रुत्वे विसर्गे 'आचर्य्यः' इति।

**चेक्रियः** ( ई० ४८ )—क्रीञ्धातोर्यङ्लुकि द्वित्वादिकार्ये 'चेक्री' इति, तस्मात् 'नन्दिग्रहि' इति पचादित्वादच्प्रत्यये 'चेक्री अ' इति स्थिते 'न धातुलोप' इति गुणनिषेधे संयोगपूर्वकत्वाद् गुणनिषेधे इयङि विभक्त्यादिकार्ये 'चेक्रियः' इति।

**वह्यम्** ( ई० ३७ )—वहन्त्यनेनेति वह्यं शकटम्। अत्र 'वह्यं करणम्' इति सूत्रेण निपातनात् यत्प्रत्यये कृदन्तत्वात्सौ तस्य अमादेशे पूर्वरूपे 'वह्यम्' इति।

**प्रतिगृह्यम्** ( ई० ३७ )—'प्रत्यपिभ्यां ग्रहेः' इति सूत्रे 'छन्दसीति वक्तव्यम्' इति वार्तिकं पठितं, तेन छन्दसि—प्रतिपूर्वक ग्रह्धातोः क्यप्प्रत्यये सम्प्रसारणे स्वादिकार्ये 'प्रतिगृह्यम्' इति । लोके तु—ण्यति उपधावृद्धौ 'प्रतिग्राह्यम्' इति भवति ।

**समवसर्ग्या** ( ई० ३७ )—'ऋदुपधाच्चाऽक्लृपि चृतेः' इति ण्यदपवादस्य कपं प्रबाध्य 'समवपूर्वाच्च' इति वार्तिकेन समवपूर्वात् सृज्धातोः यत्प्रत्यये गुणे 'चजोः'रिति कुत्वे विभक्त्यादिकार्ये 'समवसर्ग्या' इति ।

**लाप्यम्** ( ई० ३७, ५७ )—ण्यदपवादभूतं 'पोरदुपधात्' इति यत्प्रत्ययं प्रबाध्य 'ण्यत्प्रकरणे लपिदभिभ्याश्चेति वक्तव्यम्' इति वार्तिकेन ण्यत्प्रत्यये उपधावृद्धौ विभक्त्यादिकार्ये 'लाप्यम्' इति ।

**ई च खनः** ( ई० ३७, ४५ )—अत्र दीर्घं पठतः सूत्रकारस्याऽयमभिप्रायः–'इ इ' इति प्रश्लेषाद् द्वितीय इकारो 'ये विभाषा' इत्यात्वबाधनाय । अन्यथा 'ये' इति विषयसप्तमी तेन यकारादौ प्रत्यये बुद्धिस्थ एव प्राप्तस्य अन्तरङ्गत्वेन क्यपा सह विधानात् 'खेयम्' इत्यत्र इकारस्य बहिरङ्गत्वेन आत्वं दुर्वारं स्यादिति ।

'इ चेति ह्रस्वः सुपठः' इति दीर्घस्य प्रत्याख्यानं कुर्वतो भाष्यकारस्यायमभिप्रायः—क्यप्सन्नियोगशिष्टत्वादित्वमन्तरङ्गम् , 'ये' इति परसप्तम्याश्रयणाद् आत्वं बहिरङ्गम् , तथा च—युक्त एव आत्वस्य इत्वेन बाधः । नच 'इ चे'ति ह्रस्वादेशाभ्युपगमे 'खेयम्' इत्यत्र 'षत्वतुकोरि'ति गुणस्याऽसिद्धत्वे 'ह्रस्वस्य पिति' इति तुगिति वाच्यम् , तुग्विधौ पदान्तपदाद्योरादेशोऽसिद्धो न त्वन्योऽपीति सिद्धान्तात् । अत एव 'वृक्षेच्छत्रम्' इत्यत्र विभाषया तुग्सिद्धिः ।

**आज्यम्** ( ई० ४० )—आङ्पूर्वकात् 'अञ्ज्' धातोः 'आङ्पूर्वकादञ्जेः संज्ञायामुपसंख्यानम्' इति वार्तिकेन बाहुलकात् करणे क्यपि 'अनिदिताम्–' इति नलोपे विभक्त्यादिकार्ये 'आज्यम्' इति ।

**राजसूयेति** ( ई० ४०, ४९, ५१ )—अनेन सूत्रेण राजसूय, सूर्य, मृषोद्य, रुच्य, कुप्य, कृष्टपच्य, अव्यथ्य, एते सप्त निपात्यन्ते । तत्र प्रथमनिपातने–राज्ञा सोतव्योऽभिषवद्वारा निष्पादयितव्यः, यद्वा लतात्मकः सोमो राजा, स सूयते = कण्डयते, अत्रेति विग्रहे 'षुञ् प्राणिप्रसवे' इत्यस्मात् 'धात्वादेः षः सः' इति सत्वे

'सुम्' इति । तस्मात् निपातनाद् अधिकरणे क्यपि दीर्घे च कृते विभक्त्यादिकार्ये 'राजसूयः, राजसूयम्' इति । ( अर्धर्चादिः ) ।

द्वितीयनिपातने-**सूर्यः** इति ( ई० ५७ )—अत्र सरत्याकाशे इति विग्रहे सृधातोः निपातनात् कर्तरि क्यपि उत्त्वे रपरत्वे 'हलि चे'ति दीर्घे विभक्त्यादिकार्ये 'सूर्यः' इति । केचित्तु 'षू प्रेरणे' अस्मात् निपातनात् क्यपि रुटि 'सूर्यः' इत्याहुः ।

तृतीयनिपातने—'मृषोद्यम्' इति । अत्र मृषोपपदाद्वदेः निपातनात् कर्मणि नित्यं क्यपि 'वचिस्वपी'ति सम्प्रसारणे पूर्वरूपे गुणे विभक्त्यादिकार्ये 'मृषोद्यम्' इति ( विशेष्यनिघ्नोऽयम् ) ।

चतुर्थनिपातने—'रुच्यः' इति । अत्र रुच्धातोः निपातनात् कर्तरि क्यपि विभक्त्यादिकार्ये 'रुच्यः' इति ।

पञ्चमनिपातने—'कुप्यम्' इति । अत्र 'गुप्' धातोः निपातनात् क्यपि धातोरादिवर्णस्य कुत्वे च कृते विभक्त्यादिकार्ये 'कुप्यम्' इति । ( सुवर्णरजतभिन्नं धनं कुप्यम् ) ।

षष्ठनिपातने—'कृष्टपच्याः' इति । अत्र कृष्टोपपदात् पच्धातोः कर्मकर्तरि निपातनात् क्यपि विभक्त्यादिकार्ये 'कृष्टपच्याः' इति । कृष्टप्रदेशे ये स्वयं पच्यन्ते ते 'कृष्टपच्याः' इति । ( बहुवचनान्तनिर्देशोऽयम् ) ।

सप्तमनिपातने—'अव्यथ्यः' इति । न व्यथते इति विग्रहे व्यथ्धातोः निपातनात् कर्तरि क्यपि नञ्समासे विभक्त्यादिकार्ये 'अव्यथ्यः' इति ।

**अवद्यं पापम्** ( ई० ४२ )—गर्हितत्वादवाच्यमित्यर्थः । अत्र वदेर्नञ्युपपदे 'वदः सुपि क्यप् च' इति यत्क्यपोः प्राप्तयोः 'अवद्य-पण्य-वर्या-गर्ह्य-पणितव्या-ऽनिरोधेषु' इत्यनेन निपातनात् यत्प्रत्यये कृदन्तत्वात्सौ तस्याऽमादेशे च 'अवद्यम्' इति । अयञ्च निपातनो गर्ह्यायामेव । तेन 'अनुद्यं गुरुनाम' इत्यत्र नामोपपदे 'वदः सुपी'ति क्यपि 'वचि स्वपी'ति सम्प्रसारणे 'अनुद्यम्' इति सिद्धं भवति । न च गुरुनाम्नोऽप्रार्ह्यत्वात् कथं वचनाऽनर्हत्वमिति वाच्यम् ? 'आत्मनाम गुरोर्नाम नामातिकृपणस्य च । श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयोः' इति स्मृतेः जागरूकत्वात् ।

**विपूयः** ( ई० ४२ )—'वि' उपसर्गात् भौवादिकात् 'पू' धातोः 'विपूय-विनीय-जित्या-मुञ्ज-कल्क-हलिषु' इति सूत्रेण मुञ्जशब्दे परे निपातनात् क्यपि कृदन्तत्वात् सौ रुत्वे विसर्गे 'विपूयो मुञ्जः' इति सिद्धम् ।

**धाय्या** ( ई० ४२ )—धीयतेऽनया समिदिति 'धाय्या' ऋक् । अत्र 'पाय्य-सान्नाय्य-' इति सूत्रेण करणे ण्यति सति आयादेशो निपात्यते ।

**याव्यम्** ( ई० ५६ )—युधातोः 'आसु-यु-वपि-रपि-त्रपि-चमश्च' इति सूत्रेण ण्यत्प्रत्यये कृते 'अचो ञ्णिति' इति वृद्धौ आवादेशे विभक्त्यादिकार्ये उक्तं रूपं सिद्धम् ।

**वाप्यम्** ( ई० ४४ )—वप्धातोः 'आसुयुवपिरपित्रपिचमश्च' इति सूत्रेण ण्यत्प्रत्यये 'अत उपधायाः' इति वृद्धौ विभक्त्यादिकार्ये 'वाप्यम्' इति ।

**चर्यम्** ( ई० ५३ )—अनुपसर्गात 'चर्' धातोः 'गदमदचरयमश्चानुपसर्गे' इति सूत्रेण यत्प्रत्यये विभक्त्यादिकार्ये 'चर्यम्' इति । उपसर्गात्तु ण्यदेव 'प्रचार्यम्' इत्यादि ।

**भुजः** ( ई० ५४ )—भुज्यते अनेनेति भुजः = पाणिः । अत्र 'हलश्चे'ति घञि कृते 'भुजन्युब्जौ पाण्युपतापयोः' इति कुत्वाऽभावो निपात्यते ।

**समाजः** ( ई० ५७ )—'अज गतिक्षेपणयोः' इति धातोर्घञि 'चजो'रिति कुत्वे प्राप्ते 'अजिव्रज्योश्च' इति निषेधे विभक्तिकार्ये 'समाजः' इति ।

**कुण्डपाय्यः** ( ई० ५३ )—कुण्डेन पीयते अस्मिन् सोमः इति कुण्डपाय्यः, सत्रविशेषात्मकः क्रतुः । अत्र कुण्डेनेति तृतीयान्ते उपपदे 'क्रतौ कुण्डपाय्य-संचाय्यौ' इति सूत्रेण पिबतेरधिकरणे यत्प्रत्ययो युगागमश्च निपात्यते । यत्त्वत्र निपातनात् ण्यति सति 'आतो युक्' इति युगित्युक्तं तन्मन्दम् , तित्स्वरापत्तेः । स्पष्टञ्चेदं भाष्ये ।

**गम्यम्** ( ई० ५३, ५७ )—अत्र 'प्रैषातिसर्गकृत्याश्च' इत्यनेन 'पोरदुपधात्' इति प्राप्तं ण्यतं प्रबाध्य गम्धातोः क्यबिति विशेषः ।

**'अचो यत्' इति सूत्रेऽज्ग्रहणफलं**—अयम्भावः, हलन्तेभ्यो ण्यत्प्रत्ययस्य विशिष्यं विधानं भवतीति विशेषविहितत्वेन ण्यत्प्रत्ययो यत्प्रत्ययस्यापवादो भविष्यतीति, अर्थादेवाजन्तेभ्यो धातुभ्योऽच् प्रत्ययः स्यादितिसूत्रेऽज्ग्रहणं न

कर्तव्यम्। एवञ्चाऽग्रहणे प्रत्याख्याते यद्ग्रहणमपि 'तव्यत्तव्यानीयरः' इति सूत्रे एव कर्तव्यम्। नचाज्ग्रहणाभावे 'वाऽसरूपोऽस्त्रियाम्' इति परिभाषया ण्यत्प्रत्यया-भावपक्षे हलन्तेभ्योऽपि धातुभ्यो यत्प्रत्ययप्रसङ्गः स्यादिति वाच्यम्, 'नानुबन्ध-कृतमसारूप्यम्' इति परिभाषया ण्यद्यतोः सरूपत्वात्। द्वयोः प्रत्यययोः समान-रूपत्वेन 'वाऽसरूप' इति सूत्राप्रवृत्तिरिति दिक्।

. इ चेति ह्रस्वः सुपठः (ई० ५४)—अयमाशयः, भाष्यकृता एकमा-त्रालाघवेन दीर्घोच्चारणं प्रत्याख्यातम्। न च ह्रस्वपाठे 'षत्वतुकोरसिद्धः' इति सूत्रेणैकादेशस्यासिद्धत्वात्तुकः प्राप्तिरिति वाच्यम्, पदान्तपदाद्योः स्थाने य एकादेशस्तस्यैवासिद्धत्वात्। अत्र तु एकस्मिन्नेव पदे आदेशः। एवञ्च दीर्घो-च्चारणम् इह इति इकारद्वयप्रश्लेषेण परत्वात्प्राप्तस्य 'ये विभाषा' इत्यात्वस्य बाधनार्थमिति भाष्यविरुद्धकल्पना व्यर्था। यतः क्यपा सह विधीयमानस्येत्वस्या-न्तरङ्गत्वेन यकारादौ प्रत्यये परे विधीयमानस्याऽऽत्वस्य बहिरङ्गत्वात्। परत्व-स्यायुक्तत्वात्।

कथं भार्यावधूः—ननु 'भृञोऽसंज्ञायाम्' इति सूत्रे भार्याः क्षत्रिया इति पुंल्लिङ्गे संज्ञायां क्यपोऽभावं कुर्वत्सच्चरितार्थमिति स्त्रीलिङ्गे संज्ञायां न प्रवर्तिष्यते इति भार्यावधूरित्यत्र 'संज्ञायां समजनिषद्' इत्यादिना क्यपा भाव्यमिति चेन्न, 'एकानुबन्धकग्रहणे न द्व्यनुबन्धकस्य' इति परिभाषया 'डुभृञ् धारणपोषणयोः' इत्यस्मात् क्र्यादिपठितदीर्घान्ताद् 'भृ भरणे' इत्यस्माद् वा ण्यत्प्रत्ययस्य सिद्धत्वात्। 'संज्ञायां समजनिषद्' इति सूत्रे ह्रस्वान्तभृञ्धातोः पाठेन दीर्घान्तभृधातुविषये तत्सू-त्राप्रवृत्तिः। डुभृञ्धातौ अनुबन्धद्वयं वर्तते, भृञ्धातौ चैकानुबन्धो वर्तते, इति डुभृञ् धातुविषयेऽपि तत्सूत्राप्रवृत्तिः।

न क्वादेः—अयमाशयः, वार्तिककारः 'चजोः' इति सूत्रे निष्ठायां ये धातवोऽ-निटो भवन्ति तेषामेव कुत्वं भवतीति व्याख्याय 'न क्वादेः' इति सूत्रं प्रत्याचख्यौ। ततश्च गर्जितर्जिप्रभृतीनां निष्ठाविषये सेट्त्वात् कुत्वन्न भवति मृचुग्लुचुप्रभृतीनां तु उदित्त्वेन 'उदितो वा' इति सूत्रेण क्त्वायां वेट्त्वात् 'यस्य विभाषा' इति सूत्रेण निष्ठाविषये इडागमो न भवतीति 'चजोः' इत्यनेन कुत्वं भवति।

इत्थञ्च 'न क्वादेः' इति सूत्रसत्तायां मृचुप्रभृतीनां धातूनां कुत्वन्न भवति, सूत्रा-भावे तु कुत्वं प्राप्नोतीति द्वयोर्मते प्रयोगेषु प्राप्तमपि वैलक्षण्यं 'यथोत्तरं मुनीनां

प्रामाण्यम्' इतिवचनेन स्वीकर्तव्यम् । एवञ्च वार्तिकमतमेव ज्याय इति दिक् ।

**लोटा बाधो माभूत्**—अयमाशयः, 'वाऽसरूपोऽस्त्रियाम्' इति परिभाषया-लोट् कृत्यसंज्ञकप्रत्ययश्च पर्यायेण भविष्यतीति 'प्रैषादि'सूत्रे कृत्यग्रहणं स्त्र्यधिकारादूर्ध्वं 'वाऽसरूपोऽस्त्रियाम्' इति सूत्रं क्वचिन्न प्रवर्तते इति ज्ञापयति । एवञ्च क्तल्युट्तुमुन्खलर्थेषु मिथो बाध्यबाधकभावो न भवतीति वचनं सिद्धम् । तेन हसितं हसनमिति भावे विहितयोः क्तल्युट्प्रत्यययोर्विषये 'भावे' इति सूत्रेण घञ्प्रत्ययो न भवति । अथ च 'ईषत्पानः' इति खलर्थे खल्प्रत्ययश्च न भवतीति फलम्बोध्यम् । लाघवात् 'शकि लिङ् च' इतिसूत्रे चकारग्रहणेनैव पूर्वोक्तज्ञापनसम्भवे प्रैषादिसूत्रे कृत्यग्रहणन्न कार्यमिति दिक् ।

इति कृदन्ते कृत्यप्रकरणम् ।

# अथ पूर्वकृदन्तप्रकरणम्

**कर्ता**—करोतीति-कर्ता । कृधातोः 'ण्वुल्तृचौ' इति तृचि गुणे रपरत्वे 'कर्तृ' इति, तस्मात् कृदन्तत्वात् प्रातिपदिकसंज्ञायां सौ 'ऋदुशनस-' इत्यनङि 'अप्तृन्-' इति दीर्घे सुलोपे नलोपे 'कर्ता' इति । ( ण्वुलि अकादेशे वृद्धौ 'कारकः' इति )

**नन्दनः** ( ई० ३० )—नन्दयतीति-नन्दनः । 'टुनदि समृद्धौ' इत्यस्माद्धातोः इदित्वान्नुमि णिचि 'नन्दि' इति, तस्मात् 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इति ल्युप्रत्यये अनुबन्धलोपे 'युवोरनाकौ' इति योरनादेशे णिलोपे विभक्तिकार्ये 'नन्दनः' इति ।

**जनार्दनः** ( ई० ३१ )—जनमर्दयतीति विग्रहे 'अर्द हिंसायाम्' इति धातोः णिचि 'नन्दिग्रहि-' इति ल्युप्रत्यये 'युवोरनाकौ' इति योरनादेशे णिलोपे 'कर्तृकर्मणोः कृति' इति जनमिति कर्मणि षष्ठीविभक्तौ षष्ठीसमासे सुब्लुकि 'एकदेशविकृतमनन्यवत्' इति प्रातिपदिकत्वात् सौ रुत्वे विसर्गे 'जनार्दनः' इति सिद्धम् ।

**लवणः** ( ई० ५८ ) लुनातीति-लवणः । 'लूञ् छेदने' इति धातोः 'नन्दिग्रहि-' इति ल्युप्रत्यये 'युवोरनाकौ' इति योरनादेशे गुणे अवादेशे निपातनात् णत्वे विभक्तिकार्ये तत्सिद्धिः ।

प्रज्ञः ( ई० ५५ )—प्रकृषण जानातीति–प्रज्ञः। प्रोपसर्गकज्ञाधातोः 'आतश्चोपसर्गे' इति कप्रत्यये 'आतो लोप इटि च' इत्यालोपे विभक्तिकार्ये तत्सिद्धिः।

बुधः ( ई० ५४ )—बुध्धातोः 'इगुपधज्ञाप्रीकिरः कः' इति कप्रत्यये कित्वाद् गुणनिषेधे विभक्तिकार्ये बुधः इति।

उदेजयः ( ई० ३२ )—उत्पूर्वात् ण्यन्तात् एज्धातोः 'अनुपसर्गाल्लिम्प–' इति सूत्रेण शप्रत्यये शपि गुणेऽयादेशे पररूपे विभक्तिकार्ये 'उदेजयः' इति। ( सूत्रे उदेजीति उपसर्गविशिष्टस्यैव पाठात् 'अनुपसर्गादिति नानुपपन्नम् )।

गोविन्दः, अरविन्दम् ( ई० ३०, ३८ )—गाः विन्दतीति गोविन्दः, एवम्–अराणि ( दलविशेषाणि ) विन्दतीति अरविन्दम्। उभयत्र 'गवादिषु विन्देः संज्ञायाम्' इति शप्रत्ययो भवतीति विशेषः।

गृहम् ( ई० ३५ )—गृह्णाति धान्यादिकमिति–गृहम्। 'ग्रह् उपादाने' इति धातो 'गेहे कः' इति कप्रत्यये 'ग्रहिज्ये'ति सम्प्रसारणे पूर्वरूपे कित्वाद्गुणनिषेधे स्वादिकार्ये 'गृहम्' इति।

कुम्भकारः ( ई० ५८ )—कुम्भं करोतीति विग्रहे 'तत्रोपपदं सप्तमीस्थम्' इति कुम्भशब्दस्योपपदसंज्ञायां सत्यां कुम्भोपपदात् कृधातोः 'कर्मण्यण्' इत्यणि 'अचो ञ्णिति' इति वृद्धौ रपरे 'कर्तृकर्मणोः कृतिः' इति कर्मणि षष्ठ्यां 'गतिकारके'ति परिभाषया सुबुत्पत्तेः प्रावेग 'कुम्भ अस् कार' इत्यलौकिकविग्रहे 'उपपदमतिङ्' इति समासे सुब्लुकि एकदेशविकृतस्यानन्यत्वात् प्रातिपदिकत्वेन सौ सस्य रुत्वे विसर्गे 'कुम्भकारः' इति।

गोदः ( ई० ३२ )—गां ददातीति गोदः। 'कर्मण्यण्' इत्यणं प्रबाध्य 'आतोऽनुपसर्गे कः' इति दाधातोः कप्रत्यये सुब्लुकि 'आतो लोपः–' इति आलोपे विभक्त्यादिकार्ये 'गोदः' इति।

द्विपः ( ई० ५४ )—द्वाभ्यां पिबतीति द्विपः। 'सुपि स्थः' इत्यनेन 'सुपि' इति योगविभागात् सुप्युपपदे आदन्तात् पाधातोः कप्रत्यये सुब्लुकि 'आतो लोपः' इत्यालोपे विभक्तिकार्ये 'द्विपः' इति।

तुन्दपरिमृजः ( ई० ४४ )—तुन्दं परिमृजतीति तुन्दपरिमृजोऽलसः। तुन्दशोकयोः कर्मणोरुपपदयोराभ्यां कः स्यात्, इत्यर्थक–'तुन्दशोकयोः परिमृजा-

पनुदोः' इति सूत्रस्थ 'आलस्यसुखाहरणयोरिति वक्तव्यम्' इति वार्तिकेन कप्रत्यये सुब्लुकि विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**पुष्पाहरः** ( ई० ३० )—पुष्पाण्याहरति तच्छीलः पुष्पाहरः । 'आङि ताच्छील्ये' इत्याङः पूर्वाद्धरतेरचि सुब्लुकि गुणे रपरत्वे विभक्तिकार्ये तत्सिद्धम् ।

**स्तम्बेरमः** ( ई० ३२ )—स्तम्बे रमतीति स्तम्बेरमः–हस्ती । 'स्तम्बकर्णयो-रमिजपोः' इति सूत्रस्थ 'हस्तिसूचकयोरिति वाच्यम्' इति वार्तिकेन अचि 'हल-दन्तात् सप्तम्याः संज्ञायाम्' इति सप्तम्याः अलुकि विभक्तिकार्ये तत्सिद्धिः ।

**खशयः** ( ई० ३४ )—खे शेते खशयः । 'अधिकरणे शेते' इति अधिकरणे उपपदे शीङ्धातोरचि सुब्लुकि गुणेऽयादेशे विभक्त्यादिकार्ये 'खशयः' इति ।

**आदायचरः** ( ई० ४४ )—लब्धं द्रव्यं गृहीत्वा चरतीत्यर्थः । अत्र 'भिक्षा-सेनादायेषु च' इति टप्रत्यये 'कर्तृकर्मणोः कृतिः' इति कर्मषष्ठ्याम् 'उपपदमतिङ्' इति समासे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**यशस्करी** ( ई० ३१ )—विद्यायाः यशोहेतुत्वात् यशः करोतीति विग्रहे कृधातोः 'कृञो हेतुताच्छील्यानुलोम्येषु' इति टप्रत्यये गुणे रपरे 'कर्तृकर्मणोः कृतिः' इति कर्मषष्ठ्यां 'गतिकारके'ति सुबुत्पत्तेः प्रागेव 'यशस् अस् कर' इति स्थिते 'उपपदमतिङ्' इति समासे सुब्लुकि सस्य रुत्वे विसर्गे 'यशः कर' इति स्थिते 'अतः कृकमि–' इति विसर्गस्य सत्वे स्त्रीत्वविवक्षायां 'टिड्ढाणञ्–' इति टित्वाद् ङीपि भत्वाद् 'यस्येति च' इत्यलोपे ङ्यन्तत्वात् सौ हल्ङ्यादिना सुलोपे उक्तं रूपं सिद्धम् ।

**जनमेजयः** ( ई० ३६ )—जनमेजयतीति विग्रहे ण्यन्तादेज्धातोः 'एजेः खश्' इति खशि अनुबन्धलोपे शित्वात् सार्वधातुकसंज्ञायां शपि गुणे अयादेशे पूर्वरूपे कर्मणि षष्ठ्यां 'जन अस् एजय' इत्यलौकिकविग्रहे सुबुत्पत्तेः प्रागेव उपपद-समासे सुब्लुकि 'अरुर्द्विषदजन्तस्य मुम्' इति मुमि विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**प्रियंवदः** ( ई० ५४ )—प्रियं वदतीति विग्रहे वद्धातोः, 'प्रियवशे वदः खच्' इति खचि 'कर्तृकर्मणोः कृतिः' इति कर्मषष्ठ्यां 'गतिकारके'ति सुबुत्पत्तेः प्रागेव उपपदसमासे सुब्लुकि 'अरुर्द्विषदजन्तस्य मुम्' इति मुमि मस्यानुस्वारे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

वचनकरः ( ई० ५४ )—वचनं करोति तच्छीलः-वचनकरः । 'कृञो हेतुताच्छील्यानुलोम्येषु' इति सूत्रेण कर्मोपपदात् कृधातोः टप्रत्यये सुब्लुकि गुणे रपरत्वे विभक्तिकार्ये 'वचनकरः' इति ।

विभाकरः ( ई० ३४ )—विभां करोतीति विभाकरः । 'दिवाविभा—' इत्यादिसूत्रेण 'विभाम्' इति कर्मण्युपपदात् कृधातोः टप्रत्यये सुब्लुकि गुणे रपरत्वे विभक्तिकार्ये 'विभाकरः' इति ।

शुनिन्धयः ( ई० ३० )—शुनीं धयतीति विग्रहे 'वातशुनीतिलशर्द्धेष्वजधेट्तुदजहातिभ्यः खश्' इति वार्तिकेन खशि सुब्लुकि 'खित्यनव्ययस्य' इति ह्रस्वे 'अरुर्द्विषदजन्तस्य मुम्' इति मुमि मस्यानुस्वारे परसवर्णे एकारस्याऽयादेशे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

अभ्रंलिहः ( ई० ३३ )—अभ्रं लेढीति विग्रहे 'वहाभ्रेः लिहः' इति खशि सुब्लुकि मुमि अनुस्वारे विभक्तिकार्ये 'अभ्रंलिहः' ( वायुः ) इति ।

विधुन्तुदः ( ई० ३२ )—विधुं तुदतीति विग्रहे 'विध्वरुषोस्तुदः' इति कर्मण्युपपदे तुदेः खशि सुब्लुकि 'अरुर्द्विषत्—' इति मुमि अनुस्वारे परसवर्णे विभक्तिकार्ये 'विधुन्तुदः' इति ।

परन्तपः ( ई० ५४ )—परं तापयतीति विग्रहे 'द्विषत्परयोस्तापे' इति खचि सुब्लुकि 'खचि ह्रस्वः' इति ह्रस्वे 'णेरनिटि' इति णिलोपे 'अरुर्द्विषत्—' इति मुमि अनुस्वारे परसवर्णे संयोगान्तलोपे विभक्तिकार्ये तत्सिद्धिः ।

वाचंयमः—वाचं यच्छतीति विग्रहे 'वाचि यमो व्रते' इति खचि सुब्लुकि 'वाचंयमपुरन्दरौ च' इत्यनेन 'वाच् यम् अ' इति स्थिते वाचः इत्यस्यामन्तत्वे विभक्तिकार्ये 'वाचंयमः' इति । वाचंयमो मौनव्रती ।

पुरन्दरः ( ई० ३१ )—पुरं दारयतीति विग्रहे 'पूःसर्वयोर्दारिसहोः' इति खचि सुब्लुकि 'खचि ह्रस्वः' इति ह्रस्वे मुमि अनुस्वारे परसवर्णे 'णेरनिटि' इति णिलोपे विभक्तिकार्ये 'पुरन्दरः' इति ।

भयङ्करः ( ई० ५५ )—भयं करोतीति विग्रहे 'मेघर्तिभयेषु कृञः' इति खचि सुब्लुकि 'अरुर्द्विषत्–' इति गुणे रपरत्वे अनुस्वारे परसवर्णे स्वादिकार्ये तत्सिद्धिः । अत्र सूत्रे भयशब्देन तदन्तविधिर्भवति, तेन 'अभयङ्करः' इत्यपि भवति ।

**विश्वंभरः** ( ई० ५४ )—विश्वं बिभर्तीति विग्रहे 'संज्ञायां भृतॄवृजिधारिसहितपिदमः' इति सूत्रेण कर्मण्युपपदे भृधातोः खचि सुब्लुकि 'अरुर्द्विषत्—' इति मुमि गुणे रपरत्वे अनुस्वारे परसवर्णे स्वादिकार्ये तत्सिद्धिः ।

**पन्नगः** ( ई० ३२ )—पन्नं = पतितं गच्छतीति विग्रहे 'सर्वत्र पन्नयोरिति वाच्यम्' इति वार्तिकेन डप्रत्यये डित्वात् टेर्लोपे सुब्लुकि विभक्तिकार्ये 'पन्नगः' इति ।

**क्लेशापहः** ( ई० ३६ )—क्लेशानपहन्तीत्यर्थे 'अपे क्लेशतमसोः' इति डप्रत्यये डित्वात् टेर्लोपे सुब्लुकि सवर्णदीर्घे विभक्तिकार्ये 'क्लेशापहः—पुत्रः' इति ।

**जायाघ्नः** ( ई० ३४ )—जायां हन्तीति विग्रहे 'लक्षणे जायापत्योष्टक्' इति टकि सुब्लुकि 'जाया हन् अ' इति स्थिते 'गमहन—' इत्युपधालोपे 'हो हन्तेः' इति कुत्वे विभक्तिकार्ये 'जायाघ्नः-ना' इति ।

**पतीघ्नी** ( ई० ५८ )—पतिं हन्तीति विग्रहे 'लक्षणे जायापत्योष्टक्' इति टकि सुब्लुकि 'गमहन—' इत्युपधालोपे घत्वे स्त्रीत्वविवक्षायां 'टिड्ढाणञ्—' इति ङीपि विभक्तिकार्ये 'पतिघ्नी-स्त्री' इति ।

**शत्रुघ्नः** ( ई० ३५ )—शत्रुं हन्तीति विग्रहे 'कप्रकरणे मूलविभुजादिभ्य उपसंख्यानम्' इति कप्रत्यये 'गमहन-' इत्युपधालोपे 'हो हन्तेः—' इति कुत्वे विभक्तिकार्ये 'शत्रुघ्नः' इति ।

**अग्रणीः, ग्रामणीः** ( ई० ३६ )—अग्रं नयतीति अग्रणीः । ग्रामं नयतीति ग्रामणीः । उभयत्र कर्मोपपदात् नयतेः 'सत्सूद्विषत्-' इति सूत्रेण क्विपि सर्वापहारे सुब्लुकि 'अग्रग्रामाभ्यां नयतेर्णो वाच्यः' इति णत्वे विभक्तिकार्ये 'अग्रणीः, ग्रामणीः' इति ।

**सुशर्मा** ( ई० ३१ )—सुष्ठु शृणोतीति विग्रहे सुपूर्वकात् शॄधातोः 'अन्येभ्योऽपि दृश्यन्ते' इति मनिन्प्रत्यये अनुबन्धलोपे गुणे रपरत्वे 'नेड्वशि कृति' इतीड्निषेधे कृदन्तत्वात् सौ दीर्घे सुलोपे नलोपे 'सुशर्मा' इति निष्पन्नम् ।

**अवावा** ( ई० ३९ )—ओण्धातोः 'अन्येभ्योऽपि दृश्यन्ते' इति वनिपि 'विड्वनोः-' इत्यात्वे अवादेशे 'अवावन्' इति तस्मात् सौ दीर्घे सुलोपे नलोपे 'अवावा' इति ।

**उखास्रत्** ( ई० ३४ )—उखायाः ( पात्रात् ) स्रंसते इति विग्रहे 'क्विप्

च' इति क्विपि क्विपः सर्वापहारे 'अनिदिताम्' इति नलोपे प्रातिपदिकत्वात् सौ पञ्चमीसमासे सुब्लुकि एकदेशविकृतस्याऽनन्यत्वात् सौ 'वसुस्रंसु' इति दत्वे सुलोपे चर्त्वे तत्सिद्धिः ।

**ऊष्णभोजी**—उष्णं भुङ्क्ते तच्छीलः इति विग्रहे उष्णोपपदाद् भुज्धातोः 'सुप्यजातौ णिनिस्ताच्छील्ये' इति णिनिप्रत्यये लघूपधगुणे कर्मणि षष्ठ्यामुपपदसमासे कृदन्तत्वात् सौ 'सौ च' इति दीर्घे सुलोपे तत्सिद्धिः ।

**पण्डितम्मन्यः** ( ई० ३१ )—पण्डितमात्मानं मन्यते इति विग्रहे मन्धातोः 'आत्ममाने 'खश्च' इति खशि शित्वात् सार्वधातुकसंज्ञायां शपि प्राप्ते तं प्रबाध्य 'दिवादिभ्यः श्यन्' इति श्यनि पररूपे कर्मषष्ठ्यामुपपदसमासे 'अरुर्द्विषदजन्तस्य मुम्' इति मुमि विभक्तिकार्ये उक्तं रूपं जातम् ।

**सरसिजम्**—सरसि जातमिति विग्रहे सप्तम्यन्तसरश्शब्दोपपदाज्जन्धातोः 'सप्तम्यां जनेर्डः' इति डप्रत्यये डित्त्वाट्टिलोपे उपपदसमासत्वात् सप्तम्याः लुकि प्राप्ते 'तत्पुरुषे कृति बहुलम्' इति तन्निषेधे कृदन्तत्वात् सौ सोरमि पूर्वरूपे 'सरसिजम्' इति । लुकि तु रुत्वे उत्वे गुणे 'सरोजम्' इति भवति ।

**प्रजा** ( ई० ३० )—'उपसर्गे च संज्ञायाम्' इति प्रोपसर्गकात् जन्धातोः डप्रत्यये टिलोपे अदन्तत्वाट्टापि विभक्तिकार्ये 'प्रजा' इति । 'प्रजा स्यात् सन्ततौ जने' इत्यमरः ।

**शीर्णः**—शृधातोः कर्मणि 'निष्ठा' इति क्तप्रत्यये 'ॠत इद्धातोः' इति इत्वे रपरत्वे 'हलि च' इति दीर्घे 'रदाभ्याम्' इति नत्वे णत्वे विभक्तिकार्ये तत्सिद्धिः ।

**भिन्नः** ( ई० ३४ )—अभेदि इति भिन्नः । भिद्धातोः कर्मणि 'निष्ठा' इति क्तप्रत्यये कित्वाद्गुणाभावे 'रदाभ्यां निष्ठातो नः पूर्वस्य च दः' इति निष्ठातकारस्य भिदो दकारस्य च नत्वे विभक्तिकार्ये तत्सिद्धिः । एवं छिद्धातोः 'छिन्नः' इति ।

**भुग्नः** ( ई० ५८ )—'भुज्' धातोः भावे 'निष्ठा' इति क्तप्रत्यये नत्वस्याऽसिद्धत्वात् पूर्वं 'चोः कुः' इति जस्य कुत्वे ततः 'ओदितश्च' इति निष्ठातस्य नत्वे विभक्तिकार्ये तत्सिद्धिः ।

**शूनः** ( ई० ३३ )—'टु ओश्वि गतिवृद्धयोः' इति धातोः 'निष्ठा' इति क्तप्रत्यये 'वचिस्वपि यजादीनां किति' इति सम्प्रसारणे पूर्वरूपे 'श्वीदितो निष्ठायाम्'

इतीण्निषेधे 'हलः' इति दीर्घे 'ओदितश्च' इति निष्ठातकारस्य नत्वे श्चुत्वे छत्वे विभक्तिकार्ये तत्सिद्धिः।

**शुष्कः** (ई० ३८)—अशुषत् इति शुष्कः। 'शुष् शोषणे' इति धातोः कर्तरि क्ते 'शुषः कः' इति निष्ठातस्य कत्वे विभक्तिकार्ये तत्सिद्धिः।

**घ्राणः** (ई० ३६, ३७)—घ्राधातोः निष्ठायां क्तप्रत्यये 'संयोगादेरातो धातोर्यण्वतः' इति निष्ठातस्य नत्वे णत्वे विभक्तिकार्ये 'घ्राणः' इति।

**ग्लानः**—ग्लै धातोः 'आदेच' इत्यात्वे निष्ठातस्य नत्वे णत्वे स्वादिकार्ये 'ग्लानः' इति।

**जीनः** (ई० ३२)—ज्याधातोः क्तप्रत्यये 'ज्या त' इति स्थिते 'संयोगादेः' इति प्राप्तनत्वस्याऽसिद्धत्वात् 'ग्रहिज्ये'ति सम्प्रसारणे पूर्वरूपे आतः परत्वाऽभावात् 'संयोगादेः' इत्यस्याप्राप्त्या 'ल्वादिभ्यः' इति निष्ठातस्य नत्वे 'हलः' इति दीर्घे विभक्तिकार्ये 'जीनः' इति।

**प्रतिशीनः** (ई० ५५)—'प्रति' उपसर्गात् श्यैङ् धातोः 'आदेच उपदेशे-' इत्यात्वे क्तप्रत्यये 'प्रतेश्च' इति सम्प्रसारणे 'श्योऽस्पर्शे' इति निष्ठातस्य नत्वे 'हलः' इति दीर्घे विभक्तिकार्ये 'प्रतिशीनः' इति।

**नुन्नः** (ई० ३८, ५४)—नुद्धातोः 'नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्' इति विभाषया निष्ठातस्य नत्वे दस्यानुस्वारे परसवर्णे विभक्तिकार्ये 'नुन्नः' इति। पक्षे 'नुत्तः' इति।

**मत्तः** (ई० ३५)—मदीधातोः क्तप्रत्यये 'श्वीदितो निष्ठायाम्' इतीडनिषेधे 'न ध्याख्यापॄमूर्च्छिमदाम्' इति तस्य नत्वनिषेधे चर्त्वे विभक्तिकार्ये 'मत्तः' इति।

**मूर्त्तः** (३०) मूर्च्छाधातोः क्तप्रत्यये 'आदितश्च' इतीण्निषेधे 'राल्लोपः' इति छलोपे 'हलि च' इति दीर्घे 'रदाभ्याम्-' इति तस्य नत्वे प्राप्ते 'न ध्याख्यापॄमूर्च्छिमदाम्' इति निषेधे विभक्तिकार्ये 'मूर्त्तः' इति।

**स्फीतः** (ई० ३२)—'स्फायी वृद्धौ' इति धातोः क्तप्रत्यये 'स्फायः स्फी निष्ठायाम्' इति 'स्फी' आदेशे विभक्तिकार्ये 'स्फीतः' इति।

**अञ्चितः** (ई० ३५)—पूजार्थक-अञ्चधातोः क्तप्रत्यये 'अञ्चेः पूजायाम्' इति इटि विभक्तिकार्ये 'अञ्चितः' इति। (गतौ तु 'अक्तः' इति।

**पवितः, पूतः** ( ई० ५६ )—पूङ्धातोः क्तप्रत्यये 'पूङश्च' इति वेटि इट्पक्षे 'पूङः क्त्वा च' इति कित्वनिषेधे गुणेऽवादेशे विभक्तिकार्ये 'पवितः' इति इडभावे 'पूतः' इति ।

**अभिहितम्** ( ई० ४९ )—अभीत्युपसर्गकात् धाधातोः क्तप्रत्यये 'दधातेर्हिः' इति 'हि' आदेशे विभक्तिकार्ये 'हितम्' इति ।

**मुकुन्द**-( ई० ५५ )—

मुकुन्दस्यासितमिदमिदं यातं रमापतेः ।
भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः ॥

'क्तोऽधिकरणे च' 'ध्रौव्यगतिप्रत्यवसानार्थेभ्यः' ध्रौव्यार्थेभ्यः, गत्यर्थेभ्यः, प्रत्यवसानार्थेभ्यश्च धातुभ्यः अधिकरणेऽर्थे चकारात् यथाप्राप्त ( भावादि ) अर्थेऽपि क्तः स्यादित्यर्थः । अत्र ध्रौव्यस्योदाहरणमुदाहरति-'मुकुन्दस्यासितमिदमिति' । आस्यतेऽस्मिन्निति आसनम् । गत्यर्थमुदाहरति-'इदं यातं रमापतेः' यायते=गम्यते, अस्मिन्निति यातं-मार्गः । प्रत्यवसानार्थमुदाहरति-'भुक्तमेतदनन्तस्य' भुज्यतेऽस्मिन्निति भुक्तं भोजनस्थानमित्यर्थः । 'अधिकरणवाचिनश्च' इति त्रिष्वपि कर्तरि षष्ठी ।

**सुत्वा** ( ई० ५३ )—सुधातोः भूतार्थे 'सुयजोर्ङ्वनिप्' इति ङ्वनिपि 'ह्रस्वस्य पिति-' इति तुकि सौ 'सर्वनामस्थाने-' इति दीर्घे हल्ङ्यादिलोपे 'न लोपः-' इति नलोपे 'सुत्वा' इति ।

**चक्राणः** ( ई० ३० )—कृधातोर्लिटि 'लिटः कानज्वा' इति लिटः कानचि द्वित्वेऽभ्यासत्वे उरदत्वे रपरत्वे हलादिशेषे चुत्वे यणि 'रषाभ्याम्-' इति णत्वे विभक्तिकार्ये 'चक्राणः' इति ।

**जक्षिवान्** ( ई० ३४ )—अद्धातोर्लिटि 'क्वसुश्च' इति लिटः क्वसुप्रत्यये 'लिट्यन्यतरस्याम्' इति अदेर्घस्लादेशे द्वित्वादिकार्ये 'ज घस् वस्' इति स्थिते 'गमहनजनखनघसां लोपः क्ङित्यनङि' इत्युपधालोपे 'वस्वेकाजाद्घसाम्' इति इटि घस्य चर्त्वे सस्य षत्वे सौ 'उगिदचाम्-' इति नुमि 'सान्तमहतः-' इति दीर्घे हल्ङ्यादिलोपे संयोगान्तलोपे 'जक्षिवान्' इति ।

**पचन्तं, पचमानं वा चैत्रं पश्य**—पच्धातोर्लटि 'लटः शतृशानचावि'ति लटो लः स्थाने शतृप्रत्यये शित्वात् सार्वधातुकसंज्ञायां शपि पररूपे कृदन्तत्वात्प्रा-

तिपदिकसंज्ञायां द्वितीयैकवचने अमि उगित्वान्नुमि नस्यानुस्वारे परसवर्णे 'पचन्तम्' इति । शानच्पक्षे तु 'आने मुक्' इति मुकि 'पचमानम्' इति ।

सन् द्विजः—'वर्तमाने लट्' इत्यतो लडित्यनुवर्तमाने 'लटः शतृशानचावि'ति सूत्रे पुनर्लट्ग्रहणात् प्रथमासमानाधिकरणेऽपि क्वचित् शतृशानचोर्विधानात् अस्-धातोर्लटः शतृप्रत्यये शपो लुकि 'श्नसोरल्लोपः' इत्यल्लोपे सौ नुमि सुलोपे संयोगान्तलोपे 'सन्' इति ।

आसीनः ( ई० ३८ )—आङ्पूर्वादस्धातोर्लटि शानचि शपि 'अदिप्रभृतिभ्यः–' इति शपो लुकि सवर्णदीर्घे 'आस् आन' इति जाते 'ईदासः' इति ईत्त्वे विभक्तिकार्ये 'आसीनः' इति ।

विद्वान् ( ई० ५३ )—विद्धातोः लटः शतरि 'विदेः शतुर्वसुः' इति विभाषया शतेः वसुरादेशे शपो लुकि 'विद्वस्' इति तस्मात् सौ उगित्वान्नुमि 'सान्तमहतः–' इति दीर्घे हल्ङ्यादिलोपे संयोगान्तलोपे 'विद्वान्' इति । वस्वादेशाऽभावपक्षे लटः शतरि शपि शपो लुकि 'विदत्' इति । तस्मात् सौ नुमि सलोपे संयोगान्तलोपे 'विदन्' इति भवति ।

स्पृहयालुः' शयालुः ( ई० ५६ )—स्पृहिधातोः 'स्पृहिगृहिपति–' इति आलुचि गुणेऽयादेशे विभक्तिकार्ये 'स्पृहयालुः' इति । एवं शीङ्धातोः 'शीङो वाच्यः' इति वार्तिकेन आलुचि गुणेऽयादेशे विभक्तिकार्ये 'शयालुः' इति ।

जिष्णुः ( ई० ३५ )—जेतुं शीलः जिष्णुः । जिधातोः 'ग्लाजिस्थश्च ग्स्नुः' इति ग्स्नुप्रत्यये सस्य षत्वे ष्टुत्वे विभक्तिकार्ये 'जिष्णुः' इति ।

त्रस्नुः ( ई० ३५ )—त्रसितुं शीलः त्रस्नुः । 'त्रसिगृधिधृषिक्षिपेः क्नुः' इति त्रस्धातोः क्नुप्रत्यये विभक्तिकार्ये तत्सिद्धिः ।

पातुकः ( ई० ३२ ) पतितुं शीलः पातुकः । पत्धातोः 'लषपतपद–' इति सूत्रेण उकञ्प्रत्यये 'अत उपधायाः' इति वृद्धौ विभक्तिकार्ये 'पातुकः' इति ।

जल्पाकः ( ई० ३८ )—जल्पितुं शीलः जल्पाकः । जल्प्धातोः 'जल्पभिक्षकुट्टलुण्टवृङः षाकन्' इति षाकनि 'षप्रत्ययस्ये'ति षस्येत्संज्ञायां लोपे च कृते सवर्णदीर्घे स्वादिकार्ये 'जल्पाकः' इति ।

चिकीर्षुः ( ई० ३३ )—कर्तुमिच्छुः चिकीर्षुः । सन्नन्तात् चिकीर्ष्धातोः

'सनाशंसभिक्ष उः' इत्युप्रत्यये तस्यार्धधातुकत्वात् अतो लोपे स्वादिकार्ये तत्सिद्धिः।

**स्थावरः** ( ई० ३२ )—स्थातुं शीलः स्थावरः। स्थाधातोः 'स्थेशभासपिसकसो वरच्' इति वरचि विभक्तिकार्ये 'स्थावरः' इति।

**दात्रम्** ( ई० ३० )—दान्त्यतेनेति दात्रम्। 'दाप् लवने' इति धातोः 'दाम्नीशश-' इति करणेऽर्थे ष्ट्रनि 'षप्रत्ययस्य' इति षस्य 'हलन्त्यम्' इति नस्य चेत्संज्ञायां लोपे च विहिते विभक्तिकार्ये 'दात्रम्' इति।

**शस्त्रम्** ( ई० ३६ )—शस्धातोः 'दाम्नीशस-' इति ष्ट्रनि अनुबन्धलोपे 'तितुत्रतथ-' इति इण्निषेधे विभक्तिकार्ये 'शस्त्रम्' इति।

**प्राट्**—पृच्छतीति 'प्राट्'। प्रच्छ्धातोः क्विब्वचिप्रच्छ्यायतस्तुकटप्रुजुश्रीणां दीर्घोऽसम्प्रसारणं च' इति क्विपि दीर्घे सम्प्रसारणाऽभावे च विहिते क्विपो लुकि 'च्छ्वोः शूडनुनासिके च' इति छस्य शादेशे कृदन्तत्वात् सौ हल्ङ्यादिना सुलोपे 'व्रश्चभ्रस्ज-' इति षत्वे षस्य जश्त्वे चर्त्वे 'प्राट्' इति।

**लवित्रम्** ( ई० ३६ )—लुनात्यनेनेति विग्रहे 'लूञ् छेदने' इति धातोः 'अर्तिलूधूसूखनसहचर इत्रः' इति करणेऽर्थे इत्रप्रत्यये गुणेऽवादेशे स्वादिकार्ये तत्सिद्धिः।

**खनित्रम्** ( ई० ३८ )—खनत्यनेनेति विग्रहे 'अर्तिलूधू-' इति करणेऽर्थे इत्रप्रत्यये विभक्तिकार्ये तत्सिद्धिः।

**पवित्रम्** ( ई० ५६ )—पुनाति अनेनेति पवित्रम्। पूधातोः 'अर्तिलूधू' इति इत्रप्रत्यये गुणेऽवादेशे विभक्तिकार्ये 'पवित्रम्' इति।

**पादहारकः** ( ई० ४१ )—'कृत्यल्युटः' इत्येतावतैव सिद्धः पुनर्वचनबलात् येष्वर्थेषु ते कृत्यल्युटो विहिताः ततोऽन्येष्वर्थेषु भवन्तीत्यर्थलाभसम्भवात् सूत्रे बहुलग्रहणं योगविभागार्थम्—कृत्प्रत्यया येष्वर्थेषु विहितास्ततोऽन्यत्राऽपि क्वचिद् भवन्तीति। तेन पादाभ्यां ह्रियते 'पादहारकः' इत्यत्र कर्मणि ण्वुल् सिद्ध्यति। 'कृतो बहुलम्' इति वार्तिकन्तु एतद्योगविभागसिद्धकथनपरमिति बोध्यम्। भाष्ये तु 'कृतो बहुलम्' इत्येव स्थितम्। ततश्च योगविभागं विनैव सकलेष्टसिद्धिरिति ध्येयम्।

**शोकापनोदः** ( ई० ४१ )—शोकमपनुदतीति शोकापनुदः। 'आलस्यसुखाहरणयोरिति वक्तव्यम्' इति वार्तिकेन कप्रत्यये सति गुणाभावात् 'शोकापनुदः'

इति, सुखस्याहर्ता इत्यर्थः । यश्च संसाराऽसारत्वोपदेशेन शोकमपनुदति स शोकापनोदः । अत्र सुखाहरणाभावेन कप्रत्ययाभावात् गुणे 'शोकापनोदः' इत्येव ।

**कुक्षिम्भरिः**—कुक्षिं बिभर्तीति कुक्षिम्भरिः । 'फले ग्रहिरात्मम्भरिश्च' इति सूत्रेण चकारात् कुक्षेः मुमागमः, भृञः इन्प्रत्ययश्च निपातनाद्भवति ।

**आढ्यङ्करणम्** ( ई० ४१ )—न आढयमनाढ्यम् , अनाढ्यमाढ्यं कुर्वन्त्यनेनेति विग्रहे अभूततद्भावविषये 'आढ्य-सुभग-स्थूल-पलित-नग्ना-ऽन्ध-प्रियेषु च्व्यर्थेष्वच्वौ कृञः करणे ख्युन्' इति सूत्रेण ख्युन्प्रत्यये अनुबन्धलोपे 'युवोरनाकौ' इति अनादेशे 'अरुर्द्विषदजन्तस्य मुम्' इति मुमि उमावितौ गुणे णत्वे च विहिते कृदन्तत्वात् सौ अमि पूर्वरूपे अनुस्वारे परसवर्णे 'आढ्यङ्करणम्' इति सिद्धम्।

**मन्त्रकृत्** ( ई० ४१ )—अत्र 'सु-कर्म-पाप-मन्त्र-पुण्येषु कृञः' इति सूत्रेण क्विपि 'मन्त्रकृत्' इति । अत्र सूत्रे त्रिविधनियमो भवति । तथा च भाष्यम्-(१)-'भूते क्विवेवेति, तेन 'कर्मकृतवान् , इत्यत्र अण् न । (२) 'सुकर्मादिषु भूते कृञ् एव क्विबि'ति, तेन 'मन्त्रमधीतवान्-मन्त्राध्यायः' इत्यत्र क्विप् न । (३) 'सुकर्मादिषु भूत एव क्विबि'ति । तेन मन्त्रं करोति करिष्यति वेति विवक्षायां न क्विप् । सुकर्मादिषु पञ्चस्वेव नियमाभावात् , शास्त्रकृत् , इत्यादावपि क्विप् भवतीति दिक् ।

**वित्तः** ( ई० ४१, ५१ )—'विद विचारणे' इत्यस्माद्धातोः निष्ठायां क्तप्रत्यये अनुबन्धलोपे विद् त इति स्थिते 'नुदविदोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्' इति सूत्रेण 'रदाभ्यामि'ति नित्यनत्वं बाधित्वा पाक्षिकनत्वं प्राप्तं तमपि प्रबाध्य 'वित्तो भोगप्रत्यययोः' इति सूत्रेण प्रत्ययार्थे निपातनात् नत्वाभावे चर्त्वे कृदन्तत्वात् सौ रुत्वे विसर्गे वित्तः इति । वित्तः = पुरुषः, प्रख्यात इति यावत् ।

भोग-प्रत्ययाभावाऽभावेऽर्थे तु-विन्नः-वित्तः-इति रूपद्वयमपि भवति । 'नुदविदः' इति सूत्रे उन्दिना साहचर्यात् रौधादिक एव विद्धातोर्ग्रहणात् । 'विद सत्तायाम्' इत्यस्य तु क्तप्रत्यये 'रदाभ्यामि'ति नित्यनत्वे 'विन्नः' इत्येकमेव रूपं भवति । 'विद ज्ञाने' इत्यस्य तु क्तप्रत्यये सेट्त्वादिटि 'विदितः' इत्येव स्यादिति समवयस्काः ।

**म्लिष्टम्** ( ई० ४१ )—'म्लेच्छ अव्यक्ते शब्दे' इत्यस्माद्धातोः क्तप्रत्यये 'व्रश्चे'ति षत्वे ष्टुत्वे सति 'क्षुब्ध-स्वान्त-ध्वान्त-लग्न-म्लिष्ट विरिब्ध-फाण्ट-

बाढानि मन्थ-मन-स्तमः-सक्ता-ऽविस्पष्ट-स्वरा-ऽनायास-भृशेषु' इति सूत्रेण निपातनाद् उपधाया इत्वे इडभावे च कृदन्तत्वात्सौ अमि पूर्वरूपे 'म्लिष्टम्' इति। 'अथ म्लिष्टमविस्पष्टम्' इत्यमरः।

**शुनिन्धयः** ( ई० ५७ )—शुनीं धयतीति विग्रहे शुनीशब्दे उपपदे धेट्-धातोः 'वातशुनीति-' इति वार्तिकेन खशि शित्वात् सार्वधातुकत्वे शपि अया-देशे पररूपे 'शुनीधय' इति स्थिते 'खित्यनव्ययस्य' इति ह्रस्वे 'अरुर्द्विष-' इति मुमि विभक्तिकार्ये 'शुनिन्धयः' इति। पूर्वं मुमि कृते तु अनन्तत्वाभावात् ह्रस्वो न स्यात्।

**अभ्रं लिहः** ( ई० ५७ )—अभ्रं लेढीति विग्रहे 'वाहाऽभ्रे लिहः' इति सूत्रेण खशि शित्वात् सार्वधातुकत्वे शपि 'अदादित्वात् शपो लुकि 'अरुर्द्विष-' इति। मुमि विभक्तिकार्ये 'अभ्रंलिहः' इति। खशो ङित्वान्न गुणः।

**धृष्टः** ( ई० ४१, ५१ )—'ञि धृषा प्रागल्भ्ये' इत्यस्माद्धातोः क्तप्रत्यये 'धृषि-शसी वैयात्ये' इति सूत्रेण इण्निषेधे ष्टुत्वे कृदन्तत्वात्सौ रुत्वे विसर्गे 'धृष्टः' इति। अविनीत इत्यर्थः।

अयम्भावः धृषेरादित्वात् 'आदितश्च' इत्यनेन, शसुधातोश्च ओदित्त्वात् 'यस्य विभाषा' इत्यनेन इण्निषेधे सिद्धे 'धृषिशसी वैयात्ये' इति सूत्रं नियमयति—'अविनये एवैतौ अनिटौ स्तः' इति, तेन अविनयभिन्नार्थे इटि सति धर्षितः, विश-सितः इत्येव रूपं भवति। नच धृषेर्भावादिकर्मणोरर्थयोः क्तप्रत्यये 'विभाषाभावादि-कर्मणोः' इति इटि विकल्पे प्राप्ते तन्निषेधार्थं विध्यर्थमेवेदं सूत्रमिति वाच्यम्, वैयात्येऽर्थे भावादिकर्मणोर्धृषेर्विधानाभावात्। एवञ्च नियमार्थमिदं सूत्रमिति वृत्ति-कारादयः। हरदत्तादयस्तु धृषि धातौ आकारग्रहणस्य फलाभावात् तदकरणे 'आदितश्च' इति सूत्रप्रवृत्त्यभावे इटः प्राप्तौ तन्निषेधार्थं विध्यर्थमेव सूत्रमिदमित्याहुः।

**तूर्णः** ( ई० ४१, ५३ )—'ञित्वरा सम्भ्रमे' इत्यस्माद्धातोः क्तप्रत्यये अनु-बन्धलोपे 'आदितश्च' इति नित्यमिण्निषेधे प्राप्ते तम्प्रबाध्य 'रुष्यमत्वरसङ्घुषा-स्वनाम्' इति सूत्रेण विभाषया इण्निषेधे। 'ज्वरत्वर' इत्यादिसूत्रेण ऊठि 'रदा-भ्याम्' इति नत्वे णत्वे कृदन्तत्वात् सौ रुत्वे विसर्गे 'तूर्णः' इति। इण्निषेधाभावपक्षे 'त्वरितः' इति।

**अर्जयन् वसति ( ई० ४१ )**—'अर्ज प्रतियत्ने' इति चुरादिण्यन्तात् 'अज धातोर्लटि 'लक्षणहेत्वोः क्रियायाः' इति सूत्रेण हेतावर्थे शतृप्रत्यये गुणादिकार्ये 'अर्जयन्' इति । अर्जयन् वसति इत्यस्य अर्जनाय वसतीत्यर्थः । नच धनाद्यर्जनस्य वाससाध्यतया कथं तस्य वासहेतुत्वमिति चेत्सत्यम्, इष्टसाधनताज्ञानस्य वास-प्रवृत्तौ हेतुतया इष्टस्यार्जनस्यापि वासहेतुत्वात् ।

**विकत्थी ( ई० ४१ )**—वि-उपसर्गात् 'कत्थ श्लाघायाम्' इत्यस्माद्धातोः 'वौ कष-लस-कत्थ-स्रम्भः' इति सूत्रेण घिनुण्प्रत्यये, अनुबन्धलोपे कृदन्तत्वात् सौ उपधादीर्घे नलोपे सुलोपे 'विकत्थी' इति ।

**नेत्रम् ( ई० ४१, ५६ )**—नीधातोः 'दाम्नी-शस-यु-युज-स्तु-तुद-सि-सिच-मिह-पत-दश-नहः करणे' इति सूत्रेण ष्ट्रन्प्रत्यये अनुबन्धलोपे गुणे कृदन्तत्वात्सौ अमिपूर्वरूपे 'नेत्रम्' इति सिद्धम् ।

**प्रक्रन्ता ( ई० ३६ )**—'क्रमेः कर्तर्यात्मनेपदविषयात् कृत इण्निषेधो वाच्यः' इति वार्तिके 'अनन्यभावे' विषयशब्दः । तदन्याऽविषयत्वे सति तद्विषयत्वमनन्य-भावः । तथा च 'नित्यमात्मनेपदिनः' इति फलितम् । एवं च 'प्रक्रन्ता' इत्यत्र 'प्रोपाभ्यां समर्थाभ्याम्' इत्यनेन क्रमेरात्मनेपदविषयतासत्त्वात् 'प्रकृतवार्तिकेन इण्निषेधो भवति, 'क्रमिता' इत्यत्र तु 'अनुपसर्गाद्वा' इति आत्मनेपदविकल्प-विधानात् नित्यात्मनेपदित्वाऽभावादिण्निषेधो न भवतीति विशेषः ।

युवानस्तु—तदर्हत्वमेव तद्विषयत्वम्, अर्थाद् आत्मनेपदार्हत्वमेवात्मनेपद-विषयत्वमित्याहुः, तन्मते—आत्मनेपदपक्षे इण्निषेधे 'क्रन्ता' इति, आत्मने-पदाऽभावे इण्निषेधाप्राप्तौ 'क्रमिता' इति । एवं च नवीनमते विषयशब्दस्य वार्तिके प्रयोजनाऽभावः इति ध्वन्यते ।

**पूर्वसरः ( ई० ३६, ५२ )**—पूर्वः सरतीति विग्रहे 'पूर्वे कर्तरि' इति सूत्रेण पूर्वशब्दे उपपदे सर्तेष्टप्रत्यये सुब्लुकि गुणे कृदन्तत्वात् सौ रुत्वे विसर्गे 'पूर्वसरः' इति ।

**तनुच्छत् ( ई० ३६ )**—तनुं छादयतीति विग्रहे 'क्विप् च' इति ण्यन्तात् छादि धातोः क्विपि सुब्लुकि 'इस्मन्त्रन् क्विषु च' इति छादेराकारस्य ह्रस्वे णिलोपे तुगादिकार्ये 'तनुच्छत्' इति ।

अनाश्वान् ( ई० ३६ )—'अश भोजने' श्नाविकरणः क्रयादिः। अस्मा-ल्लिटि तत्स्थाने 'उपेयिवाननाश्वाननूचानश्च' इति सूत्रेण निपातनात् क्वसुप्रत्यये इडभावे च कृते द्वित्वादिकार्ये 'अत आदेः' इति दीर्घे सवर्णदीर्घे च कृते श्नुविकरणाऽभावात् 'श्नोतेश्च' इति नुडभावे 'अत्वसन्तस्य च' इति दीर्घे उगित्वान्नुमि कृदन्तत्वात् सौ हल्ङ्यादिना सुलोपे संयोगान्तलोपे नञ उपपदसमासे नञो नस्य लोपे 'तस्मान्नुडचि' इति नुटि 'अनाश्वान्' इति। 'धृतजयधृतेरनाशुषः' इति भारविः।

चोपनः ( ई० ३६ )—'चुप मन्दायां गतौ' अस्मात् 'चलनशब्दार्थाद-कर्मकाद्युच्' इति सूत्रेण युचि 'युवोरनाकौ' इत्यनादेशे गुणे विभक्तिकार्ये 'चोपनः' इति।

पापचकः ( ई० ३७, ५३ )—पच्धातोर्यङन्तात् पापच्येत्यस्माण्ण्वुलि तस्य अकादेशे 'यस्य हलः' इति यलोपे 'पापच् अक' इति स्थिते अल्लोपस्य स्थानिव-त्त्वादुपधावृद्ध्यभावे विभक्तिकार्ये 'पापचकः' इति।

मधुसूदनः ( ई० ३७ )—मधुं = दैत्यं, सूदयति = हन्ति, इति मधुसूदनः। 'षूद क्षरणे' अस्मात् ण्यन्तात् 'नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः' इत्यनेन नन्द्यादित्वात् ल्युप्रत्यये सुब्लुकि अनादेशे णिलोपे 'सात्पदाद्योः' इति निषेधात् षत्वनिषेधे विभक्तिकार्ये 'मधुसूदनः' इति।

गोसङ्ख्यः ( ई० ३७ )—गाः संचष्टे इति विग्रहे सम्पूर्वात् चक्षिङ्धातोः 'समि ख्यः' इत्यनेन कप्रत्यये सुब्लुकि 'चक्षिङः ख्याञ्' इति ख्याञादेशे आतो लोपे विभक्तिकार्ये 'गोसङ्ख्यः' इति।

भास्करः ( ई० ३७ )—भाः करोतीति विग्रहे 'दिवाविभानिशाप्रभाभास्क-रान्तानन्तादि' इत्यादि सूत्रेण टप्रत्यये अनुबन्धलोपे गुणे कस्कादित्वात् सत्त्वे विभक्तिकार्ये 'भास्करः' इति।

बहुकरः ( ई० ५७ )—अत्र 'बहु' इति कर्मोपपदात् कृधातोः 'दिवाविभा-' इति सूत्रेण टप्रत्यये गुणे विभक्तिकार्ये 'बहुकरः' इति। नन्वत्र संख्याग्रहणेनैव टप्रत्यये सिद्धे 'दिवाविभे'ति सूत्रे बहुग्रहणं किमर्थमिति चेन्न, वैपुल्यवाचिनस्तस्य सङ्ख्याशब्दत्वाभावात्।

**दृतिहरिः** ( ई० ३७, ५२ )—दृतिं हरतीति विग्रहे 'हरतेर्दृतिनाथयोः पशौ' इत्यनेन इन्प्रत्यये सुब्लुकि गुणे विभक्तिकार्ये 'दृतिहरिः' इति ।

**घटिन्धमः** ( ई० ३७ )—घटीं धमतीति विग्रहे 'घटीखारीखरीषूपसंख्यानम्' इति वार्तिकेन खश्प्रत्यये ह्रस्वे सुब्लुकि 'पाघ्राध्मे'ति धमादेशे 'अरुर्द्विषदजन्तस्य मुम्' इत्यनेन मुमागमे तस्यानुस्वारे परसवर्णे विभक्तिकार्ये 'घटिन्धमः' इति ।

**कुमारघाती** ( ई० ३७ )—कुमारं हन्तीति विग्रहे 'कुमारशीर्षयोर्णिनिः' इति णिनि प्रत्यये सुब्लुकि 'हनस्तोऽचिण्णलोः' इत्यनेन तकारस्य नकारे उपधावृद्धौ हस्य कुत्वेन घत्वे कृदन्तत्वात् सौ नान्तत्वाद्दीर्घे सुलोपे नलोपे 'कुमारघाती' इति ।

**सुगः** ( ई० ३७ )—सुखेन गच्छतीति विग्रहे 'सुदुरोरधिकरणे' इति वार्तिकेन डप्रत्यये डित्वाट्टिलोपे विभक्त्यादिकार्ये 'सुगः' इति ।

**शत्रुन्तपः** ( ई० ३७ )—शत्रून् तपतीति विग्रहे 'संज्ञायां भृतॄवृजिधारिसहितपिदमः' इति सूत्रेण खच्प्रत्यये सुब्लुकि 'अरुर्द्विषदजन्तस्य मुम्' इति मुमागमे अनुस्वारे परसवर्णे विभक्त्यादिकार्ये 'शत्रुन्तपः' इति ।

**ब्रह्मवादी** ( ई० ३७ )—ब्रह्म वेदः, तं वदतीति ब्रह्मवादी । 'ब्रह्मणि वदः' इति वार्तिकेन णिनि प्रत्यये सुब्लुकि णित्वादुपधावृद्धौ नान्तत्वाद् दीर्घे सुलोपे 'ब्रह्मवादी' इति ।

**राजघः** ( ई० ३७ )—राजानं हन्तीति विग्रहे 'राजघ उपसंख्यानम्' इति वार्तिकेन निपातनात् हन्तेष्टक्प्रत्यये सुब्लुकि पदत्वान्नलोपे टिलोपे हस्य घत्वे विभक्त्यादिकार्ये 'राजघः' इति ।

**पारदृश्वा** ( ई० ३७ )—पारं दृष्टवानिति पारदृश्वा । 'दृशेः क्वनिप्' इत्यनेन क्वनिप्प्रत्यये सुब्लुकि अनुबन्धलोपे कृदन्तत्वात्सौ नान्तत्वाद् दीर्घे सुलोपे नलोपे 'पारदृश्वा' इति ।

**वृक्णः** ( ई० ३७ )—'ओ व्रश्चू छेदने' सस्य शुत्वेन निर्देशः । अस्मात् क्तप्रत्यये 'ग्रहिज्ये'ति सम्प्रसारणे ऊदित्वेन वेट्कत्वात् 'यस्य विभाषा' इति निष्ठाया इडभावे चस्य कुत्वेन कत्वे 'ओदितश्च' इति निष्ठातकारस्य नत्वे तस्याऽसिद्धत्वात् 'स्कोरि'ति सलोपे नस्य णत्वे विभक्तिकार्ये 'वृक्णः' इति । नन्वत्र नत्वस्याऽसिद्धत्वेन झल्परत्वात् 'व्रश्चे'ति षत्वं कुतो नेति चेन्न, 'निष्ठादेशः

षत्वस्वरप्रत्ययेड्विधिषु सिद्धो वाच्यः' इति वार्तिकेन नत्वस्याऽसिद्धत्वाऽभावकल्पनेनादोषात् ।

**पूर्तः** ( ई० ३७ )—पृधातोः क्तप्रत्यये 'श्र्युकः किति' इतीण्निषेधे 'उदोष्ठ्यपूर्वस्य' इत्युत्वे रपरत्वे 'हलि चे'ति दीर्घे 'रदाभ्यामि'ति निष्ठातकारस्य नत्वे प्राप्ते 'न ध्याख्यापॄमूर्च्छिमदाम्' इति निषेधे विभक्त्यादिकार्ये 'पूर्तः' इति ।

**रोचिष्णुः**—रोचितुं शीलमस्येति विग्रहे 'अलङ्कृञ्' इत्यादिसूत्रेण रुच्धातोः इष्णुच्प्रत्यये लघूपधगुणे विभक्त्यादिकार्ये 'रोचिष्णुः' इति ।

**पतापतः** ( ई० ४२ )—अत्र 'नन्दि-ग्रहि-पचादिभ्यो ल्युणिन्यचः' इति पचादित्वादच्प्रत्यये सति 'चरि-चलि-पति-वदीनां वा द्वित्वमच्याकुचाभ्यासस्येति वक्तव्यम्' इति वार्तिकेन अचि प्रत्यये परे द्वित्वे अभ्यासस्य अडागमे च कृते कृदन्तत्वात्सौ रुत्वे विसर्गे चोक्तरूपं सिद्धम् ।

**धायः** ( ई० ४२ )—आदन्तात् 'धा' धातोः 'श्याद्व्यधा-ऽस्रु-संस्रु-तीण-वसा-ऽवहृ-लिह-श्लिष्-श्वसश्च' इति सूत्रेण णप्रत्यये 'आतो युक्चिण्कृतोः' इति युकि कृदन्तत्वात् सौ रुत्वे विसर्गे 'धायः' इति ।

**त्रिष्ठः** ( ई० ४२ )—सुपि उपपदे आदन्तात् 'स्था' धातोः 'सुपि स्थः' इति सूत्रेण कप्रत्यये 'आतो लोप इटि च' इत्यालोपे 'अम्बा-ऽम्ब-गोभूमि-सव्या-ऽप-द्वि-त्रि-कुशे-कु-शङ्क्वङ्गु-मञ्जि-पुञ्जि-परमे-बर्हिर्दिव्यग्निभ्यः स्थः' इत्यनेन षत्वे ष्टुत्वे कृदन्तत्वात् सौ रुत्वे विसर्गे 'त्रिष्ठः' इति सिद्धम् ।

**स्तनन्धयी** ( ई० ४२ )—स्तनोपपदात् 'धेट्' धातोः 'स्तने धेटो नासिकायां ध्मश्चेति वाच्यम्' इति वार्तिकेन खशि शित्त्वेन सार्वधातुकत्वात् शपि अयादेशे पररूपे 'स्तन धय' इति स्थिते 'अरुर्द्विषदजन्तस्य मुम्' इति मुमि तस्यानुस्वारे परसवर्णे च कृते कृदन्तत्वात् सौ रुत्वे विसर्गे च 'स्तनन्धयः' इति । 'टिड्ढाणञ्' इत्यत्र टित्त्वयन्तं यदन्तं प्रातिपदिकमिति व्याख्यातम्, तथापि टित्त्वस्याऽवयवेऽचरितार्थत्वादत्र ङीबिति हरदत्तादिमते 'स्तनन्धयी' इति भवति ।

**इरम्मदः** ( ई० ४२ )—इरा = उदकं तेन माद्यति = दीप्यतेऽबिन्धनत्वादिति इरम्मदो मेघज्योतिः । 'इरा' उपपदात् 'मद्' धातोः 'उग्रंपश्येरम्मदपाणिन्धमाश्च' इत्यनेन निपातनात् खश्प्रत्यये 'खित्यनव्ययस्य' इत्यनेन पूर्वपदस्याकारस्य

ह्रस्वे 'अरुर्द्विषदजन्तस्य मुम्' इति मुमि शपि पूर्वरूपे कृदन्तत्वात् सौ रुत्वे विसर्गे 'इरम्मदः' इति । अत्र निपातनसामर्थ्यादेव शपापवादत्वाऽपि श्यन्न भवतीति ।

**प्रियकारः** ( ई० ४२, ५५ )—प्रियं करोतीति विग्रहे 'क्षेम-प्रिय-मद्रेऽण् च' इत्यनेन अण्प्रत्यये णित्त्वात् वृद्धौ कृदन्तत्वात् सौ रुत्वे विसर्गे 'प्रियकारः' इति । चात् खचि तु 'अरुर्द्विष-' इति मुमि 'प्रियङ्करः' इति भवति ।

नच तर्हि 'अल्पारम्भः क्षेमकरः' इति कथमिति चेत् ? सत्यम्, कर्मणः शेषत्वविवक्षायां कर्मोपपदाभावात् अणभावे पचाद्यच् बोध्यमिति कौमुद्यां स्पष्टम् । 'क्षेमङ्करी' इत्यत्र तु गौरादित्वात् ङीष् बोध्यः ।

**आशीः** ( ई० ४२, ५२ )—'आङः शासु इच्छायाम्' अस्मात् 'क्विप् च' इति क्विपि तस्य सर्वाऽपहारे 'आशासः क्वावुपधाया इत्वं वाच्यम्' इति इत्वे कृदन्तत्वात् सौ तस्य हल्ङ्यादिलोपे सकारस्य रुत्वे 'र्वोरुपधायाः' इति दीर्घे रेफस्य विसर्गे 'आशीः' इति । 'शास इदङ्हलोः' इति इत्वन्तु न शङ्क्यं तत्र सूत्रे परस्मैपदिनः एव शासेर्ग्रहणात् ।

**अभिश्यानः** ( ई० ३९, ४२ )—'विभाषाऽभ्यवपूर्वस्य' इति विकल्पपक्षे इदं रूपम् । तथा हि—सम्प्रसारणाऽभावे अभिपूर्वकात् ऐकारेत्संज्ञक 'श्यै' धातोः 'क्तक्तवतू निष्ठा' इति निष्ठासंज्ञायां 'निष्ठा' इति क्तप्रत्यये 'श्योऽस्पर्शे' इति निष्ठा-तकारस्य नकारे आत्त्वे कृदन्तत्वात् सौ तस्य नपुंसके अमादेशे पूर्वरूपे च 'अभि-श्यानम् ( घृतम् )' इति । संप्रसारणपक्षे तु 'अभिशीनम्' इति ।

**संशितं व्रतम्** ( ई० ४२ )—'सम्' उपसर्गात् 'शो तनूकरणे' अस्मात् निष्ठायां क्तप्रत्यये 'शाच्छोरन्यतरस्याम्' इत्यस्य भाष्ये व्यवस्थितविभाषाश्रयणात् व्रते विषये इति नित्यमित्वे कृदन्तत्वात् सौ तस्य नपुंसके अमादेशे पूर्वरूपे च 'संशितं ( व्रतम् )' इति ।

**छिदुरम्** ( ई० ४२ )—'छिद्' धातोः 'विदि-भिदि-च्छिदेः कुरच्' इति कुरच्प्रत्यये कित्त्वात् गुणाभावे कृदन्तत्वात् सौ तस्य नपुंसके अमादेशे 'छिदु-रम्' इति ।

**प्रच्छिद्** ( ई० ४२ )—अत्र 'सत्-सू-द्विष-द्रुह-दुह-युज-विद-भिद-च्छिद-जि-नी-राजामुपसर्गेऽपि क्विप्' इति क्विप् विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**संपर्की** ( ई० ४२ )—'संपृचा-ऽनुरुधा-ऽऽङ्यमा-ऽऽङ्यस-परिसृ-संसृज्-परिदेव-संज्वर-परिक्षिप-परिरट-परिवद-परिदिह-परिमुह-दुष-द्विष-द्रुह-दुह-युजा-ऽऽक्रीड-विविच-त्यज-रज-भज-अतिचारा-ऽपचरा-ऽऽमुषा-ऽभ्याहनश्च' इति सूत्रेण घिनुण्प्रत्ययो भवति ।

**पाटूपटः** ( ई० ४३, ४४, ५१ )—पाटेर्णौ पाटि, तस्मात् 'नन्दि-ग्रहि-पचादिभ्यो ल्युणिन्यचः' इत्यनेन अचि तस्मिन् परे 'पाटेर्णिलुक् चोकूचदीर्घश्चाभ्यासस्य' इति वार्तिकेन णेर्लुकि द्वित्वे आभ्यासस्य ऊगागमे अभ्यासाकारस्य ह्रस्वे तस्य दीर्घे च कृते कृदन्तत्वात् सौ रुत्वे विसर्गे 'पाटूपटः' इति जातम् ।

न च हलादिशेषेण टकारस्य निवृत्तिः कुतो नेति वाच्यम् ? तथा सति आद्गुणे कृते 'पोपटः' इति रूपस्य उगागमे कृतेऽपि सिद्धे ऊगागमे दीर्घोच्चारणस्य वैयर्थ्यं स्यात् ।

**आखूत्थः** ( ई० ४३ )—'सुपि स्थः' इत्यत्र सुपि उपपदे आदन्तात् कः स्यादित्यर्थक-'सुपि' इत्येको योगः । सुपि तिष्ठितेः कः स्यादित्यर्थक 'स्थ' इत्यपरो योगः एवं च कर्तरि 'सुपि' इति पूर्वयोगेनैव सिद्धे 'स्थ' इति द्वितीययोगसामर्थ्यात् सुपि तिष्ठतेः भावे एव कः स्यादिति विज्ञायते । ततश्च आखूनामुत्थानमाखूत्थः इत्यत्र सुबन्तोपपदात् स्था धातोः द्वितीययोगेन कप्रत्यये 'आतो लोपः' इत्यालोपे 'उदः स्थास्तम्भोः पूर्वस्य' इति उदः परस्य सस्य थकारे उदो दस्य चर्त्वे कृदन्तत्वात् सौ रुत्वे विसर्गे 'आखूत्थः' इति सिद्धम् ।

**कवचहरः** ( ई० ४३, ५७ )—'वयसि च' इति सूत्रेण 'हृ' धातोः अच्प्रत्यये गुणे कृदन्तत्वात् सौ रुत्वे विसर्गे 'कवचहरः' इति । ननु 'हरतेरनुद्यमने' इत्यनेनैव अच् सिद्धे किमर्थमिदमिति चेन्न, उद्यमानार्थं तस्याऽऽवश्यकत्वात् ।

**शुनिन्धयः** ( ई० ४३ )—शुनीं धयतीति शुनिन्धयः । 'वात-शुनी-तिल-शर्द्धेष्वजधेट-तुद-जहातिभ्यः खश उपसंख्यानम्' इति वार्तिकेन धेट्धातोः शश्प्रत्यये 'खित्यनव्ययस्य' इति खिदन्ते परे पूर्वपदस्य ह्रस्वे 'अरुर्द्विषदजन्तस्य मुम्' इति मुमि कृदन्तत्वात् सौ रुत्वे विसर्गे 'शुनिन्धयः' इति ।

**दुर्गः** ( ई० ४३ )—दुःखेन गच्छतीति दुर्गः 'सुदुरोरधिकरणे' इति दुरुपपदे गम्धातोर्डप्रत्यये अनुबन्धलोपे कृदन्तत्वात् सौ रुत्वे विसर्गे 'दुर्गः' इति सिद्धम् ।

**अन्नादः** ( ई० ४३, ५७ )—अन्नमत्तीत्यत्र 'अन्नादः' । कर्मण्यण् भवति । 'अदोऽनन्ने' इति सूत्रस्य प्रत्युदाहरणमेतत् । तत्र हि अनन्ने इत्यस्याभावे अत्रापि विट् स्यादिति भावः ।

**अग्रेभ्रूः** ( ई० ४३, ५७ )—अग्रे भ्रमतीत्यत्र 'अग्रेभ्रूः' । 'ऊङ् च गमादीनामुपसंख्यानम्' इति वार्तिकेन भ्रमेरकारस्य ऊभावे चकारादनेनैव अन्त्यस्य मस्य लोपे 'तत्पुरुषे कृति बहुलम्' इति सप्तम्या अलुकि कृदन्तत्वात् सौ रुत्वे विसर्गे 'अग्रेभ्रूः' इति जातम् ।

**क्षितः कामः** ( ई० ४३ )—'क्षि क्षये' इत्यस्मादन्तर्भावितण्यर्थात् कर्मणि निष्ठायां क्तप्रत्यये कृदन्तत्वात् सौ रुत्वे विसर्गे 'क्षितः' इति । ण्यदर्थौ भावकर्मणी ततोऽन्यत्र निष्ठायां 'निष्ठायामण्यदर्थे' इति क्षियो दीर्घविधानादत्र दीर्घो न । अत एव 'क्षियो दीर्घात्' इति नत्वञ्च न भवति, निष्ठातस्य दीर्घात् परत्वाऽभावात् ।

**उदक्तमुदकं कूपात्** ( ई० ४३ )—'अञ्चोऽनपादाने' इत्यस्य प्रत्युदाहरणमेतत् । अत्राऽपादानसमभिव्याहारसत्त्वात् नत्वं न । 'अनपादाने' इत्यनुक्तौ त्वत्रापि नत्वं दुर्वारं स्यादिति भावः ।

**फुल्लः** ( ई० ४३ )—'ञिफला विशरणे' अस्मात् निष्ठायां क्तप्रत्यये 'अनुपसर्गात्फुल्ल-क्षीब-कृशोल्लाघाः' इति निपातनात् निष्ठातस्य लत्वे, 'आदितश्च' इति इण्निषेधे 'ति च' इति उत्वे कृदन्तत्वात् सौ रुत्वे विसर्गे 'फुल्लः' इति सिद्धम् ।

नच 'ति च' इत्यनेन 'एकानुबन्धक'परिभाषया 'फलनिष्पत्तौ, इत्यस्यैव उत्वं स्यादिति वाच्यम् ? प्रस्तुतपरिभाषाया असार्वत्रिकत्वेन प्रकृतसूत्रे उभयोर्ग्रहणस्य व्याख्यातत्वात् ।

**वृत्तं छन्दः** ( ई० ४३, ५२ )—ण्यन्तात् वृतिधातोः कर्मणि क्तप्रत्यये 'णेरध्ययने वृत्तम्' इति सूत्रेण अधीयमानेर्थे निपातनात् क्तस्येडभावे णेर्लुकि कृदन्तत्वात् सौ तस्य अमादेशे पूर्वरूपे 'वृत्तं छन्दः' इति । णिलोपे तु प्रत्ययलक्षणे लघूपधगुणः स्यादिति ध्येयम् ।

**वैकुण्ठमधिष्ठितः** ( ई० ४३ )—'अधि' उपसर्गात् स्थाधातोः 'गत्यर्थाऽकर्मक-श्लिष-शीङ्-स्था-ऽस-वस-जन-रुह-जीर्यतिभ्यश्च' इति सूत्रेण कर्तरि क्तप्र-

त्यये 'श्यति-स्यति' इति इत्वे षत्वे ष्टुत्वे कृदन्तत्वात् सौ रुत्वे विसर्गे 'वैकुण्टमधिष्ठितः' इति । वैकुण्ठे स्थितवानित्यर्थः ।

**अनूचानः** ( ई० ४३ )—अनुपूर्वात् 'वच्'धातोः 'उपेयिवाननाश्वाननूचानाश्च' इति सूत्रेण निपातनात् कर्तरि कानच्प्रत्यये अनुबन्धलोपे कानचि यजादित्वात् वकारस्य संप्रसारणे पूर्वरूपे सवर्णदीर्घे कृदन्तत्वात् सौ रुत्वे विसर्गे 'अनूचानः' इति । वेदावानुवचनं कृतवानित्यर्थः ।

**विविदिवान्** ( ई० ४३, ५२ )—विद् धातोर्लिटि तत्स्थाने छन्दसि भूते क्वसुश्चादेशः इत्यर्थक-'क्वसुश्च' इत्यनेन क्वसुप्रत्यये अनुबन्धलोपे द्वित्वादिकार्ये 'वि विद् वस्' इति स्थिते 'विभाषा गम-हन-विद-विशाम्' इत्यनेन विभाषया इटि 'उगिदचामि'ति नुमि 'सान्तमहतः' इति दीर्घे संयोगान्तलोपे कृदन्तत्वात् सौ तस्य लोपे 'विविदिवान्' इति सिद्धम् । इडभावपक्षे 'विविद्वान्' इति भवति ।

**शयाना भुञ्जते यवनाः** ( ई० ४३ )—अत्र शयनं भुज्यर्थपरिचायकं तस्मिन् अर्थे शीङ्धातोर्लिटि तत्स्थाने 'लक्षणहेत्वोः क्रियायाः' इति सूत्रेण शानचि अनुबन्धलोपे गुणे अयादेशे प्रथमाबहुवचने कृदन्तत्वाज्जसि अनुबन्धलोपे सकारस्य रुत्वे यत्वे यलोपे 'शयाना भुञ्जते यवनाः' इति । अत्र भोजनकालीनं शयनं भोक्तुर्यवनत्वसूचकम् ।

**यायजूकः** ( ई० ४३ )—यङ्न्तात् यज्धातोः 'यज-जप-दशां यङः' इति सूत्रेण ऊकागमे द्वित्वादिकार्ये 'य यज् य ऊक्' इति स्थिते 'यस्य हलः' इति यलोपे 'अतो लोपः' इत्यलोपे 'दीर्घोऽकितः' इत्यनेन अभ्यासस्य दीर्घे कृदन्तत्वात् सौ रुत्वे विसर्गे 'यायजूकः' इति सिद्धम् ।

**जज्ञिः** ( ई० ४३ )—जन् धातोः 'आदृ-गम-हन-जनः कि-किनौ लिट् च' इति सूत्रेण किप्रत्यये, किन् प्रत्यये वा कृते लिड्वद्भावे च विहिते द्वित्वादिकार्ये 'जज्ञिः' इति । कि-किनोस्तु स्वरे विशेषः ।

**सेक्त्रम्** ( ई० ४३ )—सिच्धातोः करणेऽर्थे 'दाम्नी-शस-यु-युज-स्तु-तुद-सि-सिच-मिह-पत-दश-नहः करणे' इति सूत्रेण ष्ट्रन्प्रत्यये अनुबन्धलोपे 'ति-तु-त्र-त-थ-सि-सु-सर-क-सेषु च' इति सूत्रेण इण्निषेधे गुणे कुत्वे कृदन्तत्वात् सौ तस्य अमादेशे पूर्वरूपे 'सेक्त्रम्' इति ।

**अवहारः** ( ई० ४७ )—अवोपसर्गात् हृधातोः 'श्याद्व्यधास्रुसंस्र्वतीणवसावहृलिहश्लिषश्वसश्च' इति सूत्रेण णप्रत्यये वृद्धौ कृदन्तत्वात् सौ सस्य रुत्वे विसर्गे 'अवहारः' इति ।

**भवो देवः** ( ई० ५७ )—भूधातोः 'भवतेश्च' इति काशिकोक्तवार्तिकेन चकारादचि गुणे अवादेशे विभक्तिकार्ये 'भवः' इति । ( भवः = देवः–महादेवः, संसारश्च ) णप्रत्ययपक्षे वृद्धौ आवादेशे 'भावाः = पदार्थाः' इति । 'भवतेश्चे'ति वार्तिकं भाष्ये न दृश्यते ।

**भावः** ( ई० ५७ )—भूधातोः 'भवतेश्च' इति काशिकोक्तवार्तिकेन णप्रत्यये 'अचो ञ्णिति' इति वृद्धौ आवादेशे विभक्तिकार्ये 'भावः' इति । ननु 'भवतेश्चे'ति णविकल्पस्य भाष्ये अदर्शनात् कथं भाष्यमते 'भावः' इति चेन्न, 'भू प्राप्तौ' इति चुरादिण्यन्तात् भावीत्यस्माद् अचि णिलोपे विभक्तिकार्ये 'भावः' इति बोध्यम् ।

**गङ्गाधरः**—नन्वत्र 'कर्मण्यण्' इति सूत्रेण अण् कुतो नेति चेन्न, कर्मणः शेषत्वविवक्षायां कर्मोपपदाभावात् । अणि कृते तु 'गङ्गाधारः' इति स्यात् ।

**प्रख्यानीयम्** ( ई० ४७ )—प्रोपसर्गात् ख्याधातोः अनीयर्प्रत्यये विभक्त्यादिकार्ये 'प्रख्यानीयम्' इति । 'कृत्यचः' इति णत्वं तु न, 'चक्षिङः ख्याञ्' इति सूत्रे भाष्ये 'ख्शाञः शस्य यो वा' इत्युक्तत्वात् यत्वस्याऽसिद्धत्वेन शकारव्यवधानात् ।

**अनुद्यम्** ( ई० ४७ )—नञि उपपदे वद्धातो 'वदः सुपि क्यप् च' इति क्यपि 'वचिस्वपी'ति सम्प्रसारणे पूर्वरूपे विभक्त्यादिकार्ये 'अनुद्यम् = वचनाऽनर्हं' गुरुनाम' इति शेषः । 'अवद्यपण्यवर्या गर्ह्यपणितव्याऽनिरोधेषु' इति सूत्रस्य गर्हेत्यस्य प्रत्युदाहरणमेतत् ।

**आत्मम्भरिः** (ई० ४७)—आत्मानं बिभर्तीति विग्रहे 'फले ग्रहिरात्मम्भरिश्च' इति सूत्रेण भृञ्धातोरिन् प्रत्ययः, न लोपे सति मुमागमश्च निपात्यते । ततः ऋकारस्य गुणे रपरत्वे विभक्त्यादिकार्ये 'आत्मम्भरिः' इति ।

**पाणिन्धमः** ( ई० ४७ )—पाणयो ध्मायन्तेऽस्मिन्निति विग्रहे 'उग्रम्पश्येरम्मदपाणिन्धमाश्च' इति सूत्रेण निपातनात् सिद्धं भवति । तत्र हि शपि 'पाघ्राध्मे'ति धमादेश इति विशेषः ।

उखास्रत् ( ई० ४७ )—उखायाः स्रंसते इति विग्रहे स्रंस्धातोः 'क्विप् च' इति सूत्रेण क्विपि 'अनिदिता'मिति नलोपे 'वसुस्रंसुध्व'मिति दत्वे चर्त्वे विभक्त्यादिकार्ये 'उखास्रत्' इति ।

प्रसूः ( ई० ५७ )—अत्र 'सत्सूद्विषद्–' इति सूत्रेण प्रोपसर्गकसूधातोः क्विपि विभक्तिकार्ये 'प्रसूः' इति ।

आसितः ( ई० ४७ )—आसितवानित्यर्थः । 'क्तोऽधिकरणे च ध्रौव्य-गतिप्रत्यवसानार्थेभ्यः' इति सूत्रेण चकारात् कर्तरि क्तप्रत्यये इटि स्वादिकार्ये 'आसितः' इति ।

गायनः ( ई० ३९, ५४ )—'गै शब्दे' अस्मात् 'ण्युट् च' इति सूत्रेण ण्युटि अनुबन्धलोपे अनादेशे 'आदेश उपदेशे' इत्यात्वे 'आतो युक्' इति युकि विभक्त्यादिकार्ये 'गायनः' इति ।

दिवाविभेति ( ई० ३९ )—अत्र सूत्रे-दिवा, विभा, निशा, प्रभा, भास्, कार, अन्त, अनन्त, आदि, बहु, नान्दी, किम्, लिपि, लिबि, बलि, भक्ति, कर्तृ, चित्र, क्षेत्र, संख्या, जङ्घा, बाहु, अहर्, यद्, तद्, धनुस्, अरुस्, एषां द्वन्द्वात् सप्तमी । ततश्च—'दिवाविभानिशाप्रभाभास्करान्तानन्तादिबहुनान्दीकिंलिपिलिबिबलिभक्तिकर्तृचित्रक्षेत्रसंख्याजङ्घाबाह्वहर्यत्तद्धनुररुष्षु' इति सूत्रस्वरूपम् । एषु कृञष्टः स्यादहेत्वादावपीति सूत्रार्थः । अत्र कर्मणीति सुपीति चानुवृत्तं यथायोगमन्वेति । उदाहरणानि यथा—दिवा ( दिवसं ) करोतीति = दिवाकरः, विभाकरः, निशाकरः, प्रभाकरः, भास्करः ( कस्कादित्वात् सः ), कारकरः, अन्तकरः, अनन्तकरः, आदिकरः, बहुकरः ( बहुशब्दस्य वैपुल्यार्थं संख्यापेक्षया पृथग् ग्रहणम् ), नान्दीकरः, किङ्करः, लिपिकरः, लिबिकरः, भक्तिकरः, कर्तृकरः, चित्रकरः, क्षेत्रकरः, एककरः, जङ्घाकरः,-बाहुकरः, अहस्करः ( कस्कादित्वात् सः ), यत्करः, तत्करः, धनुष्करः—अरुष्करः ( उभयत्र 'नित्यं समासे' इति षत्वम् ) ।

कालिं मन्या ( ई० ३९ )—कालीमात्मानं मन्यते इति विग्रहे 'मन ज्ञाने' अस्माद्धातोः 'आत्ममाने खश्च' इति खश्प्रत्यये शित्वात् सार्वधातुकसंज्ञायां 'दिवादिभ्यः श्यन्' इति श्यनि उपपदसमासे 'खित्यनव्ययस्य' इति सूत्रेण पुंवत्वं

प्रबाध्य परत्वाद्ह्रस्वे 'अरुर्द्विषदजन्तस्य' इति मुमि मस्यानुस्वारे कृदन्तत्वात् सौ स्त्रीत्वात् टापि सोर्लोपे 'कालिं मन्या' इति ।

**शीतभोजी** ( ई० ३९ )—शीतं भोक्तुं शीलमस्येति विग्रहे भुज्धातोः 'सुप्य-जातौ णिनिस्ताच्छील्ये' इति णिनिप्रत्यये उपपदसमासे लघूपधगुणे कृदन्तत्वात् सौ नान्तत्वात् दीर्घे सुलोपे नलोपे 'शीतभोजी' इति ।

**दूनः** ( ई० ३९ )—'दु गतौ' अस्मात् कर्मणि क्तप्रत्यये 'दुग्वोर्दीर्घश्च' इति निष्ठातस्य नत्वे दीर्घे च कृदन्तत्वात् सौ रुत्वे विसर्गे 'दूनः' इति ।

**अभिशीनः** ( ई० ३९ )—अभिपूर्वकात् 'श्यैङ् गतौ' अस्मात् निष्ठायां क्तप्रत्यये 'विभाषाऽभ्यवपूर्वस्य' इति यकारस्य सम्प्रसारणे पूर्वरूपे 'हलः' इति दीर्घे 'अभिशीत' इति स्थिते 'श्योऽस्पर्शे' इति निष्ठातस्य नत्वे विभक्त्यादिकार्ये 'अभिशीनः' इति ।

**स्वान्तम्** ( ई० ३९ )—'स्वन' धातोः 'क्षुब्धस्वान्तध्वान्त' इत्यादिसूत्रेण निपातनात् क्तप्रत्यये 'अनुनासिकस्य क्वी'ति दीर्घे कृदन्तत्वात् सौ तस्य अमादेशे पूर्वरूपे 'स्वान्तम्' इति, मनः इति शेषः । अत्र निपातनादिट् न ।

**मूर्तः** ( ई० ३९ )—मुच्छर्धिातोः निष्ठायां क्तप्रत्यये 'राल्लोपः' इति छस्य लोपे 'आतो लोप इटि च' इत्यनेन आलोपे 'हलि चे'ति दीर्घे विभक्त्यादि-कार्ये 'मूर्तः' इति । 'रदाभ्यामि'ति नत्वं तु न, 'न ध्याख्यापॄमूर्च्छिमदाम्' इति निषेधात् ।

**ग्लानः** ( ई० ३९ )—ग्लैधातोर्निष्ठायां क्तप्रत्यये 'आदेच उपदेशे' इत्यात्वे 'संयोगादेरातो धातोर्यण्वतः' इति निष्ठातस्य नत्वे विभक्त्यादिकार्ये 'ग्लानः' इति ।

**हसितम्** ( ई० ३९, ५६ )—हस्धातोः 'नपुंसके भावे क्तः' इति भावे क्तप्रत्यये नित्यनपुंसकत्वात् 'हसितम्' इत्येव । कर्मणि क्ते कृते तु हसितः, हसितम् , हसिता' इति । वस्तुतस्तु हस्धातोरकर्मकत्वात् कर्मणि प्रत्ययो नेति तत्त्वविदः ।

**ग्रामगः** (ई० ३८)—ग्रामं गच्छतीति विग्रहे 'अन्यत्राऽपि दृश्यत इति वक्त-व्यम्' इति वार्तिकेन ग्राममित्युपपदेष्वपि गम्धातोर्डप्रत्यये डित्वसामर्थ्यादभस्यापि टेर्लोपे उपपदसमासे विभक्त्यादिकार्ये 'ग्रामगः' इति ।

**तमोऽपहः** ( ई० ३८, ५५ )—तमांसि अपहन्तीत्यर्थे कर्मण्युपपदे अपपूर्वात्

हन्धातोः 'अपे: क्लेशतमसोः' इति डप्रत्यये डित्वादभस्यापि टेर्लोपे उपपदसमासे विभक्त्यादिकार्ये 'तमोऽपहः' इति ।

**आढ्यम्भावुकः** ( ई० ३८ )—( अनाढ्यः ) आढ्यो भवतीत्यर्थे 'कर्तरि भुवः खिष्णुच्-खुकञौ' इति खुकञ्प्रत्यये खञावितौ खित्वान्मुमि ञित्वाद्वृद्धौ आवादेशे विभक्त्यादिकार्ये 'आढ्यम्भावुकः' इति सिद्धम् ।

**दूनवान्** ( ई० ३८ )—'दूङ् परितापे' अस्मात् 'कर्तरि कृदि'ति कर्तरि क्तवतुप्रत्यये अनुबन्धलोपे 'क्तक्तवतू निष्ठा' इति निष्ठासंज्ञायाम् 'ओदितश्च' इति निष्ठातस्य नत्वे 'दूनवत्' इति स्थिते कृदन्तत्वात् सौ उगित्वान्नुमि नान्तत्वाद् दीर्घे हल्ङ्यादिना सुलोपे 'दूनवान्' इति । न च ओदित्वाऽभावात् 'ओदितश्चे'ति कथं नत्वमिति वाच्यम् ? 'षूङ्प्राणिप्रसवे' इत्याद्या नव धातवः ओदिताः, इति दिवादिगणोक्तेऽस्य पाठात् ।

**नुन्नः** ( ई० ३८, ५४ )—प्रेरणार्थक 'णुद्' धातोः 'णो नः' इति नत्वे 'नुद्' इति । तस्मात् क्तप्रत्यये 'नुद् त' इति स्थिते 'नुदविन्दोन्दत्राघ्राह्रीभ्योऽन्यतरस्याम्' इति निष्ठातस्य नत्वे धातोर्दस्याऽनुनासिके कृदन्तत्वात् सौ तस्य रुत्वे विसर्गे 'नुन्नः' इति । नत्वाऽभावे 'नुत्तः' इति ।

**बहुक्षामा** ( ई० ५७ )—अत्र 'ईक्षक्षमिभ्यां च' इति वार्तिकेन क्षम्धातोः णप्रत्यये णित्वाद् वृद्धौ विभक्त्यादिकार्ये 'बहुक्षामा' इति सिद्धं भवति ।

**आरिवान्** ( ई० ३८, ५०, ५१, ५५ )—'ऋ' धातोर्लिटि तत्स्थाने 'लिटः कानज्वा, क्वसुश्च' इति क्वसुप्रत्यये 'ऋच्छत्यृताम्' इति गुणे कृते द्वित्वाऽभ्यास-संज्ञाहलादिशेषाऽभ्यासदीर्घसवर्णदीर्घेषु कृतेषु 'वस्वेकाजाद्घसाम्' इति इटि कृद-न्तत्वात् सौ 'आरिवस् स' इति स्थिते उगित्त्वान्नुमि संयोगान्तलोपे हल्ङ्या-दिना सलोपे नान्तत्वात् दीर्घे 'आरिवान्' इति जातम् ।

**बिभ्राणः** ( ई० ३८, ५५ )—'डुभृञ् धारणपोषणयोः' अस्मात् कर्तरि 'ताच्छील्यवयोवचनशक्तिषु चानश्' इति सूत्रेण चानश्प्रत्यये अनुबन्धलोपे शित्वात् सार्वधातुकसंज्ञायां शपि तस्य श्लौ 'श्लौ' इति द्वित्वे अभ्याससंज्ञायाम् 'उरत्' इति अत्वे हलादिशेषे 'अभ्यासे चर्च' इति जश्त्वे 'भृञामित्' इति इत्वे 'बिभृ आन' इति स्थिते यणि णत्वे कृदन्तत्वात् सौ तस्य रुत्वे विसर्गे 'बिभ्राणः' इति । ( चानशो लादेशत्वाऽभावादनात्मनेपदत्वात् परस्मैपदिभ्योऽपि प्रवृत्तिः )

**गत्यर्थाऽकर्मकश्लिषशीङ्स्थासवसजनरुहजीर्यतिभ्यश्च**—अत्र सूत्रे 'लः कर्मणि च भावे चे'त्यतो भावे कर्मणीति, 'आदिकर्मणि क्तः कर्तरि चे'त्यतः कर्तरि इति चानुवर्तते । तेन भावे, कर्मणि, कर्तरि चाऽर्थे अस्य प्रवृत्तिः ।

**सोमयाजी** ( ई० ५७ )—सोमेनेष्ट्वानिति विग्रहे 'करणे यजः' इति सूत्रेण णिनिप्रत्यये सुब्लुकि णित्वात् वृद्धौ कृदन्तत्वात् सौ हल्ङ्यादिलोपे उपधादीर्घे नलोपे 'सोमयाजी' इति । सोमाख्यलताविशेषरसेन यागं कृतवानित्यर्थः ।

**दिवाकरः** ( ई० ४८, ५८ )—दिवा करोतीति विग्रहे 'दिवाविभा' इत्यादि-सूत्रेण कृञ्धातोष्टप्रत्यये गुणे विभक्तिकार्ये 'दिवाकरः' इति ।

**सोमविक्रयी** ( ई० ४८ )—सोमं विक्रीते इति विग्रहे 'कुत्सितग्रहणं कर्तव्यम्' इति वार्तिकेन 'वि' उपसर्गात् क्रीधातोः इनि प्रत्यये गुणे अयादेशे विभक्ति-कार्ये सुलोपे नलोपे 'सोमविक्रयी' इति ।

**क्षुब्धो मन्थश्चेत्** ( ई० ४८ )—'क्षुभ संचलने' अस्मात् 'क्षुब्धस्वान्त-ध्वान्त' इत्यादिसूत्रेण क्तप्रत्यये निपातनादिडभावे 'झषस्तथोः' इति धत्वे जश्त्वे स्वादिकार्ये 'क्षुब्धः' इति ।

**विहङ्गः** ( ई० ४४, ५६ )—विहायसा गच्छतीति विग्रहे 'गमेः सुपि वाच्यः' इवि वार्तिकेन खचि प्रत्यये 'विहायसो विह इति वाच्यम्' इति वार्तिकेन विह आदेशे 'अरुर्द्विषदजन्तस्य मुम्' इति मुमि तस्यानुस्वारे परसवर्णे 'खच्च डिद्वा वाच्यः' इति डित्संज्ञायां डित्त्वाट्टिलोपे कृदन्तत्वात् सौ तस्य रुत्वे विसर्गे 'वि-हङ्गः' इति । डित्वाभावे तु–'विहङ्गमः' इति भवति ।

**जित्वरः** ( ई० ४४ )—जिधातोः 'इण्-नश-जि-सर्तिभ्यः क्वरप्' इति सूत्रेण क्वरप्प्रत्यये कित्वात् गुणाभावे 'ह्रस्वस्य पिति कृति तुक्' इति तुकि कृतन्त-त्वात् सौ तस्य रुत्वे विसर्गे च 'जित्वरः' इति ।

**सूत्तम्** ( ई० ४८ )—'सु' उपसर्गात् दाधातोः क्तप्रत्यये 'सु दा त', इति स्थिते 'अच उपसर्गात्तः' इति सूत्रेण दकारादाकारस्य तकारे दकारस्य 'खरि च' इति चर्त्वे 'दस्ति' इति सूत्रेण सूपसर्गस्य दीर्घे 'अतो लोपः' इत्यलोपे 'झरो झरि सवर्णे' इति तलोपे कृदन्तत्वात् सौ तस्य अमादेशे 'सूत्तम्' इति ।

न च उपसर्गस्य दीर्घे कर्तव्ये चर्त्वस्यासिद्धत्वेन दादेशे तकाराद्युत्तरपदत्वा

भावात् दीर्घो न स्यादिति वाच्यम् ? 'अतो रोः' इति उत्वं प्रति रुत्वस्य चर्त्वस्य असिद्धत्वाभावात् । वस्तुतस्तु गातिस्थेति सूत्रे भाष्ये सोस्तत्वे उपसर्गत्वप्रतिषेधात् 'सूत्तम्' इति पदं चिन्त्यम् । मूले 'नीत्तम्' इत्युत्तरं 'वीत्तम्' इत्येव पाठः समीचीनः इति तत्त्वविदः ।

शुश्रुवान् ( ई० ४४ )—श्रुधातोः 'भाषायां सदवसश्रुवः' इति विभाषया लिटि तस्य क्वसुप्रत्यये द्वित्वादिकार्ये नुमि दीर्घे सलोपे कृदन्तत्वात् सौ तस्य हल्परत्वात् लोपे 'शुश्रुवान्' इति ।

वर्तिष्णुः ( ई० ४४ )—वृत्धातो 'अलङ्कृञ्-निराकृञ्-प्रजन-उत्पच-उत्पत-उमन्द-रुचि-अप-त्रप-वृधु-सह-चर इष्णुच्' इति सूत्रेण इष्णुच्प्रत्यये गुणे कृन्दन्तत्वात् सौ तस्य रुत्वे विसर्गे च कृते 'वर्तिष्णुः' इति सिद्धम् ।

दन्दशूकः ( ई० ४४ )—ताच्छील्याद्यर्थे दंशेर्यङि द्वित्वादिकार्ये 'यज-जप-दशां यङः' इति सूत्रेण ऊकि 'यस्य हलः' इति यलोपे 'अतो लोपः' इत्यल्लोपे च कृते 'अनिदिताम्' इति नलोपे 'जप-जभ-दह-दश-भञ्ज-पशाम्' इति अभ्यासस्य नुकि कृदन्तत्वात् सौ रुत्वे विसर्गे 'दन्दशूकः' इति ।

द्विषतीतापः ( ई० ४०, ५७ )—अणन्तोऽयम् । नन्वत्र 'लिङ्गविशिष्टपरिभाषया द्विषतीशब्देप्युपपदे 'द्विषत्परयोस्तापे' इत्यनेन खचि 'खचि ह्रस्वः' इति ह्रस्वे 'द्विषतीतपः' इति कुतो नेति चेन्न, तस्या अनित्यत्वात् । अनित्यत्वे 'शक्तिलाङ्गलाङ्कुशयष्टितोमरघटघटीधनुष्षु ग्रहेरुपसंख्यानम्' इत्यत्र घटीग्रहणमेव मानम् । अन्यथा घटग्रहणेनैव लिङ्गविशिष्टपरिभाषया घटीशब्दस्यापि सिद्धे वार्तिके घटीग्रहणं व्यर्थं स्यात् । तदेव व्यर्थीभूय लिङ्गविशिष्टपरिभाषा अनित्येति विज्ञायते ।

क्षीरपायिणः उशीनराः ( ई० ४० )—क्षीरं पिबन्तीति विग्रहे क्षीरमुपपदे पाधातोः 'बहुलमाभीक्ष्ण्ये' इत्यनेन णिनिप्रत्यये उपपदसमासे सुब्लुकि 'आतो युक्' इति युकि णत्वे विभक्त्यादिकार्ये 'क्षीरपायिणः' इति ।

स्त्रीम्मन्यः ( ई० ४० )—स्त्रियमात्मानं मन्यते इति विग्रहे 'आत्ममाने खश्च' इति सूत्रेण खश्प्रत्यये शित्वात्सार्वधातुकसंज्ञायां श्यनि उपपदसमासे सुब्लुकि 'इच एकाचोऽम्प्रत्ययवच्च' इति सूत्रेण अमि 'वाऽम्शसोः' इति इयङि विभक्त्यादिकार्ये 'स्त्रियम्मन्यः' इति । इयङोऽभावे 'अमि पूर्वः' इति पूर्वरूपे 'स्त्रीम्मन्यः' इति ।

**समक्नः** ( ई० ४० )—सम्पूर्वादञ्च्धातोः क्तप्रत्यये 'यस्य विभाषा' इति इण्निषेधे 'अनिदिताम्' इति नलोपे 'अञ्चोऽनपादाने' इति निष्ठातकारस्य नत्वे चकारस्य कुत्वेन ककारे विभक्त्यादिकार्ये 'समक्नः' इति ।

**प्रमुदितः** ( ई० ४०, ४६ )—प्रोपसर्गात् मुद्धातोः निष्ठायां कर्मणि क्तप्रत्यये इटि 'उदुपधाद्भावादिकर्मणोरन्यतस्याम्' इति सूत्रेण विभाषया किन्निषेधे गुणाऽभावे विभक्त्यादिकार्ये 'प्रमुदितः' इति । किन्निषेधाऽभावपक्षे गुणे 'प्रमोदितः' इति ।

**द्युतितम्** ( ई० ५२ )—द्युत्धातोः निष्ठायां कर्मणि क्तप्रत्यये इटि 'उदुपधाद्–' इति विभाषया किन्निषेधे गुणाऽभावे विभक्त्यादिकार्ये 'द्युतितम्' इति । किन्निषेधाभावपक्षे गुणे 'द्योतितम्' इति ।

**दितः** ( ई० ४०, ५६ )—'दो' धातोः क्तप्रत्यये 'घुमास्थे'ति ईत्त्वं 'दो दद्घोः' इति दद्भावं चापवाद्य 'द्यतिस्यतिमास्थामितिकिति' इति सूत्रेण ओकारस्येकारान्तादेशे विभक्त्यादिकार्ये 'दितः' इति ।

**उपेयुषी** ( ई० ४० )—उपोपसर्गादिण्धातोर्लिटि तत्स्थाने क्वसुप्रत्यये द्वित्वादिकार्ये उगित्वान्ङीपि 'वसोः सम्प्रसारणम्' इति सम्प्रसारणे पूर्वरूपे उत्तरखण्डस्येकारस्य यणि आद्गुणे विभक्त्यादिकार्ये 'षत्वे 'उपेयुषी' इति । नन्वत्र 'उपेयिवाननाश्वाननूचानश्च' इति सूत्रेण निपातनात् 'नेड्वशि कृती'ति प्रतिप्रसूतो-बलादिलक्षण इट् कुतो नेति चेन्न, तन्निमित्तस्य वकारस्य सम्प्रसारणेन विनाशोन्मुखत्वेन 'अकृतव्यूहे'ति परिभाषया तन्निषेधात् । 'उपेयिवान्' इति सूत्रेण वलादिलक्षण इडेव प्रतिप्रसूयते नाऽपूर्वो विधीयते इत्यत्र 'उपेयुषः स्वामपि मूर्तिमग्र्याम्' इति वाक्यमेव मानम्, अन्यथा सम्प्रसारणविषयेऽपि अनेन निपातनादिटि यणादेशे 'उपेय्युषः' इत्यनिष्टापत्तिः स्यात् ।

**त्यागी** ( ई० ४० )—त्यज्धातोः 'संपृचानुरुधाङ्यमाङ्यसपरिसृसंसृजपरिदेविसंज्वरपरिक्षिपपरिरटपरिवदपरिदहपरिमुहदुषद्विषद्रुहदुहयुजाक्रीडविविचत्यजरजभजातिचरापचरामुषाभ्याहनश्च' इति सूत्रेण घिनुण्प्रत्यये अनुबन्धलोपे उपधावृद्धौ 'चजोः कु घिण्ण्यतोः' इति कुत्वे निष्पन्नात् 'त्यागिन्' शब्दात् सौ उपधादीर्घे सुलोपे नलोपे 'त्यागी' इति ।

**अजस्रम्** ( ई० ४० )—जसु मोक्षणे' नञ्पूर्वोऽयं धातुः । निपातनात् नञ्

समासे 'नलोपो नञः' इति नलोपे 'अजस्' इति । तस्मात् 'न
म्रदीपो रः' इति सूत्रेण रप्रत्यये कृदन्तत्वात् सौ तस्य अमादेशे पूर्वरूपे 'अजस्रम्'
इति । सततमित्यर्थः ।

**दार्वाघाटः** ( ई० ४६ )—दार्वा हन्तीति 'दार्वाघाटः' । दारुशब्दे उपपदे आङ्पूर्वाद्धन्धातोः 'दारावाहनोऽणन्तस्य च टः संज्ञायाम्' इति वार्तिकेन अण्प्रत्यये सन्नियोगशिष्टेन टकारश्चान्तादेशे वृद्धौ यणि हस्य कुत्वे कृदन्तत्वात् सौ तस्य रुत्वे विसर्गे 'दार्वाघाटः' इति ।

**सोमसुत्** ( ई० ४६, ५४ )—सोमे कर्मण्युपपदे 'सोमे सुञः' इति सूत्रेण भूते सुनोतेः क्विपि तस्य सर्वापहारे 'ह्रस्वस्ये'ति तुकि प्रातिपदिककार्ये सुलोपे 'सोमसुत्' इति ।

**विरेभितम्** ( ई० ४६ )—'क्षुब्धस्वान्तध्वान्तलग्नम्लिष्टविरिब्ध' इत्यादिसूत्रेण निपातनात्सिद्धं भवति ।

**धीतम्** ( ई० ४६ )—'धेट् पाने' अस्मात् क्तप्रत्यये 'घुमास्थे'तीत्वे 'दस्ति' इति सूत्रेण स्वादिकार्ये 'धीतम्' इति ।

**उपेयिवान्** ( ई० ४६ )—'उपेयिवाननाश्वाननूचानश्च' इति सूत्रेण निपातनात्सिद्धं भवति ।

**अद्मरः** ( ई० ४६ )—अद्धातोः 'सृघस्यदः क्मरच्' इत्यनेन क्मरच्प्रत्यये स्वादिकार्ये 'अद्मरः' इति ।

**तृष्णक्** ( ई० ४६ )—'तृष्धातोः 'स्वपितृषोर्नजिङ्' इत्यनेन नजिङ्प्रत्यये षत्वे कुत्वे स्वादिकार्ये 'तृष्णक्' इति ।

**वाचंयमः** ( ई० ५२ )—वाचं यच्छतीति विग्रहे 'वाचि यमो व्रते' इति खचि सुब्लुकि 'वाच् यम' इति स्थिते 'वाचंयमपुरन्दरौ' इति निपातनादमन्तत्वे विभक्तिकार्ये 'वाचंयमो मौनव्रती' इति ।

**क्षेमङ्करः** ( ई० ५१ )—क्षेमं करोतीति विग्रहे 'क्षेमप्रियमद्रेऽण् च' इति सूत्रेण अणि सुब्लुकि णित्वाद् वृद्धौ रपरत्वे विभक्तिकार्ये 'अरुर्द्विष-' इति मुमि तस्यानुस्वारे परसवर्णे 'क्षेमङ्कारः' इति । चकारादचि तु 'क्षेमङ्करः' इति ।

**चर्त्यम्** ( ई० ४५ )—चर्तुं योग्यमिति विग्रहे ऋहलोर्ण्यत्' इत्यनेन ण्यत्प्रत्यये गुणे कृदन्तत्वात् सौ तस्यामादेशे 'चर्त्यम्' इति । क्यप् तु न, ऋदुपधाच्चाऽक्लृपिचृतेः' इत्यत्र 'अक्लृपिचृतेः' इत्युक्तत्वात् ।

**उदेजयः** ( ई० ४५ )—उदेजयतीति 'उदेजयः' । उत्पूर्वादेज्धातोर्ण्यन्तात् 'अनुपसर्गाल्लिम्पविन्दधारिपारिवेद्युदेजिचेतिसातिसाहिभ्यश्च' इति सूत्रेण शप्रत्यये शपि गुणेऽयादेशे च कृते कृदन्तत्वात् सौ रुत्वे विसर्गे 'उदेजयः' इति ।

**द्यूनः** ( ई० ४५ )—दीव्यतीति 'द्यूनः' । अत्र दिव्धातोः निष्ठायां क्तप्रत्यये 'दिवोऽविजिगीषायाम्' इति निष्ठातस्य नत्वे 'च्छ्वोः शूडि'ति वस्य ऊठि यणि कृदन्तत्वात् सौ रुत्वे विसर्गे 'द्यूनः' इति ।

**प्रस्तीमः** ( ई० ३३, ४४, ५५ )—प्रपूर्वात् कृतात्त्वात् स्त्याधातोः निष्ठायां क्तप्रत्यये 'स्त्यः प्रपूर्वस्य' इति सम्प्रसारणे पूर्वरूपे च कृते 'हलः' इति दीर्घे 'प्रस्ती त' इति स्थिते 'प्रस्तोऽन्यतरस्याम्' इति निष्ठातकारस्य मकारे कृदन्तत्वात् सौ तस्य रुत्वे विसर्गे 'प्रस्तीमः' इति मत्वाभावे 'प्रस्तीतः' इति ।

**फणितम्** ( ई० ४५ )—'क्षुब्ध-स्वान्त-ध्वान्त-लग्न-म्लिष्ट-विरिब्ध—फाण्ट-बाढानि-मन्थ-मनस्-तमः-सक्ता-ऽविस्पष्ट-स्वरा-ऽनायास-भृशेषु' इति सूत्रेण अनायासे अर्थे निपातनात् फणेः क्तः, इडभावः, निष्ठातस्य टत्वं च भवति । ततश्च तस्याऽसिद्धत्वात् 'अनुनासिकस्य' इति दीर्घे 'फाण्टम्' इति निष्पद्यते । अनायास भिन्नेऽर्थे तु—निष्ठायां क्तप्रत्यये इटि 'फणितम्' इति बोध्यम् ।

**नदीष्णः** ( ई० ४४, ५५ )—नद्यां कुशलं स्नातीति 'नदीष्णः' । अत्र 'निनदीभ्यां स्नातेः कौशले' इति सूत्रेण 'स्नातेः' सस्य षत्वमिति विशेषः ।

**ददिवान्** ( ई० ४५ )—'डु दाञ् दाने' अस्माल्लिटि तत्स्थाने क्वसुप्रत्यये कृते द्वित्वादिकार्ये 'वस्वेकाजाद्घसाम्' इति इटि 'आतो लोप इटि च' इत्यालोपे नुमि 'अत्वसन्तस्य' इति दीर्घे संयोगान्तलोपे कृदन्तत्वात् सौ तस्य हल्ङ्यादिलोपे 'ददिवान्' इति ।

**जिष्णुः** ( ई० ४५ )—ग्लाजिस्थश्च ग्स्नुः' इति सूत्रेण ग्स्नुप्रत्यये सति 'जिष्णुः' इति भवति ।

**विदुरः** ( ई० ४५ )—'विदिभिदिच्छिदेः कुरच्' इति सूत्रेण कुरच्प्रत्यये सति 'विदुरः' इति।

**विन्दः** ( ई० ५५ )—'विदॢ लाभे' इति धातोः 'अनुपसर्गाल्लिम्पविन्द-' इति सूत्रेण शप्रत्यये 'शे मुचादीनाम्' इति नुमि विभक्तिकार्ये 'विन्दः' इति।

**ददः** ( ई० ५१, ५५, ५८ )—दाधातोः 'ददातिदधात्योर्विभाषा' इति सूत्रेण शप्रत्यये कृते शपि शपः श्लौ द्वित्वे अभ्यासह्रस्वत्वे च कृते 'आतो लोपः' इत्यालोपे विभक्तिकार्ये 'ददः' इति। पक्षे 'श्याद्व्यधास्रु—' इति णप्रत्यये 'आतो युक्-' इति युकि विभक्तिकार्ये 'दायः' इति भवति।

**प्रधः** ( ई० ५२ )—प्रोपसर्गात् धाधातोः 'दधातिदधात्योर्विभाषा' इत्यत्र 'अनुपसर्गात्' इत्युक्तत्वात् 'आतश्चोपसर्गे' इति कपि 'आतो लोपः' इत्यालोपे विभक्तिकार्ये 'प्रधः' इति।

**दायः** ( ई० ५८ )—दा धातोः 'ददातिदधात्योर्विभाषा' इति शप्रत्यये शपि श्लौ द्वित्वादिके कृते आतो लोपे विभक्तिकार्ये 'ददः' इति। पक्षे 'श्याद्व्यधास्नु-' इति शप्रत्यये 'आतो युक्-' इति युकि विभक्तिकार्ये 'दायः' इति च भवति।

**रजकः** ( ई० ५० )—रञ्जेः 'शिल्पिनि ष्वुन्' इति सूत्रेण ष्वुनि वोरकादेशे 'असि अके अने च रञ्जेर्नलोपो वाच्यः' इति नलोपे विभक्तिकार्ये 'रजकः' इति। स्त्रीत्वे तु षित्वात् ङीषि 'रजकी' इति।

'दंशसञ्जस्वञ्जां शपि' इति सूत्रस्थभाष्यमते तु नृति खनिभ्यामेव ष्वुन्, रञ्जेस्तु 'क्वुन् शिल्पिसंज्ञयोः-' इति क्वुनि सत्येव 'रजकः' इति भवति। एतन्मते स्त्रीत्वे टापि 'रजिका' इति। ननु तर्हि भाष्यमते क्वुनि कृते 'रजकी' इति कथमिति चेत्? पुंयोगे रजकस्य स्त्री 'रजकी' इति बोध्यम्।

**गाथकः** ( ई० ५६ )—'गस्थकन्' इति सूत्रे गैधातोः कृतात्वनिर्देशस्य 'गः' इति पञ्चम्यन्तम्। ततश्च गैधातोः उक्तसूत्रेण थकनि आत्वे विभक्तिकार्ये 'गाथकः' इति भवति।

**गायनः** ( ई० ५४ )—गैधातोः 'ण्युट् च' इति ण्युटि योरनादेशे अन्तरङ्गत्वात् वृद्धिं बाधित्वा 'आदेच उपदेशे' इत्यात्वे युकि विभक्तिकार्ये 'गायनः' इति। स्त्रीत्वे तु टित्वात् ङीपि 'गायनी' इति।

**लवकः** ( ई० ५५ )—लूधातोः 'प्रसृल्वः समभिहारे वुन्' इति वुनि वोरकि गुणेऽवादेशे विभक्तिकार्ये 'लवकः' इति ।

**जीवकः** ( ई० ५४ )—जीवतात् इति जीवकः । जीधातोः 'आशिषि च' इति सूत्राद् वुनि वोरकि विभक्तिकार्ये 'जीवकः' इति । आशास्यमानजीवनक्रियाश्रयः इत्यर्थः

**द्विष्ठः** ( ई० ५४ )—द्वाभ्यां तिष्ठतीति द्विष्ठः । द्विशब्दात् 'अम्बाम्बगोभूमि–' इति सूत्रेण स्थप्रत्यये सुब्लुकि सस्य षत्वे ष्टुत्वे विभक्तिकार्ये 'द्विष्ठः' इति ।

**प्रष्ठः**—( ई० ५४ )—प्रतिष्ठते इति प्रष्ठः, गौः—अग्रगामीत्यर्थः । प्रपूर्वकात् स्थाधातोः 'आतश्चोपसर्गे कः' इति कप्रत्यये आतो लोपे 'प्रस्थ' इति । अत्र सकारस्य इण्कवर्गाभ्यां परत्वाभावात् षत्वाप्राप्त्या 'प्रष्ठोऽग्रगामिनि' इत्यनेन निपातनात् षत्वे विभक्तिकार्ये 'प्रष्ठः' इति ।

**द्विपः** ( ई० ५२, ५४ )—द्वाभ्यां पिबतीति द्विपः । 'सुपि स्थः' इति सूत्रभाष्ये 'सुपि' इति योगो विभज्यते, सुपि उपपदे आदन्तात् कः स्यादिति तस्यार्थः । तेनात्र द्वाभ्यां पिबतीति विग्रहे अनेन कपि सुब्लुकि विभक्तिकार्ये उक्तं रूपं जातम् ।

**सर्वप्रदः** ( ई० ५४ )—सर्वं प्रददातीति सर्वप्रदः । प्रेत्युपसर्गपूर्वकात् दाधातोः 'प्रे दाज्ञः' इति सूत्रेण कर्मण्युपपदे कपि आतो लोपे विभक्तिकार्ये 'सर्वप्रदः' इति ।

**शक्तिग्रहः** ( ई० ५७ ) शक्तिं ग्राहयतीति विग्रहे ग्रह्धातोः 'शक्तिलाङ्गलाङ्कुश–' इति वार्तिकेन अचि विभक्तिकार्ये उक्तं रूपं सिद्धम् । अकित्त्वात् सम्प्रसारणं न ।

**पुरःसरः** ( ई० ५७ ) पुरं सरतीति विग्रहे 'पुरोऽग्रतोऽग्रेषु सर्तेः' इति सूत्रेण सर्तेः टप्रत्यये गुणे विभक्तिकार्ये 'पुरःसरः' इति ।

**प्रभाकरः** ( ई० ५४ )—प्रभां करोतीति विग्रहे 'दिवाविभाप्रभा–' इति सूत्रेण टप्रत्यये सुब्लुकि गुणे रपरत्वे विभक्तिकार्ये 'प्रभाकरः' इति ।

**सामगः** ( ई० ५५ )—सामं गातीति विग्रहे 'गापोष्टक्' इति टकि सुब्लुकि आत्वे आतो लोपे विभक्तिकार्ये उक्तं रूपं जातम् ।

**अंशहरः** ( ई० ५८ )—अंशस्य स्वीकर्तेत्यर्थः । अत्र 'हरतेरनुद्यमनेऽच्' इति सूत्रेण हृधातोः अचि सुब्लुकि गुणे रपरत्वे उक्तं रूपं सिद्धम् ।

**कर्णेजपः** ( ई० ५३ )—कर्णे जपतीति विग्रहे 'हस्तिसूचकयोरिति वक्तव्यम्' इति वार्तिकेन अचि 'तत्पुरुषे कृति बहुलम्' इति विभक्तेरलुकि विभक्तिकार्ये 'कर्णेजपः' इति सिद्धम् ।

**कर्मकरः** ( ई० ५४ )—कर्म करोतीति विग्रहे 'कर्मणि भृतौ' इति सूत्रेण कर्मशब्दे उपपदे कृधातोः टप्रत्यये सुब्लुकि गुणे रपरत्वे विभक्तिकार्ये 'कर्मकरः' इति । वेतनं गृहीत्वा यः परार्थं कर्म करोति सः कर्मकरः, भृतकः इत्युच्यते । कर्मकारोऽन्यः ।

**स्तम्बकरिः** ( ई० ५६ )—स्तम्बं ( तृणनिचयं ) करोतीति विग्रहे 'स्तम्बशकृतोरिन्' इति सूत्रस्थ-'व्रीहिवत्सयोरिति वाच्यम्' इति वार्तिकेन स्तम्बेति कर्मण्युपपदककृधातोः इन्प्रत्यये सुब्लुकि गुणे रपरत्वे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**उग्रम्पश्यः** ( ई० ५७ )—उग्रं पश्यतीति विग्रहे 'उग्रंपश्येरंमदपाणिन्धमाश्च' इति सूत्रेण उग्रमिति क्रियाविशेषणोपपदकदृश्धातोः खशि सुब्लुकि दृशेः पश्यादेशे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**सर्वंसहः** ( ई० ५३ )—सर्वमित्युपपदकसह धातोः 'पूःसर्वयोर्दारिसहोः' इति सूत्रेण खचि सुपो लुकि 'अरुर्द्विषदजन्तस्य मुम्' इति मुमि विभक्तिकार्ये उक्तं रूपं जातम् ।

**अन्यादृशः** ( ई० ५३ )—अन्यं पश्यतीति विग्रहे 'समानान्ययोश्चेति वाच्यम्' इति वार्तिकेन क्विनि क्विनः सर्वापहारे सुपो लुकि 'आ सर्वनाम्नः' इत्यात्त्वे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**जनौः** ( ई० ५३ )—जनानवतीति विग्रहे अवधातोः 'क्विप् च' इति क्विपि क्विपः सर्वापहारे सुब्लुकि अकारवकारयोरुठि 'जन ऊ' इति स्थिते 'एत्येधत्यूठ्सु' इति वृद्धौ स्वादिकार्ये 'जनौः' इति ।

**शंस्थः** ( ई० ५५ )—शमित्यव्ययं सुखे वर्तते । तत्पूर्वकात् स्थाधातोः 'स्थः च कः' इति सूत्रेण कप्रत्यये आतो लोपे विभक्तिकार्ये 'शंस्थः' इति ।

**श्येनचित्** ( ई० ५० )—श्येन इव चितः इति विग्रहे 'कर्मण्यग्न्याख्यायाम्' इति सूत्रेण क्विपि तस्य सर्वापहारे 'ह्रस्वस्य पिति कृति तुक्' इति तुकि विभक्त्यादिकार्ये 'श्येनचित्' इति। श्येनशब्दः श्येनसदृशे लाक्षणिकः, श्येनाकृतिकः इति यावत्।

**अदृष्टजः** ( ई० ५५ )—अदृष्टाज्जातः इति विग्रहे 'पञ्चम्यामजातौ' इति जनेर्डप्रत्यये सुब्लुकि विभक्तिकार्ये उक्तं रूपं सिद्धम्।

**सिनो ग्रासः** ( ई० ५६ )—'षिञ् बन्धने' अस्मात् क्तप्रत्यये धातोः षकारस्य सकारे 'सिनोतेर्ग्रासकर्मकर्तृकस्य' इति वार्तिकेन निष्ठातस्य नत्वे विभक्तिकार्ये 'सिनः' इति।

**भुजो भुग्नः** ( ई० ५८ )—भुज्धातोः क्तप्रत्यये कृते नत्वस्यासिद्धत्वात् जस्य पूर्वं कुत्वे ततः 'ओदितश्च' इति निष्ठातस्य नत्वे विभक्तिकार्ये 'भुग्नः' इति।

**उच्छूनः** ( ई० ५५ )—उत्पूर्वात् 'टु ओ श्वि' इति धातोः क्तप्रत्यये 'वचिस्वपि–' इति यजादित्वात् सम्प्रसारणे पूर्वरूपे 'श्वीदितः–' इति इण्निषेधे 'हलः' इति दीर्घे 'ओदितश्च' इति निष्ठातस्य नत्वे तस्य श्चुत्वे शस्य छत्वे विभक्तिकार्ये 'उच्छूनः' इति।

**पक्वः** ( ई० ५८ )—पच्धातोः क्तप्रत्यये कृते 'पचो वः' इति निष्ठातस्य वत्वे वत्वस्यासिद्धत्वात् चस्य कुत्वे विभक्तिकार्ये 'पक्वः' इति।

**पूरितः** ( ई० ५४ )—'वा दान्तशान्तपूर्णदस्तस्पष्टच्छन्नज्ञप्ताः' इति विकल्पपक्षे क्तप्रत्यये कृते इटि विभक्तिकार्ये 'पूरितः' इति भवति।

**इद्धः** ( ई० ५५ )—अत्र 'ञिइन्धी' इति धातोः 'ञीतः क्तः' इति क्तप्रत्यये कृते 'श्वीदितो निष्ठायाम्' इति इण्निषेधो भवतीति विशेषः।

**अर्चितः** ( ई० ५५ )—'अर्च् पूजायाम्' इति धातोः 'मतिबुद्धिपूजार्थेभ्यश्च' इति क्तप्रत्यये इटि विभक्तिकार्ये 'अर्चितः' इति।

**पवमानः** ( ई० ५५ )—अत्र 'पूङ्यजोः शानन्' इति सूत्रेण शानचि गुणे अवादेशे 'आने मुक्' इति मुकि विभक्तिकार्ये 'पवमानः' इति।

**अधीयन्** ( ई० ५५ )—अधिपूर्वकात् 'इङ्' धातोः 'इङ्धार्योः शत्रकृच्छ्रिणि'

प्रत्यये इयङि दीर्घे उगित्वान्नुमि संयोगान्तलोपे 'विभक्तिकार्ये

भविष्णुः ( ई० ५४ )—भवितुं शीलमस्येति विग्रहे 'भुवश्च' इति सूत्रेण इष्णुच्प्रत्यये गुणे अवादेशे नस्य णत्वे विभक्तिकार्ये 'भविष्णुः' इति ।

योगी ( ई० ५४ )—युज्धातोः 'सम्पृचानुरुधाङ्य-' इति सूत्रेण घिनुण्-प्रत्यये उपधागुणे 'चजोः-' इति जस्य कुत्वे उपधादीर्घे कृदन्तत्वात् सौ हल्ङ्या-दिलोपे नलोपे 'योगी' इति ।

प्रवासी ( ई० ५६ )—प्रोपसर्गात् वस्धातोः 'प्रे लपसृद्रुमथवदवसः' इति सूत्रेण ताच्छील्यादिष्वर्थेषु घिनुण्प्रत्यये उपधावृद्धौ' 'प्रवासिन' इति, तस्मात् कृद-न्तत्वात् सौ 'सर्वनामस्थाने चाऽसम्बुद्धौ' इति दीर्घे सुलोपे नलोपे 'प्रवासी' इति ।

ब्रह्महा ( ई० ५७ )—ब्रह्म हन्तीति विग्रहे 'ब्रह्मभ्रूणवृत्रेषु क्विप्' इति क्विपि क्विपः सर्वापहारे सुब्लुकि कृदन्तत्वात् सौ 'इनहन-' इति दीर्घे हल्ङ्यादिना सुलोपे नलोपे 'वृत्रहा' इति ।

इत्वरः ( ई० ५६ )—इण्धातोः 'इण्नशजिसर्तिभ्यः क्वरप्' इति सूत्रेण ताच्छी-ल्याद्यर्थे क्वरपि 'ह्रस्वस्य पिति कृति तुक्' इति तुकि विभक्तिकार्ये 'इत्वरः' इति ।

शशारुः ( ई० ५६ )—'शॄ हिंसायाम्' इति धातोः 'शॄवन्द्योरारुः' इति सूत्रेण ताच्छील्याद्यर्थे आरुप्रत्यये गुणे रपरत्वे विभक्तिकार्ये 'शशारुः' इति ।

नेमिः ( ई० ५३ )—नम्धातोः 'भाषायां धाञ्कृसृगमिजनिनमिभ्यः' इति सूत्रेण किप्रत्यये लिड्वद्भावे च जाते सति द्वित्वे एत्वाभ्यासलोपयोः कृतयोः विभ-क्तिकार्ये 'नेमिः' इति ।

पूः ( ई० ५६, ५७ )—पॄधातोः 'भ्राजभासधुर्वि—' इति सूत्रेण क्विपि क्विपः सर्वापहारे 'उदोष्ठ्यपूर्वस्य' इत्युत्वे रपरत्वे 'पुर्' इति, तस्मात् कृदन्तत्वात् सौ सोर्हल्ङ्यादिलोपे 'र्वोरि'ति दीर्घे रेफस्य विसर्गे 'पूः' इति जातम् ।

विभुः ( ई० ५८ ) अत्र 'विप्रसंभ्यो ड्वसंज्ञायाम्' इति सूत्रेण वीत्युपसर्गात् भुवो डुप्रत्यये डित्त्वसामर्थ्यादभस्यापि टेर्लोपे विभक्तिकार्ये 'विभुर्व्यापकः' इति ।

पत्त्रम् ( ई० ५४ )—पत्धातोः 'दाम्नीशस-' इति सूत्रेण करणेऽर्थे

ष्ट्रनि अनुबन्धलोपे 'तितुत्रतथसिसुरकसेषु च' इति सूत्रेण इण्निषेधे विभक्तिकार्ये 'पत्त्रम्' इति ।

**अरित्रम्** ( ई० ५४ )—'ऋधातोः 'अर्तिलूधूसूखनसहचर इत्रः' इति सूत्रेण इत्रप्रत्यये गुणे रपरत्वे विभक्तिकार्ये 'अरित्रम्' इति ।

**पवित्रम्** ( ई० ४२, ५६ )—पूयतेऽनेन आज्यमिति विग्रहे पूञ्धातोः 'पुवः संज्ञायाम्' इति सूत्रेण करणेऽर्थे इत्रप्रत्यये गुणेऽवादेशे विभक्तिकार्ये 'पवित्रम्' इति सिद्धम् ।

**'सुप्यजातौ णिनिस्ताच्छील्ये' इति सूत्रे वृत्तिकारभाष्यकारयोः को मतभेदः**—'सत्सूद्विष' इति सूत्रे उपसर्गेऽपीत्युक्तत्वादुपसर्गभिन्नस्यैव सुपो लाभायास्मिन्सूत्रे पुनः सुब्ग्रहणमिति वृत्तिकारादीनां मतम् । भाष्यकारास्तु 'सत्सूद्विष०' इति सूत्रे 'सुपि स्थः' इत्यतः सुपीत्यनुवर्तते । तच्चोपसर्गेतरपरम् , उपसर्गेऽपीति पृथगुक्तेः । तदिहानुवर्तमानमर्थाधिकारादुपसर्गेतरपरमेव स्यादतः पुनः सुब्ग्रहणमनाश्रितोपसर्गानुपसर्गविशेषस्य सुबन्तमात्रस्य ग्रहणार्थमित्याहुः । तेन 'स बभूवोपजीविनाम्' इत्यादिप्रयोगैः सुबन्तमात्रे णिनिरिति सङ्गच्छते ।

**'निष्ठायां सेटि' इति सूत्रे सेड्ग्रहणस्य प्रयोजनं**—ननु अनिटि 'णेरनिटि' इति सिद्धत्वात् सेडर्थमेवेदं सूत्रं भविष्यतीति चेद् ? न । कालावधारणार्थमस्यावश्यकत्वात् । यदि निष्ठा सेट्त्वमापद्येत, तदैव णिलोपो न तु ततः प्रागिति । अन्यथा ण्यन्तात्कृधातोः क्तप्रत्यये नित्यत्वादिडागमात्पूर्वमेव णिलोपे तत 'एकाच उपदेशेऽनुदात्तात्' इति इटः प्रतिषेधः स्यात । एतदपि फलं पूर्वस्मादपि विधौ स्थानिवद्भावमनाश्रयणे, तदाश्रये तु नेदं प्रयोजनम् । भाष्ये तु सूत्रमिदं प्रत्याख्यातम् । 'णेरध्ययने' इति सूत्रे योगविभागात् वृत्तमिति निपातनस्य नियमार्थत्वेन वृत्तादन्यत्र कारितमित्यादौ णिलोपाभावविज्ञानात् ।

**धृषिशसी वैयात्ये**—धृषेरादित्त्वात् 'आदितश्च' इत्यनेन शसुधातोश्चोदित्त्वात् 'यस्य विभाषा' इति सूत्रेणेण्निषेधे सिद्धे 'धृषिशसी वैयात्ये' इदं सूत्रम् अविनये एव तौ अनिटौ स्त इति नियमयति । एवञ्चान्यत्रार्थे इटि सति 'धर्षितः विशसित' इति रूपद्वयसिद्धिः । नच धृषेर्भावादिकर्मणोरर्थयोः प्रत्यये 'विभाषा भावादिकर्मणोः' इति पाक्षिके इटि प्राप्ते तन्निषेधार्थं विध्यर्थमेवास्तु इति वाच्यम् ; वैयात्येऽर्थे भावादिकर्मणोर्धृषेर्विधानाभावात् । इत्यश्च नियमार्थमेवेति वृत्तिकारादयः । हरदत्त-

स्तु–धृषिधातौ आकारग्रहणस्य फलाभावादकरणेन 'आदितश्च' इति सूत्राप्रवृत्तौ इटः प्राप्तौ सत्यां तन्निषेधार्थं सूत्रं विध्यर्थमेवेत्याह। तन्मते—वैयात्येऽर्थे इड्रहितप्रयोगोऽन्यत्रार्थे चेट्सहितप्रयोगः सिद्धः। पाणिनिना आकारग्रहणं कृतमिति भावादिकर्मणोः प्रत्यये जाते 'विभाषा भावादिकर्मणोः' इति प्राप्तस्येटो निषेधार्थं सूत्रं विध्यर्थमेवेति माधवः। एवं च वैजात्येऽर्थे 'धृष्टम्' इत्येकं रूपम्। अन्यत्रार्थे च धृष्टम्, धर्षितम्, इति रूपद्वयं सिद्धम्। अयमेव पक्षो ज्यायानिति तत्त्वविदः।

कथं 'लोध्रद्रुमं सानुमतः प्रफुल्लम्'—ननु 'अनुपसर्गात्फुल्लक्षीब' इत्यादिनोपसर्गाभावे निष्ठाऽवयवतकारस्य लत्वं निपात्यते। अत्र तूपसर्गसत्वेन लत्वनिपातनं दुर्लभमिति चेन्न, 'फुल्ल-विकसने' इति धातोः पचाद्यचि रूपस्य सिद्धत्वात्। न चैवं सत्युपसर्गे फुल्लधातोः रूपसिद्धौ सूत्रं व्यर्थमेवेति वाच्यम्। उपसर्गाभावे फुल्तायनिष्टवारणेन सूत्रस्य सफलत्वात्। फुल्लवानितिरूपसिध्यर्थञ्च 'अनुपसर्गात्फुल्लक्षीब' इत्यादिसूत्रमावश्यकमिति सारांशः।

धृष्टः ( ई० ५१ )—अयम्भावः, धृषेरादित्त्वात् 'आदितश्च' इति शसुधातोश्चोदित्त्वात् 'यस्य विभाषा' इति सूत्रेणेण्निषेधे सिद्धे 'धृषिशसी वैयात्ये' इति सूत्रमविनये एवैतौ अनिटौ स्तः इति नियमयति। एवञ्चान्यार्थे इटि सति धर्षितः विशसित इति रूपद्वयसिद्धिः फलम्। नच धृषेर्भावादिकर्मणोरर्थयोः प्रत्यये 'विभाषा भावादिकर्मणोः' इति पाक्षिके इटि प्राप्ते तन्निषेधार्थं विध्यर्थमेवास्तु इति वाच्यम्; वैयात्येऽर्थे भावादिकर्मणोर्धृषेर्विधानाभावात्। एवञ्च नियमार्थमेवेति काशिकाकारमतम्। धृषिधातौ आकारग्रहणस्य फलाभावादकरणेन 'आदितश्च' इति सूत्राप्रवृत्तौ इटः प्राप्तौ सत्यां तन्निषेधार्थं सूत्रं विध्यर्थमेवेति हरदत्तमतम्। इत्थञ्च वैयात्येऽर्थे इड्रहितप्रयोगोऽन्यत्रार्थे चेट्सहितप्रयोगः सिद्धः। तथा च—काशिकाकारहरदत्तयोर्मते फलं तुल्यम्भवति। माधवस्तु पाणिनिना आकारग्रहणं कृतमिति भावादिकर्मणोः प्रत्यये जाते विभाषा 'भावादिकर्मणोः' इति प्राप्तस्येटो निषेधार्थं सूत्रं विध्यर्थमेवेति वदति। तथाच—वैयात्येऽर्थे धृष्टमित्येकं रूपम्, अन्यत्रार्थे च धृष्टम्, धर्षितमिति रूपद्वयं सिद्धम्। अयमेव पक्षो ज्यायान्। वैयात्ये भावादिकर्मणोः धृषेः क्तप्रत्ययो न भवतीत्यत्र प्रमाणाभावात्।

दत्तः ( ई० ५४ )—न च दत् इति तान्तादेशपक्षे विदत्तमित्यादौ 'दस्ति' इति सूत्रेणोपसर्गस्य दीर्घः स्यादिति वाच्यम्; तकारादौ प्रत्यये परे तद्विधानात्।

अत्र तु दकारादिप्रत्ययः । एवं ददिति दान्तादेशे दध्' इति धान्तादेशे वा न काप्यनुपपत्तिः । नच दान्तादेशे 'रदाभ्याम्' इति नत्वं, धान्तपक्षे च 'झषस्तथो-र्धोऽधः' इति तकारस्य धत्वञ्च स्यादिति वाच्यम् ; सन्निपातपरिभाषाविरोधाद्धातु-तकारयोस्सम्बन्धेन जायमानो ददादेशो दधादेशो वा तयोः सम्बन्धविघातके नत्वे धत्वे च कर्त्तव्ये कारणं न भवतीति सारांशः ।

यदा प्रादय उपसर्गाः सन्ति तदा 'अच उपसर्गात्तः' इति तादेशे प्रत्तः, अवत्तः, इत्यादिप्रयोगाः सिध्यन्ति । अथ च यदा प्रादय उपसर्गप्रतिरूपकाः सन्ति तदा प्रदत्तमवदत्तमित्यादिप्रयोगाः सिध्यन्तीति अवदत्तमित्यादिवचनं निस्यूत-मिति तत्त्वम् ।

जग्धः ( ई० ५१ ) अत्र क्तप्रत्यये कृते सति 'अदो जग्धिर्ल्यप्ति किति' इति अदो जग्ध्यादेशे 'जग्ध् त' इति स्थिते 'झषस्तथो'रिति तस्य धत्वे 'झरो झरि-' इति धलोपे विभक्तिकार्ये 'जग्धः' इति ।

यायावरः—यायायत इति विग्रहे 'यश्च यङः' इति वरचि 'अतो लोप' इत्य-कारलोपे 'लोपो व्योर्वलि' इति यलोपे रूपं सिद्धम् । नचात्राल्लोपस्य स्थानिवद्भावेन वल्परत्वाभावाद् यलोपो न स्यादिति वाच्यम् ; 'न पदान्तद्विर्वचनवरेयलोप' इत्यादिना स्थानिवत्त्वनिषेधात् । एवमेव अल्लोपस्य स्थानिवत्त्वेनार्धधातुकत्वमाश्रित्य 'आतो लोप इटि च' इत्याकारलोपोऽपि न, 'वरे लुप्तं न स्थानिवत्' इति निषेधात् ।

जग्मिवान् ( ई० ५२ )—गम्धातोः 'छन्दसि भूते लिटः क्वसुश्चादेशः स्यात्' इत्यर्थक 'क्वसुश्च' इति सूत्रेण लिटः क्वसुप्रत्यये कृते 'लिटि धातोः-' इति द्वित्वेऽभ्यासत्वे हलादिशेषे 'कुहोश्चुः' इति गस्य जत्वे 'विभाषा गमहनविदविशाम्' इति इटि कृदन्तत्वात् सौ उगित्वान्नुमि उपधादीर्घे हल्ङ्यादिना सुलोपे संयोगान्त-लोपे उक्तं रूपं सिद्धम् ।

क्षमी (ई० ५७)—'क्षमू सहने' इति धातोः 'शमित्यष्टाभ्यो घिनुण्'इति सूत्रेण ताच्छील्यार्थे घिनुणि 'नोदात्तोपदेशस्य मान्तस्याऽनाचामेः' इत्युपधावृद्धिनिषेधे कृदन्तत्वात् सौ उपधादीर्घे हल्ङ्यादिना सुलोपे नलोपे च जाते 'क्षमी'इति सिद्धम् ।

न च घिनुण्प्रत्यये उकारः उच्चारणार्थः इति काशिका, अनुबन्धः इति भाष्यम् , इत्युक्तं मूले । ततश्चात्र भाष्यमते 'उगिदचाम्-' इति नुम् कुतो नेति

वाच्यम्, 'नपुंसकस्य झलचः' इति सूत्रात् झल्ग्रहणमपकृष्य झलन्तानामेव तद्विधानात्। स्पष्टं चेदं प्रकृतसूत्रे भाष्ये।

विलाषी (ई० ५७)—'अपे च लषः' इति सूत्रे चकारोपादानात् 'अपे वौ च उपपदे लषेर्घिनुण्' इति सूत्रार्थो भवति। ततश्च विपूर्वकात् लष्धातोः घिनुणि णित्वादुपधावृद्धौ कृदन्तत्वात् सौ उपधादीर्घे सुलोपे नलोपे उक्तं रूपं सिद्धम्।

शब्दनः (ई० ५७)—'शब्द शब्दने', चुरादिः, शब्दनं-शब्दोच्चारणम्। धात्वर्थोपसंग्रहाद् अकर्मकोऽयं धातुः। ततश्च अस्मात् 'चलनशब्दार्थादकर्मकाद्युच्' इति सूत्रेण युचि योरनादेशे विभक्तिकार्ये 'शब्दनः' इति।

भूषणः (ई० ५७)—भूष्धातोः 'क्रुधमण्डार्थेभ्यश्च' इति सूत्रेण ताच्छील्यार्थे युचि प्रत्यये योरनादेशे णत्वे विभक्तिकार्ये 'भूषणः' इति सिद्धम्।

धीः (ई० ५७)—ध्यैधातोः 'ध्यायतेः सम्प्रसारणं च' इति वार्तिकेन क्विपि सम्प्रसारणे च कृते पूर्वरूपे 'हलः' इति दीर्घे विभक्तिकार्ये 'धीः' इति सिद्धम्।

प्रतिभूः (ई० ५७)—प्रतिपूर्वकभूधातोः 'भुवः संज्ञान्तरयोः' इति सूत्रेण क्विपि क्विपः सर्वापहारे विभक्तिकार्ये 'प्रतिभूः' इति। धनिकाधमर्णयोरन्तरे विश्वासार्थं यस्तिष्ठति स 'प्रतिभूः' इति।

शम्भु (ई० ५७)—शं = सुखं, भवति—उत्पादयतीत्यर्थे 'मितद्र्वादिभ्य उपसंख्यानम्' इति वार्तिकेन भूधातोः डुप्रत्यये सुब्लुकि विभक्तिकार्ये 'शम्भुः' इति।

ब्रह्मभ्रूणवृत्रेषु क्विप् (ई० ५०)—ब्रह्मादिषूपपदेषु भूते वर्तमानाद्धन्तेः क्विप्, इति सूत्रार्थः। ननु 'क्विप् च' इत्येव क्विप् सिद्धे सूत्रमिदं किमर्थमिति चेद्, उच्यते—ब्रह्मादिष्वेव, हन्तेरेव, भूते एव, क्विबेवेति चतुर्विधोऽत्र नियमः, इति मूले। तत्र 'ब्रह्मादिष्वेव हन्तेरि'ति नियमात् 'पुरुषं हतवान्' इत्यत्र न क्विप्। 'ब्रह्मादिषु हन्तेरेवे'ति नियमात् 'ब्रह्म अधीतवान्' इत्यत्र न क्विप्। 'ब्रह्मादिहन्तेर्भूतकाले एवे'ति नियमात् 'ब्रह्म हन्ति, हनिष्यति वे'त्यत्र न क्विप्। 'क्विबेवे'ति नियमात् 'ब्रह्म हतवान्' इत्यत्र अण् न, किन्तु प्रकृतसूत्रेण क्विबेवेति। एतत्सर्वं काशिकाकारमतम्। भाष्ये तु—'ब्रह्मादिष्वेव, क्विबेवेति' द्विविधनियम एव दृश्यते। तन्मते-हन्तेरेव, भूते एवेति मतद्वयमुपेक्ष्यमिति तत्त्वविदः।

इति पूर्वकृदन्तप्रकरणम्।

# अथ उणादिप्रकरणम्

**फल्गु** ( ई० ४८ ) 'फल् निष्पत्तौ' अस्मात् 'फलिपाटिनमिमनिजनां गुक्-पटिनाकिधतश्च' इत्युणादिसूत्रेण गुक्प्रत्ययो भवति।

**अजिरम्** ( ई० ४८ )—'अज गतिक्षेपणयोः' अस्मात् 'अजिरशशिरशिथिलस्थिरस्फिरस्थविरखदिराः' इत्युणादिसूत्रेण किरचि प्रकृतेर्वीभावाभावो निपात्यते।

**स्थालम्** ( ई० ४८ )—स्थाधातोः 'स्थाचतिमृजेरालज्वालञालीयचः' इत्युणादिसूत्रेण आलच् प्रत्ययो भवति।

**करभः** ( ई० ४८ )—'कॄ विक्षेपे' अस्मात् 'कॄशॄशलिकलिगर्दिभ्योऽभच्' इत्युणादिसूत्रेण अभच्प्रत्ययो भवति।

**मञ्जूषा** ( ई० ४८ )—'टु मस्जी शुद्धौ' अस्मात् 'मस्जेर्नुम् च' इत्युणादिसूत्रेण ऊषन्प्रत्ययो नुम् च भवति।

**पुरोधाः** ( ई० ४८ )—पुरःशब्दे उपपदे धाञ्धातोः 'पुरसि च' इत्युणादिसूत्रेण असिप्रत्ययो भवति।

इत्युणादिप्रकरणम्।



# अथ उत्तरकृदन्तप्रकरणम्

**संज्ञासु** ( ई० ५४, ५७ )—'उणादयो बहुलम्' इत्युक्त्वा 'केचिदविहिता अप्यूह्याः' इत्युक्तं मूले, तदेव प्रतिपादयति-संज्ञास्विति। संज्ञासु = संज्ञाशब्देषु ( डित्थ-डवित्थादिषु ) धातुरूपाणि ऊह्यानि, ततः परं प्रत्ययाश्च ऊहनीयाः = कल्पनीयाः, प्रत्ययेष्वपि गुणवृद्ध्यभावादिकार्यं दृष्ट्वा अनुबन्धम् = ञित्-णित्-कित्ङिदित्याद्यनुबन्धं, विद्यात = कल्पयेत, एतत् = एतावदेव, उणादिषु, शास्त्रम्= अनुशासनमस्तीत्यर्थः। उदाहरणं यथा-'ऋफिड्डः' इति। अत्र ऋधातुः प्रकृतिः, तस्मात् फिड्डः प्रत्ययः, ततो गुणाऽभावदर्शनात् प्रत्ययस्य कित्त्वमूह्यते।

**द्रष्टुम्** ( ई० ४१, ४२, ५० )—दृश्धातोः 'तुमुन्ण्वुलौ क्रियायां क्रियार्थायाम्' इति तुमुनि अनुबन्धलोपे 'सृजिदृशोर्झल्यमकिति' इति अमि 'द ृ अ श् तुम्'

इति स्थिते यणि 'व्रश्चभ्रस्ज—' इति षत्वे ष्टुत्वे मान्तत्वात् 'कृन्मेजन्तः' इत्यव्ययत्वात् सुब्लुकि 'द्रष्टुम्' इति। कृष्णं द्रष्टुं याति-कृष्णकर्मकं यद्भविष्यद् दर्शनं तत्प्रयोजकं गमनमित्यर्थः। अत एव 'न लोके'ति षष्ठी नेति।

**पाकः** ( ई० ३० )—पच्धातोः 'भावे' इति घञि अनुबन्धलोपे उपधावृद्धौ 'चजोः कुः घिण्ण्यतोः' इति चस्य कुत्वे विभक्तिकार्ये 'पाकः' इति।

**रागः** ( ई० ४१, ५०, ५५ )—रञ्ज्धातोः 'अकर्तरि च कारके संज्ञायाम्' इति घञि अनुबन्धलोपे 'घञि च भावकरणयोः' इति रञ्जेर्नलोपे 'च जोः कु घिण्ण्यतोः' इति जस्य कुत्वे उपधावृद्धौ विभक्तिकार्ये 'रागः' इति।

**निकायः** ( ई० ४८ )—निपूर्वकात् चिधातोः 'निवासचितिशरीरोपसमाधानेष्वादेश्च कः' इति घञि तस्य कत्वे अनुबन्धलोपे वृद्धौ आयादेशे विभक्तिकार्ये 'निकायः' इति।

**पक्त्रिमम्** ( ई० २९ )—पाकेन निर्वृत्तं पक्त्रिमम्। 'डुपचष् पाके' इति धातोः क्त्रिप्रत्यये मपि विभक्तिकार्ये 'पक्त्रिमम्' इति।

**उप्त्रिमम्** ( ई० ४१, ४४, ५१ )—वापेन निर्वृत्तम् 'उप्त्रिमम्'। 'डुवप् बीजसन्ताने' इत्यस्माद्धातोः 'ड्वितः क्त्रिः' इति क्त्रौ 'क्त्रेर्मम्नित्यम्' इति निर्वृत्तेर्थे मपि अनुबन्धलोपे 'वचिस्वपि-' इति सम्प्रसारणे पूर्वरूपे विभक्तिकार्ये तत सिद्धम्।

**वेपथुः** ( ई० ३२ )—'टुवेपृ कम्पने' इति धातोः 'द्वितोऽथुच्' इत्यथुचि अनुबन्धलोपे विभक्तिकार्ये तत्सिद्धिः।

**यज्ञः** ( ई० ३६ )—यज्धातोः 'यजयाचयतविच्छप्रच्छरक्षो नङ्' इति नङि अनुबन्धलोपे नस्य श्चुत्वेन ञकारे विभक्तिकार्ये 'यज्ञः' इति।

**उपाधिः** ( ई० ३७ )—उपधीयतेऽनेनेति 'उपाधिः'। उप-आङ्पूर्वकात् घुसंज्ञकधाधातोः 'उपसर्गे घोः किः' इति किप्रत्यये कित्त्वात् 'आतो लोपः' इत्यालोपे विभक्तिकार्ये 'उपाधिः' इति।

**कीर्णिः**—कॄधातोः 'स्त्रियां क्तिन्' इति क्तिनि अनुबन्धलोपे 'ॠत इद्धातोः' इतीत्वे रपरत्वे 'हलि चे'ति दीर्घे 'ॠल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः' इति निष्ठावद्भावात् तस्य नत्वे णत्वे विभक्तिकार्ये 'कीर्णिः' इति।

**ऊतियूति** ( ई० ५५ )—एते स्त्रियां क्तिन्नन्ता निपात्यन्ते, इत्यर्थः । तथाहि–'अव रक्षणे' इति धातोः क्तिनि तस्य निपातनादात्त्वे 'ज्वरत्वर–' इत्यकारवकारयोरूठि 'ऊतिः' इति । युधातोर्जुधातोर्वा क्तिनि निपातनाद्दीर्घे यूतिः, जूतिरिति च । 'षोऽन्तकर्मणि' इत्यस्मात् क्तिनि 'धात्वादेः' इति सत्वे 'आदेच उपदेशेऽशिति' इत्यात्वे 'द्यतिस्यति–इतीत्वे प्राप्ते निपातनात्तदभावे सातिरिति । अथवा 'सन्' धातोः क्तिनि 'जनसन–' इत्यात्वम् । अत्र क्तिन उदात्तत्वं निपात्यते । हनः क्तिनि नकारस्य निपातनादित्त्वे 'आद्गुणः' इति गुणे हेतिरिति । अथवा हिधातोः क्तिनि निपातनाद् गुणः । ण्यन्तकृतधातोः 'ण्यासश्रन्थो युच्' इति युचं प्रबाध्य निपातनात् क्तिनि इत्वे रपरत्वे दीर्घे 'झरो झरि' इति तलोपे कीर्तिरिति ।

**चिकीर्षा** ( ई० ३७ )—सन्नन्तात् 'चिकीर्ष' धातोः 'अप्रत्ययात्' इत्यप्रत्यये 'अतो लोपः' इति सनोऽकारलोपे कृदन्तत्वात्प्रातिपदिकत्वेन स्त्रीत्वे टापि सवर्णदीर्घे हल्ङ्यादिना सुलोपे उक्तं रूपं सिद्धम् ।

**कारणा** ( ई० ३२ )—कृधातोर्णिचि वृद्धौ 'कारि' इत्यस्मात् 'ण्यासश्रन्थो युच्' इति युचि योरनादेशे णिलोपे णत्वे टापि विभक्तिकार्ये तत्सिद्धिः ।

**अवतारः, अवस्तारः** ( ई० ३० )—उभयत्र 'अवे तृस्त्रोर्घञ्' इति घञि वृद्धौ रपरत्वे स्वाद्युत्पत्तिः ।

**अपामार्गः** ( ई० ३२ )—अपपूर्वान्मृज्धातोः 'हलश्च' इति घञि 'मृजेर्वृद्धिः' इति वृद्धौ 'चजोः कु–' इति कुत्वे 'उपसर्गस्य घञ्यमनुष्ये बहुलम्' इति दीर्घे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**दुष्करः** ( ई० ५२ )—दुःखार्थकदुस्पूर्वात् कृञ् धातोः 'ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल्' इति कृच्छ्रार्थे खलि अनुबन्धलोपे गुणे रपरे 'इदुदुपधस्य चाप्रत्ययस्य' इति सस्य षत्वे कृदन्तत्वात् सौ सस्य रुत्वे विसर्गे उक्तं सिद्धम् ।

**सुपानः** ( ई० ३१ )—सुष्ठु पीयते इति सुपानः । सुपूर्वकात् पाधातोः 'ईषद्दुस्सुषु–' इति प्राप्तं खलं प्रबाध्य 'आतो युच्' इति युचि अनुबन्धलोपे 'युवोरनाकौ' इति योरनादेशे सवर्णदीर्घे विभक्तिकार्ये 'सुपानः' इति ।

**शमित्वा** ( ई० ३४ )—शम्धातोः क्त्वाप्रत्यये अनुबन्धलोपे 'उदितो वा' इति विभाषया इटि अनुबन्धलोपे प्रातिपदिकत्वात् सौ 'क्त्वातोसुन्–' इत्यव्यय-

त्वात् सुब्लुकि 'शमित्वा' इति। इडभावपक्षे 'अनुनासिकस्य क्विझलोः क्ङिति' इत्यात्वे अनुस्वारे परसवर्णे 'शान्त्वा' इति सिद्धं भवति।

हित्वा—धाधातोः 'समानकर्तृकयोः–' इति क्त्वाप्रत्यये अनुबन्धलोपे 'दधातेर्हिः' इति धास्थाने 'हि' इत्यादेशे प्रातिपदिकत्वात् सौ अव्ययत्वात् सुब्लुकि 'हित्वा' इति। 'ओहाक् त्यागे' इत्यस्य क्त्वायां तु 'जहातेश्च' इत्यनेन हित्वं बोध्यम्। 'ओहाङ् गतौ' इति धातोः क्त्वायां तु 'हात्वा' इति भवति। अत्र 'जहातेश्च' इति हित्वं तु न' सूत्रे जहातेरिति निर्देशात्।

स्मारं स्मारम् ( ई० ४५, ५३ )—स्मृधातोः 'आभीक्ष्ण्ये णमुल् च' इति णमुलि अनुबन्धलोपे 'अचो ञ्णिति' इति वृद्धौ रपरत्वे 'नित्यवीप्सयोः' इति द्वित्वे कृदन्तत्वात् सौ 'कृन्मेजन्तः' इति मान्तत्वादव्ययसंज्ञायां सुब्लुकि प्रथममकारस्यानुस्वारे 'स्मारं स्मारम्' इति। स्मृत्वा स्मृत्वा इत्यर्थः।

यावज्जीवमधीते ( ई० ३२ )—'यावति विन्दजीवयोः' इति सूत्रेण यावच्छब्दे उपपदे जीवधातोर्णमुलि सुब्लुकि विभक्तिकार्ये श्चुत्वे 'यावज्जीवम्' इति।

समूलकाषं कषति ( ई० ५५ )—'निमूलसमूलयोः कषः' इति सूत्रेण समूलमिति कर्मण्युपपदे कष्धातोर्णमुलि सुब्लुकि वृद्धौ स्वादिकार्ये 'समूलकाषम्' इति।

पादघातं हन्ति ( ई० ३१ )—पादेन हन्तीत्यर्थे 'करणे हनः' इति हन्धातोर्णमुलि सुब्लुकि 'हनस्तोः—' इति तकारान्तादेशे 'हो हन्तेः–' इति हस्य घत्वे उपधावृद्धौ विभक्तिकार्ये उक्तं रूपं जातम्।

धनपोषम् ( ई० ५१ )—धनेन पुष्णातीत्यर्थे करणोपपदात् पुष्धातोः 'स्वे पुषः' इति णमुलि सुब्लुकि 'पुगन्त' इति गुणे विभक्तिकार्ये उक्तं रूपं सिद्धम्।

कम्बलदायो व्रजति ( ई० ३६, ५१ )—कम्बलं ददातीति विग्रहे कर्मण्यणपवादं 'तुमन्ण्वुलौ' इति ण्वुलं बाधित्वा 'आतोऽनुपसर्गे कः' इति कप्रत्ययः प्राप्तः, तमपि परत्वाद्बाधित्वा 'अण् कर्मणि च' इत्यावृत्त्या अणि सुब्लुकि युगागमे विभक्त्यादिकार्ये 'कम्बलदायो व्रजति' इति सिद्धम्।

समजः ( ३६, ५१ )—समुपसर्गादज्धातोः 'समुदोरजः पशुषु' इति सूत्रेण अप्रत्यये विभक्तिकार्ये 'समजः पशूनां संघः'। इति। अघञपोरित्युक्तेः 'अजेर्व्यघञपोः' इति वीभावो न।

**मृगया** ( ई० ३६, ५२ )—'मृग अन्वेषणे' चुरादिवदन्तः, तस्माण्णिचि 'मृग इ' इति स्थिते 'परिचर्यापरिसर्यामृगयाऽटाट्यानामुपसंख्यानम्' इति वार्तिकेन निपातनात् णिनिमित्ताऽजन्तलक्षणवृद्ध्यभावे शे यकि च कृते 'अतो लोपः' इति आर्धधातुके णौ परे अतो लोपे 'णेरनिटि' इति णिलोपे 'मृग य' इति स्थिते निपातनाद् अलोपाभावे 'अकृत्सार्वधातुकयो'रिति दीर्घाऽभावे स्त्रीत्वाट्टापि कृदन्तत्वात् सौ तस्य हल्ङ्यादिना लोपे 'मृगया' इति ।

**निह्नवः** ( ई० ३६ )—अत्र 'ह्वः सम्प्रसारणं च न्यभ्युपविषु' इति 'नि' उपसर्गात् ह्वयतेरप्प्रत्यये सम्प्रसारणे च कृते पूर्वरूपे गुणे अवादेशे स्वादिकार्ये 'निह्नवः इति ।

**गेहानुप्रपादम्** ( ई० ३६, ५० )—द्वितीयान्ते उपपदे अनु–प्र–उपपदात् पदेः 'विशपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः' इत्यनेन णमुलि अनुबन्धलोपे वृद्धौ स्वादिकार्ये 'गेहानुप्रपादम्' इति ।

**क्त्वाणमुलौ कस्मिन्नर्थे भवतः** ( ई० ३६, ५० )—अयथाभिप्रेताख्याने, समाप्तौ गम्यमानायाम् , तस्प्रत्ययान्ते स्वाङ्गे उपपदे, नानार्थप्रत्ययान्ते च्व्यर्थविषये उपपदे, तूष्णीं शब्दे उपपदे, अन्वक्शब्दे उपपदे च क्त्वाणमुलौ भवतः ।

**पूर्वकालिकेति** ( ई० ३६ )—'अलंखल्वोः प्रतिषेधयोः प्राचां क्त्वा' 'उदीचां माङो व्यतिहारे' 'परावरयोगे च' इत्येतैः सूत्रैः पूर्वकालिकक्रियार्थकधातुभिन्नात् क्त्वाप्रत्ययो विधीयते ।

**स्फारः** ( ई० ३६ )—स्फुर्धातोर्भावे घञि ञित्वादादिवृद्धौ 'स्फुरतिस्फुलत्योर्घञि' इत्यनेन आत्वे स्वादिकार्ये 'स्फारः' इति ।

**स्यदः** ( ई० ३६ )—स्यन्दधातोः 'स्यदो जवे' इत्यनेन घञि निपातनेन नलोपे वृद्ध्यभावे स्वादिकार्ये 'स्यदः' इति ।

**परिवीय** ( ई० ३६, ४१, ५० )—परिपूर्वकात् व्येञ् धातोः क्त्वाप्रत्यये तस्य 'समासेऽनञ्पूर्वे' इति ल्यपि 'विभाषा परेः' इत्यनेन विभाषया सम्प्रसारणे पूर्वरूपे 'परि वि य' इति स्थिते तुकं बाधित्वा 'हलः' इति दीर्घे कृदन्तत्वात्सौ तस्य लुकि परिवीय इति । सम्प्रसारणाभावे 'परिव्याय' इति ।

इषेरिति ( ई० ३६ )—इष्धातोः 'इच्छा' इति सूत्रेण निपातनात् भावे शे यगभावे च कृते छत्वादिकार्ये 'इच्छा' इति।

मूलकेनोपदंशमिति ( ई० ३६, ४८ )—ननु मूलकेनोपदंशं भुंक्ते इति विग्रहे ल्यबन्तसकर्मकदंशधातुयोगे मूलकस्य शब्दतः कर्मत्वाऽभावेन मूलकोपदंशयोः सम्बन्धाभावेन सामर्थ्याभावात् 'उपदंशस्तृतीयायाम्' इत्यनेन णमुल्प्रत्ययः, 'तृतीयाप्रभृतीन्यन्यतरस्याम्' इति समासश्चात्र दुर्लभ इति चेन्न, किमुद्दिश्य भुंक्ते इति कर्मणोऽपेक्षायां मूलकमुपदंश्य भुंक्ते इत्यर्थेन मूलकस्य कर्मत्वं समायाति, मूलकस्य दंशधातुना सहार्थसम्बन्धस्य सत्त्वात्। यदि तृतीयायाः शब्दत एवान्वये प्रत्यय इष्यते, तर्हि 'करणे हनः' इतिवत् 'उपदंशः करणे' इत्येव वदेत्। एवञ्च तृतीयाग्रहणसामर्थ्येन आर्थसम्बन्ध एवात्रेष्टः। शब्दतस्तु मूलकं भुजिक्रियां प्रति करणमेवेति दिक्।

वेशः ( ई० ३७ )—विश्धातोः 'पदरुजविशस्पृशो घञ्' इत्यनेन घञ्प्रत्यये लघूपधगुणे विभक्त्यादिकार्ये 'वेशः' इति।

भावः ( ई० ३७ )—भूधातोः 'श्रिणीभुवोऽनुपसर्गे' इत्यनेन घञ् प्रत्यये 'अचोञ्णिति' इति वृद्धौ आवादेशे विभक्त्यादिकार्ये 'भावः' इति।

उद्ग्राहः ( ई० ३७ )—अत्र 'उदि ग्रहः' इत्यनेन उदित्युपपदाद् ग्रहधातोः घञ्प्रत्यये ञित्वादुपधावृद्धौ विभक्त्यादिकार्ये 'उद्ग्राहः' इति।

उच्छ्रायः ( ई० ३७ )—अत्र-उदित्युपपदे श्रि, यु, पू, द्रु, एभ्यो घञ् स्यादित्यर्थक 'उदि श्रयतियौतिपूद्रुवः' इत्यनेन उदित्युपपदात् 'श्रि' धातोः घञ्प्रत्यये ञित्वादुपधावृद्धौ आयादेशे श्चुत्वे विभक्त्यादिकार्ये 'उच्छ्रायः' इति।

उपहवः ( ई० ३७ )—'उप' उपपदात् ह्वेञ्धातोः—नि, अभि, उप, वि, एषु चतुर्षूपपदेषु ह्वयतेरप् स्यादित्यर्थक 'ह्वः सम्प्रसारणं च न्यभ्युपविषु' इति सूत्रेण अप्प्रत्यये सम्प्रसारणे च कृते पूर्वरूपे उकारस्य गुणे अवादेशे 'उपहवः' इति।

गीर्णिः ( ई० ३७ )—गॄधातोः 'स्त्रियां क्तिन्' इत्यनेन क्तिन्प्रत्यये इत्वे रपरत्वे 'हलि चे'ति दीर्घे 'ॠल्वादिभ्यः क्तिन्निष्ठावद्वाच्यः' इत्यनेन ॠकारान्तात् गॄधातोः परस्य क्तिनप्रत्ययस्य निष्ठावद्भावात् 'रदाभ्याम्' इति तस्य नत्वे णत्वे विभक्त्यादिकार्ये 'गीर्णिः' इति।

**शायिका** ( ई० ३७ )—'पर्यायाऽर्हणोत्पत्तिषु ण्वुच्' इति सूत्रे पर्यायः = परिपाटी, अर्थात् 'क्रमः' अर्हणमर्हः = योग्यता । पर्यायादिषु द्योत्येषु ण्वुच् वा स्यादित्यर्थः । तत्र ( क्रमे ) द्वितीयमुदाहरणं 'शायिका' इति । अत्र 'शीङ् स्वप्ने' इति धातोः प्रकृतिसूत्रेण भावे ण्वुचि वोरकादेशे 'अचोञ्णिति' इत्यादिवृद्धौ आया-देशे स्त्रीत्वविवक्षायां टापि 'प्रत्ययस्थादि'तीत्वे विभक्त्यादिकार्ये 'शायिका' इति ।

**विमार्गः** ( ई० ३७, ५४ )—विमृज्यतेऽनेनेति 'विमार्गः' । वि-उपसर्गात् हलन्तात् मृज्धातोः 'हलश्च' इत्यनेन घञ्प्रत्यये उपधावृद्धौ 'चजोःकुघि'ति कुत्वे विभक्त्यादिकार्ये 'विमार्गः' इति ।

**पीत्वा खलु** ( ई० ३७, ५० )—प्रतिषेधार्थकः खलुशब्दोऽत्र । ततश्च पाधातोः प्रतिषेधार्थयोरलंखल्वोरुपपदयोः क्त्वा स्यादित्यर्थक 'अलंप्रतिषेधयोः प्राचां क्त्वा' इति सूत्रेण क्त्वाप्रत्यये 'घुमास्थे'तीत्वे कृदन्तत्वात्सौ अव्ययत्वात् सुब्लुकि 'पीत्वा खलु' इति । पानेन साध्यं नास्तीत्यर्थः ।

**चूर्णपेषम्** ( ई० ३७, ४२ )—चूर्णमिति कर्मोपपदकपिष्धातोः शुष्कचूर्ण-रूक्षेषु कर्मसूपपदेषु पिषे णमुल् स्यादित्यर्थक 'शुष्कचूर्णरूक्षेषु पिषः' इत्यनेन णमुल्-प्रत्यये सुब्लुकि लघूपधगुणे विभक्त्यादिकार्ये 'चूर्णपेषम्' इति ।

**विशयः** ( ई० ३८ )—'व्युपयोः शेते पर्याये' इति सूत्रस्य प्रत्युदाहरणमेतत् । तत्र हि पर्यायः = प्राप्ताऽवसरता । एवञ्च 'पर्याये' इत्यस्य ग्रहणाभावे-वि-उप, इत्युपपदयोः शीङ्धातोर्घञ् स्यादित्यर्थे संशयार्थेऽपि 'विशयः' इत्यत्र घञापत्तौ 'विशायः' इति स्यात् ।

**प्रधिः** ( ई० ३८ )—प्रोपसर्गात् घुसंज्ञकधाधातोः 'उपसर्गे घोः किः' इति सूत्रेण किप्रत्यये 'आतो लोप इटि च' इत्यनेन आलोपे कृदन्तत्वात् सौ रुत्वे विसर्गे 'प्रधिः' इति ।

**पूनिः** ( ई० ३८ )—ऊकारेत्संज्ञक-'पू' धातोः 'ऋल्वादिभ्यः क्तिन्निष्ठाव-द्वाच्यः' इति वार्तिकेन क्तिन्प्रत्यये अनुबन्धलोपे 'ल्वादिभ्यः' इत्यनेन तकारस्य नत्वे कृदन्तत्वात् सौ रुत्वे विसर्गे 'पूनिः' इति ।

**अजीवनिः** ( ई० ३८ )—आक्रोशे गम्यमाने सति नञुपपदात् 'जीव' धातोः 'आक्रोशे नञ्यनिः' इति सूत्रेण अनिप्रत्यये कृदन्तत्वात् सौ रुत्वे विसर्गे 'अजीवनिः' इति । अजीवनमित्यर्थः ।

लवणङ्कारं भुङ्क्ते ( ई० ३८ )—अत्र लवणशब्दः स्वादुपर्यायः। तेन स्वादुपर्यायात् लवणपूर्वपदात् कृ-धातोः 'स्वादुमि णमुल्' इति सूत्रेण णमुल्प्रत्यये पूर्वपदस्य निपातनान्मान्तत्वे णित्वाद् वृद्धौ मस्य अनुस्वारे परसवर्णे कृदन्तत्वात् सौ हल्ङ्यादिना सुलोपे 'लवणङ्कारम्' इति।

दण्डोपघातम् ( ई० ३८, ५३ )—दण्डेनोपघातं 'दण्डोपघातम्'। अत्र 'हिंसार्थानां च समानकर्मकाणाम्' इत्यनेन दण्डेन इति तृतीयान्ते उपपदे 'उप' इत्युपसर्गपूर्वकात् 'हन्' धातोर्णमुल्प्रत्यये णित्वाद् वृद्धौ हस्य कुत्वेन घत्वे नकारस्य तकारादेशे कृदन्तत्वात् सौ हल्ङ्यादिना सुलोपे 'दण्डेन उपघातम्' इति स्थितौ 'तृतीया प्रभृतीन्यन्यतरस्याम्' इति पाक्षिके समासे 'आद्गुणः' इत्यनेन गुणे 'दण्डोपघातम्' इति।

शक्नोति भोक्तुम् ( ई० ३९, ५२ )—अत्र भुज्धातोः 'शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन्' इति सूत्रेण तुमन्प्रत्यये गुणे कुत्वे विभक्तिकार्ये अव्ययत्वात्सुब्लुकि 'भोक्तुम्' इति।

स्फालः ( ई० ३९ )—स्फुल्धातोः 'भावे' इति सूत्रेण घञ्प्रत्यये उपधावृद्धौ 'स्फुरतिस्फुलत्योर्घञि' इत्यनेन आत्वे विभक्त्यादिकार्ये 'स्फालः' इति।

भुक्त्वा व्रजति ( ई० ३९ )—अत्र भुज्धातोः 'समानकर्तृकयोः पूर्वकाले' इत्यनेन क्त्वाप्रत्यये कुत्वे विभक्त्यादिकार्ये 'भुक्त्वा' इति।

जरीत्वा ( ई० ३९ )—जॄधातोः 'समानकर्तृकयोः पूर्वकाले' इत्यनेन क्त्वाप्रत्यये 'जॄव्रश्च्योः क्त्वि' इत्यनेन इटि गुणे 'वृतो वा' इत्यनेन विभाषया दीर्घे विभक्तिकार्ये 'जरीत्वा' इति।

कायः ( ई० ४० )—चीयतेऽस्मिन् अस्थ्यादिकमिति कायः। 'चि' धातोः 'निवासचितिशरीरोपसमाधानेष्वादेश्च कः' इत्यनेन घञ्प्रत्यये धातोश्चकारस्य ककारादेशे च कृते ञित्वाद् वृद्धौ आयादेशे 'काय' इति। तस्मात् कृदन्तत्वात् सौ रुत्वे विसर्गे 'कायः' इति।

परिघः ( ई० ४० )—परिहन्यतेऽनेनेति 'परिघः'। परि-उपसर्गात् हन्धातोः 'परौ घः' इति सूत्रेण करणे अप्प्रत्यये संनियोगशिष्टेन हनो घादेशे च कृते कृदन्तत्वात् सौ रुत्वे विसर्गे 'परिघः' इति।

**भृत्या** ( ई० ४० )—भृधातोः 'संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः' इति सूत्रेण क्यप्प्रत्यये 'ह्रस्वस्ये'ति तुकि स्त्रीत्वात् टापि विभक्त्यादिकार्ये 'भृत्या' इति । ( भरणं भृत्या = जीविका )

**निपठितिः** ( ई० ४० )—निपूर्वकात् पठ्धातोः 'स्त्रियां क्तिन्' इति क्तिन्प्रत्यये अनुबन्धलोपे 'तितुत्रेष्वग्रहादीनामिति वाच्यम्' इति वार्तिकेन इडागमे विभक्त्यादिकार्ये 'निपठितिः' इति ।

**ईषदाढ्यङ्करः** ( ई० ४० )—अनाढ्यः आढ्य ईषत् क्रियते इत्यर्थः । अत्र 'कर्तृकर्मणोश्च्व्यर्थयोरिति वाच्यम्' इति वार्तिकेन कृधातोः खल्प्रत्यये खित्वान्मुमि गुणे विभक्त्यादिकार्ये 'ईषदाढ्यङ्करः' इति ।

**व्रश्चित्वा** ( ई० ४० )—व्रश्च्धातोः क्त्वाप्रत्यये ऊदित्वादिड्विकल्पे प्राप्ते 'जॄव्रश्च्योः क्त्वि' इत्यनेन नित्ये इटि कृदन्तत्वात् सौ अव्ययत्वात् सुब्लुकि 'व्रश्चित्वा' इति । अत्र 'ग्रहिज्ये'ति सम्प्रसारणं तु न, 'न क्त्वा सेट्' इति कित्त्वनिषेधात् ।

**प्रणम्य** ( ई० ४० )—प्रोपसर्गपूर्वकात् 'नम्' धातोः क्त्वाप्रत्यये 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इत्यनेन ल्यपि 'वा ल्यपि' इत्यनेन विभाषया अनुनासिकलोपे णत्वे 'ह्रस्वस्ये'ति तुकि 'प्रणत्य' इति । अनुनासिकलोपाऽभावे 'प्रणम्य' इति भवति ।

**प्रवाय** ( ई० ४० )—प्रोपसर्गात् 'वेञ् तन्तुसन्ताने' अस्मात् क्त्वाप्रत्यये तस्य ल्यपि 'आदेच उपदेशे' इत्यात्वे अव्ययत्वात् सुब्लुकि 'प्रवाय' इति । 'ग्रहिज्ये'ति संप्रसारणं तु न, 'ल्यपि च' इत्यनेन निषेधात् ।

**लम्भंलम्भम्** ( ई० ४० )—'लभ्' धातोः 'आभीक्ष्ण्ये णमुल् च' इति णमुल्प्रत्यये 'नित्यवीप्सयोः' इत्यनेन द्वित्वे पूर्वरूपे 'विभाषया चिण्णमुलोरि'ति विभाषया नुमि नुमो नकारस्य अनुस्वारे परसवर्णे 'लम्भंलम्भम्' इति । अनुनासिकाऽभावे 'चिण्णमुलोरि'ति दीर्घे 'लाभंलाभम्' इति ।

**गेहानुप्रवेशमास्ते** ( ई० ४० )—सर्वाणि गेहान्यनुप्रविश्येति, पुनः पुनः गेहमनुप्रविश्येति वा विग्रहे 'विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः' इति

सूत्रेण विश्‌धातोः णमुलि लघूपधगुणे अव्ययत्वात् सुब्लुकि 'गेहानुप्रवेशम्' इति। आस्ते इति शेषः।

**मुखतो भूत्वा** ( ई० ४० )—तस्प्रत्ययान्ते स्वाङ्गे उपपदे भूधातोः 'स्वाङ्गे तस्प्रत्यये कृभ्वोः' इत्यनेन क्त्वाप्रत्यये अव्ययत्वात् सुब्लुकि 'मुखतो भूत्वा' इति।

**अस्ति भोक्तुम्** ( ई० ४० )—अस्त्युपपदे भुज्‌धातोः 'शकधृषज्ञाग्लाघटरभलभक्रमसहार्हास्त्यर्थेषु तुमुन्' इति सूत्रेण तुमुन्प्रत्यये लघूपधगुणे कुत्वे कृदन्तत्वात् सौ तस्य अमादेशे पूर्वरूपे 'अस्ति भोक्तुम्' इति। प्रकृतिसूत्रे अर्थग्रहणं सन्निहितत्वात् अस्तिनैव सम्बध्यते। तेन 'भवति, विद्यते वा भोक्तुम्' इत्यपि उदाहरणं भवति।

**उपाध्यायः** ( ई० ४०, ४८, ५६ )—उप = समीपे, एत्य यस्मादधीयते स 'उपाध्यायः' इति। उप-अधि-उपसर्गपूर्वकात् इङ्‌धातोः 'इङश्च' इति सूत्रेण घञ्‌प्रत्यये ञित्वाद्‌वृद्धौ आयादेशे यणि सवर्णदीर्घे 'उपाध्याय' शब्दात् सौ रुत्वे विसर्गे 'उपाध्यायः' इति।

**विशिपतीति** ( ई० ४१ )—अत्र सूत्रे द्वितीयायामित्यनुवर्तते। सूत्रार्थस्तु—द्वितीयान्ते उपपदे विश्यादिभ्यो णमुल्स्याद् व्याप्यमाने, आसेव्यमाने चार्थे गम्ये इति। गेहादिद्रव्याणां विश्यादिक्रियाभिः साकल्येन सम्बन्धो व्याप्तिः। क्रियायाः पौनःपुन्यम् आसेवा। ननु 'आभीक्ष्ण्ये णमुल् च' इत्यनेनैव णमुलि सिद्धे प्रकृतसूत्रे आसेवाग्रहणं किमर्थम्? नच क्त्वानिवृत्तिफलकमिति वाच्यम्, क्त्वाप्रत्ययस्यापि पक्षे इष्टत्वादिति चेन्न, द्वितीयान्तस्योपपदसञ्ज्ञार्थं तस्य ग्रहणस्यावश्यकत्वात्। न च आसेवाग्रहणाभावेऽपि 'तत्रोपपदमि'ति उपपदसंज्ञा कुतो न स्यादिति वाच्यम् 'आभीक्ष्ण्ये णमुल् च' इति सूत्रे द्वितीयान्तस्य सप्तम्या निर्देशेन ग्रहणाभावादुपपदसञ्ज्ञा न स्यात्। ( 'तृतीयाप्रभृतीन्यन्यतरस्याम्' इत्युपपदसमासविकल्पो न स्यादिति तद्भावः। ) 'गेहानुप्रवेशमास्ते' इत्याद्युदाहरणम्। गेहानुप्रवेशमास्ते इत्यत्र सर्वाणि गेहान्यनुप्रविश्येति, पुनः पुनर्गेहमनुप्रविश्येति वा अर्थः। उभयथापि 'नित्यवीप्सयोः' इति द्वित्वं तु न, समासेनैव स्वभावतः तयोरुक्तत्वात्।

**रङ्गः** ( ई० ४१ )—रज्यत्यस्मिन्निति विग्रहे 'अकर्तरि च कारके संज्ञायाम्' इति घञ्प्रत्यये 'चजोः कुघिण्ण्यतोः' इति कुत्वे अधिकरणशक्तिप्रधानतया नलोपा-

भावे तस्यानुस्वारे परसवर्णे कृदन्तत्वात्सौ रुत्वे विसर्गे 'रङ्गः' इति ।

**निस्वानः** ( ई० ४१ )—अत्र 'नौ गदनदपठस्वनः' इति सूत्रेण विभाषया अपि सति 'निस्वनः' तदभावे घञि वृद्धौ 'निस्वानः' इति ।

**अटाटया** ( ई० ४१ )—अट्धातोः 'परिचर्यापरिसर्यामृगयाऽटाट्यानामुपसंख्यानम्' इति वार्तिकेन स्त्रियाम् निपातनात् शे यकि ट्यशब्दस्य द्वित्वे पूर्वभागे यकारनिवृत्तौ दीर्घे 'अटाटया' इति । न च द्वित्वे कृते हलादिशेषेणैव यकारलोपः कुतो नेति वाच्यम् , हलादिशेषस्य षाष्ठद्वित्वविषयत्वात् ।

**अपमाय** ( ई० ४१, ५७ )—मेङ्धातोः 'उदीचां माङो व्यतीहारे' इति क्त्वाप्रत्यये 'समासेऽनञ्पूर्वे'ति क्त्वो ल्यपि 'मयतेरिदन्यतरस्याम्' इति विभाषया इत्वे 'ह्रस्वस्य पिती'ति तुकि 'अपमित्य' इति । इत्वाभावे 'ईद्यति' इति प्राप्तमीत्वं 'न ल्यपि' इति निषेधात् 'आदेच उपदेशेऽशिति' इत्यात्वे 'अपमाय' इति । अपमाय, अपमित्य वा याचते इत्यस्य त्वया गौर्दत्ता चेन्मया महिषी दीयते इत्येवं विनिमयं कर्तुं गां याचते इत्यर्थः ।

'उदीचां माङो व्यतीहारे' इति सूत्रे उदीचां ग्रहणात् यथाप्राप्तमपि भवति । तेन मेङः क्त्वाप्रत्ययस्य विकल्पलाभात् , तदभावे याचेः पूर्वकालक्रियावृत्तित्वात् समानकर्तृकयोरिति क्त्वाप्रत्यये 'याचित्वा उपमयते' इति ।

**परिव्याय** ( ई० ४१ )—परिपूर्वाद्व्येञः क्त्वो ल्यपि 'विभाषा परे' इति सूत्रेण यकारस्य सम्प्रसारणे पूर्वरूपे परि+वि+य इति स्थिते तुकं बाधित्वा परत्वात् 'हलः' इति दीर्घे 'परिवीय' इति । सम्प्रसारणाभावे आत्वे 'परिव्याय' इति ।

**चौरङ्कारमाक्रोशति** ( ई० ४१ )—करोति उच्चारणे चौरशब्दमुच्चार्य्य आक्रोशति इत्यर्थः । अत्र कर्मोपपदात् कृञ् धातोः 'कर्मण्याक्रोशे कृञः खमुञ्' इति सूत्रेण खमुञ्प्रत्यये उपपदसमासे 'अरुर्द्विषदजन्तस्य मुम्' इति मुमि वृद्धौ 'चौरङ्कारम्' इति सिद्धम् ।

**विसारः** ( ई० ४१, ४५, ४९ )—'वि' उपसर्गात् सृधातोः 'व्याधिमत्स्यबलेषु चेति वाच्यम्' इति वार्तिकेन घञ्प्रत्यये रपरत्वे कृदन्तत्वात्सौ रुत्वे विसर्गे 'विसारः' विसारो मत्स्य इति ।

निष्पावः ( ई० ४१ )—निष्पूयते शूर्पादिरिति निष्पावो धान्यविशेषः। 'निरभ्योः पूल्वोः' इति सूत्रेण घञि वृद्धावादेशयोः 'निष्पावः' इति।

दरः ( ई० ४१, ५१ )—'दृ' धातोः 'ग्रह-वृ-दृ-निश्चि-गमश्च' इति सूत्रेण अप्प्रत्यये गुणे कृदन्तत्वात्सौ रुत्वे विसर्गे 'दरः' इति, घञि तु 'दारः' स्यात्, अतः तमपवाद्याप् विधीयते।

उप्त्रिमम् ( ई० ४१,४४ )—वप्धातोः 'ड्वितः क्त्रिः' इति सूत्रेण क्त्रिप्रत्यये 'क्त्रेर्मम्नित्यम्' इति क्त्रिप्रत्ययान्तात् मप्प्रत्यये कृदन्तत्वात् प्रातिपदिककार्ये 'उप्त्रिमम्' इति सिद्धम्।

सर्वां कारिकाम् ( ई० ४१ )—आख्यानेऽर्थे कृधातोः स्त्रियाम् 'विभाषाख्यानपरिप्रश्नयोरिञ्च' इति सूत्रेण ण्वुलि अगादेशे वृद्धौ स्त्रीत्वाट्टापि 'प्रत्ययस्थादि'ति इत्वे 'कारिका'ति। तस्य द्विवचने 'कारिकाम्' इति। सर्वामित्यस्य 'अकार्षम्' इति मूलोक्तेऽन्वयो बोध्यः। पूर्वं परिप्रश्नः, पश्चादुक्तकथनमाख्यानम्। ततश्च कां त्वं कारिं, कारिकां क्रियां, कृत्यां, कृतिं वाऽकार्षीः ? इति प्रश्ने उत्तरयति-सर्वां कारिं, कारिकां, क्रियां, कृत्यां, कृतिं, वाऽकार्षम्-इति।

प्रापय्य ( ई० ४१ )—'प्र' उपसर्गात् ण्यन्तात् आप्धातोः 'समानकर्तृकयोः पूर्वकाले' इति क्त्वाप्रत्यये 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति ल्यपि ततः णिलोपे प्राप्ते तम्प्रबाध्य 'विभाषाऽऽपः' इति विभाषया णेरयादेशे 'प्रापय्य' इति, अयादेशाभावे णिलोपे 'प्राप्य' इति।

गोष्पदप्रम् ( ई० ४१, ४३ )—'वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्' इति सूत्रेण विभाषया ण्यन्तात् पूरेर्णमुलि ऊलोपे च सति णिलोपे कृदन्तात् सौ तस्यामादेशे 'गोष्पदप्रम्' इति।

गोघ्नः ( ई० ४२ )—'गां हन्ति तस्मै, गोघ्नोऽतिथिः' 'दाशगोघ्नौ सम्प्रदाने' इत्यनेन निपातनात् सिद्धं भवति।

यामः ( ई० ४२ )—'यमः समुपनिविषु' इत्यप्विकल्पे 'यम्' धातोर्घञि उपधावृद्धौ कृदन्तत्वात् सौ रुत्वे विसर्गे च 'यामः' इति।

निषद्या ( ई० ४२ )—'नि'पूर्वात् 'षद्' धातोः 'संज्ञायां समज-निषद-निपत-मन-विद-षुञ्-शीङ्-भृञ्-इणः' इति सूत्रेण क्यपि अनुबन्धलोपे

'धात्वादेः षः सः' इति सत्वे 'सदिरप्रतेः' इति षत्वे रूपसिद्धिः । 'निषीदन्त्यस्यामिति निषद्या आपणः' ।

**सन्तिः** ( ई० ४२ )—सनुतात्-सातिः, सतिः, सन्तिः इति । 'धातोः क्तिच् क्तश्च स्यादाशिषि' इत्यर्थक-'क्तिच्क्तौ च संज्ञायाम्' इत्यनेन क्तिच्प्रत्यये 'सनोतेः क्तिचि आत्वं वा स्यादन्त्यस्य नकारस्य लोपश्च वा स्यात्' इत्यर्थक-'सनः क्तिचि लोपश्चास्यान्यतरस्याम्' इत्यनेन आत्वे नलोपे कृदन्तत्वात् सौ रुत्वे विसर्गे च 'सातिः' इति । आत्वाभावे नलोपे च—'सतिः' इति आत्व-नलोपयोरुभयोरप्यभावे 'सन्तिः' इति भवति ।

**रूक्षपेषम्** ( ई० ४२ )—'शुष्क-चूर्ण-रूक्षेषु पिषः' इति णमुलिति विशेषः ।

**भ्रूविक्षेपं कथयति** ( ई० ४२ )—अत्र 'स्वाङ्गेऽध्रुवे' इति णमुलिति विशेषः ।

**क्त्वा-ल्यब्विधाने इति** ( ई० ४२, ५३ )—'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इत्यत्र 'अनञ्' इति पर्युदासः । नञ्भिन्नं नञ्सदृशमिति यावत् । तत् पूर्वं पूर्वपदं यस्य समासस्य तस्मिन्समासे क्त्वो ल्यबादेशो भवति । तेन 'प्रकृत्य' इत्यत्र ल्यप् भवति, 'परमकृत्वा' इत्यादौ अव्ययपूर्वपदकाभावात् न भवति । अनञ् किम् इति चेत् ? 'अकृत्वा' इत्यत्राऽपि ल्यप् स्यादिति दिक् ।

**अपघनः** ( ई० ४३ )—अपहन्त्यनेनेति विग्रहे अपपूर्वात् हन्धातोः 'अपघनोऽङ्गम्' इति सूत्रेण अप्प्रत्यये हस्य घत्वे 'अपघनः' इति निपातनात् सिद्धम् ।

**प्रह्लन्निः** ( ई० ४३ )—प्रपूर्वात् ह्लादूधातोः 'स्त्रियां क्तिन्' इति क्तिन् प्रत्यये 'ॠल्वादिभ्यः क्तिन्निष्ठावद् वाच्यः' इति वार्तिकेन निष्ठावद्भावे 'रदाभ्याम्' इति तकारस्य नत्वे 'ह्लादो निष्ठायाम्' इत्यत्र 'ह्लाद' इति योगविभागेन अनिष्ठायामपि क्वचिद् ह्रस्वविधानात् क्तिनि प्रत्यये परे ह्रस्वे कृदन्तत्वात् सौ रुत्वादिकार्ये 'प्रह्लन्निः' इति । भाष्ये तु एतदनभिधानात् 'प्रह्लत्तिः' इति केचित् ।

**स्मारं स्मारं नमति** ( ई० ४३ )—पौनःपुन्ये द्योत्ये 'समानकर्तृकयोः पूर्वकाले' इत्यर्थे स्मृधातोः 'आभीक्ष्ण्ये णमुल् च' इति सूत्रेण णमुल्प्रत्यये सति 'नित्यवीप्सयोः' इति द्वित्वे वृद्ध्यादिकार्ये 'स्मारं स्मारं नमति' इति । क्त्वाप्रत्यये तु-'स्मृत्वा स्मृत्वा' इति भवति ।

**निमूलकाषम्** ( ई० ४३, ४५ )—निमूले कर्मण्युपपदे 'निमूल-समूलयोः

कषः' इति कषेर्णमुलि वृद्ध्यादिकार्ये 'निमूलकाषम्' इति । नियतं मूलमस्य निमूलम् । निमूलकषणाभिन्नं कषणमिति बोधः ।

**ऊर्ध्वशोषम्** ( ई० ४३ )—ऊर्ध्वे कर्तरि उपपदे शुषेः 'ऊर्ध्वे शुषि-पुरोः' इति णमुलि गुणादिकार्ये 'ऊर्ध्वशोषम्' 'शुष्यति' इति शेषः । वृक्षादिरूर्ध्व एव तिष्ठन् शुष्यतीत्यर्थः ।

**वष्टि भोक्तुम्** ( ई० ४३ )—इच्छार्थेषु एककर्तृकेषु उपपदेषु भुज्धातोः 'समानकर्तृकेषु तुमुन्' इति सूत्रेण तुमुन्प्रत्यये कुत्वे गुणे कृदन्तत्वात् सौ तस्य लोपे 'वष्टि भोक्तुम्' इति ।

'वश कान्तौ' तत्र कान्तिरिच्छेति वशधातुरपीच्छार्थको बोध्यः ।

**नीकाशः** ( ई० ४४ )—अत्र 'इकः काशे' इति सूत्रेण उपसर्गस्य दीर्घः ।

**अभिनिष्टानः** ( ई० ४४, ४५ )—अत्र 'अभिनिसः स्तनः शब्दसंज्ञायाम्' इति सूत्रेण स्तनेः सस्य मूर्धन्यादेशो भवति ।

**निक्वणः** ( ई० ४४ )—अत्र 'क्वणो वीणायाञ्च' इति सूत्रेण अप्प्रत्ययो भवति ।

**द्रुघनः** ( ई० ४४ )—अत्र 'करणेऽयोविद्रुषु' इति सूत्रेण अप् हनादेशश्च भवति ।

**श्रद्धा** ( ई० ४४ )—अदित्यव्ययपूर्वत्वेन उपसर्गपूर्वत्वाभावात् धाञः 'आतश्चोपसर्गे' इति सूत्रेण अङोऽप्राप्तया 'श्रदन्तरोरुपसर्गवद् वृत्तिः' इति श्रच्छब्दस्य अङ्विधौ उपसर्गत्वं भवति ।

**आढ्येन सुभूयते** ( ई० ४१ )—'कर्तृकर्मणोश्च्व्यर्थयोरिति वाच्यम्' इति वार्तिकस्य प्रत्युदाहरणमेतत् । तत्र च्व्यर्थयोः ( अभूततद्भावे ) इति किम् 'आढ्येन सुभूयते' इत्यत्रापि खल् स्यात् ।

**पाणिनोपकर्षम्** ( ई० ४४ )—अत्र 'सप्तम्यां चोपपीडरुधकर्षः' इति सूत्रेण णमुल् भवति ।

**परिक्लिश्यमाने च** ( ई० ४४ )—सर्वतो विबाध्यमाने स्वाङ्गे द्वितीयान्तेर्णमुल् स्यादित्यर्थः । उरः प्रतिपेषं युध्यन्ते । उरोविदारं प्रतिचस्करे नखैः । इत्याद्युदाहरणानि ।

**अभिनिष्टानः** ( ई० ४५ )—अत्र 'अभिनिसः स्तनः शब्दसंज्ञायाम्' इति सूत्रेण स्तनेः सस्य मूर्धन्यादेशो भवति ।

**संशयः** ( ई० ४५ )—'व्युपयोः शेते पर्याये' इति सूत्रस्थ-'पर्याये' इत्यस्य प्रत्युदाहरणमेतत् ।

**उपजापः** ( ई० ४५ )—'व्यधजपोरनुपसर्गे' इति सूत्रस्य 'अनुपसर्गे' इत्यस्य प्रत्युदाहरणमेतत् ।

**जलधिः** ( ई० ४५, ५४ )—अत्र 'कर्मण्यधिकरणे च' इति सूत्रेण अधिकरणेऽर्थे किप्रत्ययो भवति ।

**निगमः** ( ई० ४५ )—निर्गच्छन्त्यनेनेति निगमः–छन्दः । अत्र 'गोचर-सञ्चर-वह-व्रज-व्यजाऽऽपण-निगमाश्च' इति सूत्रेण निपातनात् 'निगमः' इति सिद्धं भवति ।

**दुष्प्रमयः** ( ई० ४५, ५१ )—अत्र 'ईषदुद्ःसुषु कृच्छ्राऽकृच्छ्रार्थेषु खल्' इति सूत्रेण खलि कृते 'निमिमीलीयां खलचोरात्वं नेति वाच्यम्' इति वार्तिकेन आत्वाभावो भवति ।

**अर्त्तित्वा** ( ई० ४५ )—'वञ्चिलुञ्च्यृतश्च' इति किद्विकल्पपक्षे रूपमिदम् ।

**यष्टिग्राहं युध्यन्ते**—अत्र 'द्वितीयायाश्च' इति वार्तिकेन णमुल्प्रत्ययो भवति ।

**जागर्या** ( ई० ४६ )—जागृधातोः 'जागर्तेरकारो वा' इति वार्तिकेन पाक्षिके शप्रत्यये कृते शित्त्वेन सार्वधातुकत्वात् यकि 'जाग्रोऽविचिण्णल्ङित्सु' इति गुणे स्वादिकार्ये 'जागर्या' इति ।

**धूत्वा** ( ई० ४६ )—'धूञ् धातोः 'समानकर्तृकयोः पूर्वकाले' इत्यनेन क्त्वा-प्रत्यये 'स्वरतिसूतिसूयति' इत्यादिना इड्विकल्पे प्राप्ते 'स्वरत्यादेः श्र्युकः कितीति नित्यमिडभावः पूर्वविप्रतिषेधेन' इत्यनेन निषेधे विभक्त्यादिकार्ये 'धूत्वा' इति ।

**वितत्य** ( ई० ४६ )—वि-उपसर्गात् तन्धातोः क्त्वाप्रत्यये तस्य ल्यपि कृते 'वा ल्यपि' इति सूत्रेण व्यवस्थितविभाषयाऽनुनासिकलोपविधानादत्र नित्यतया नलोपे 'ह्रस्वस्ये'ति तुकि प्रातिपदिककार्ये 'वितत्य' इति ।

**आखनिकबकः** ( ई० ४६ )—आङुपसर्गात् खन्धातोः 'खनेर्डडरेकेकबका वाच्याः' इति वार्तिकेन इकबकप्रत्यये स्वादिकार्ये 'आखनिकबकः' इति ।

कथङ्कारम् ( ई० ४६ )—कथमुपपदात् कृधातोः 'अन्यथैवङ्कथमित्थंसुसिद्धाऽप्रयोगश्चेत्' इति सूत्रेण णमुल्प्रत्यये वृद्धौ कथमो मकारस्यानुस्वारे परसवर्णे स्वादिकार्ये 'कथङ्कारम्' इति।

स्वपोषम् ( ई० ४६ )—धनेन पुष्णातीत्यर्थः। स्वशब्दोपपदात् पुष्धातोः 'स्वे पुषः' इति सूत्रेण णमुल्प्रत्यये गुणे स्वादिकार्ये 'स्वपोषम्' इति।

काण्डलावः ( ई० ४६ )—काण्डं लुनाति इति विग्रहे लुधातोः 'अण् कर्मणि च' इति सूत्रेण अण्प्रत्यये णित्वाद् वृद्धौ आवादेशे स्वादिकार्ये 'काण्डलावः' इति।

निगारः ( ई० ४६ )—नि-उपपदकगृधातोः 'उन्न्योर्ग्रः' इति सूत्रेण घञि वृद्धौ स्वादिकार्ये 'निगारः' इति।

पुष्पप्रचयः ( ई० ४६ )—चौर्येणेति शेषः। 'हस्तादाने चेरस्तेये' इति सूत्रस्य प्रत्युदाहरणमेतत्। तत्र हि 'अस्तेये' इत्यस्याऽभावे अत्रापि घञि वृद्धौ 'पुष्पप्रचायः' इति स्यात्। ( 'पुष्पप्रचयम्' इत्येवोदाहरणमिति केचित् )।

उन्मादः ( ई० ४६ )—'मदोऽनुपसर्गे' इति सूत्रस्य प्रत्युदाहरणमेतत्। तत्र हि 'अनुपसर्गे' इत्यस्याभावे 'धनमदः' इतिवत् 'उन्मदः' इति स्यात्।

नीवाराः ( ई० ४७ )—नीत्युपपदे वृधातोः 'नौ वृ धान्ये' इति सूत्रेण घञ्प्रत्यये ञित्वाद् वृद्धौ 'उपसर्गस्य घञ्यमनुष्ये' इति दीर्घे विभक्त्यादिकार्ये 'नीवाराः' इति।

विगणय्य ( ई० ४७,५८ ) 'वि' उपसर्गात् 'गण संख्याने' अस्मात् णिचि अतो लोपे 'विगणि' इति, तस्मात् क्त्वाप्रत्यये तस्य 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इत्यनेन ल्यपि णेरयादेशे विभक्त्यादिकार्ये 'विगणय्य' इति।

उदित्वा ( ई० ४७ )—वद्धातोः क्त्वाप्रत्यये 'वचिस्वपी'ति संप्रसारणे पूर्वरूपे इटि 'मृडमृदगुधकुषक्लिशवदवसः क्त्वा' इति सूत्रेण किद्वद्भावात् गुणाऽभावे स्वादिकार्ये 'उदित्वा' इति।

अजकनाशम् ( ई० ४७ )—'उपमाने कर्मणि च' इति सूत्रेण नश्धातोर्णमुल् प्रत्यये णित्वाद् वृद्धौ विभक्त्यादिकार्ये 'अजकनाशम्' इति। अजक इव नष्ट इत्यर्थः।

**गेहानुस्कन्दम्**—'विशिपतिपदिस्कन्दां व्याप्यमानाऽऽसेव्यमानयोः' इति सूत्रेण स्कन्दधातोर्णमुल्प्रत्यये विभक्त्यादिकार्ये 'गेहानुस्कन्दम्' इति ।

**उपाध्यायः** ( ई० ४८ ५२ )—उप-अधिपूर्वकात् इङ्धातोः 'इङश्च' इति सूत्रेण घञ् प्रत्यये उपधावृद्धौ आयादेशे यणि सवर्णदीर्घे कृदन्तत्वात् प्रातिपदिकसंज्ञायां सौ सस्य रुत्वे विसर्गे 'उपाध्यायः' इति ।

**काशीनिकायः** ( ई० ४८ )—नि-उपसर्गात् चिधातोः 'निवासचितिशरीरोपसमाधानेष्वादेश्च कः' इति सूत्रेण घञि सन्नियोगशिष्टेन चकारस्य ककारे वृद्धौ आयादेशे स्वादिकार्ये 'निकायः' इति । काशी मोक्षार्थकस्य निवास इत्यर्थः ।

**कीर्तिः** ( ई० ४८ )—'कॄत संशब्दने' अस्मात् 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च' इति सूत्रेण निपातनात् क्तिन्प्रत्यये ईत्वे स्वादिकार्ये 'कीर्तिः' इति ।

**सुप्रलम्भः** ( ई० ४८ )—'न सुदुर्भ्यां केवलाभ्याम्' इति सूत्रस्थकेवलाभ्यामित्यस्य प्रत्युदाहरणमेतत् । सु-प्र-उपसर्गकलभ्धातोः 'ईषद्दुःसुषु कृच्छ्राऽकृच्छ्रार्थे षुखल्' इति सूत्रेण खलि 'उपसर्गात् खल्घञोः' इत्यनेन नुमि विभक्त्यादिकार्ये 'सुप्रलम्भः' इति ।

**मूषिकाविलम्** ( ई० ४८ )—'वर्षप्रमाण ऊलोपश्चास्यान्यतरस्याम्' इति सूत्रस्थ 'अस्येति किम्' इत्यस्य प्रत्युदाहरणमेतत् । 'अस्ये'त्यनुक्तौ उपपदेऽपि ऊकारस्य लोपः स्यादिति भावः ।

**मूलकेनोपदंशम्** ( ई० ४८ )—मूलकेन उपदंशं भुङ्क्ते इति विग्रहे 'उपदंशस्तृतीयायाम्' इति सूत्रेण णमुलि विभक्तिकार्ये सिद्धं रूपं भवति । 'तृतीयाप्रभृतीन्यन्यतरस्याम्' इति समासाऽभावे रूपमिदम् । ननु ल्यबन्तसकर्मकदंशधातुयोगे मूलकस्य शब्दतः कर्मत्वाऽभावेन मूलकोपदंशयोः सम्बन्धाऽभावेन सामर्थ्याऽभावात् णमुल्प्रत्ययः समासश्चात्र कथमिति चेन्न, किमुपदश्य भुङ्क्ते इति कर्मणोऽपेक्षायां मूलकमुपदश्य भुङ्क्ते इत्यर्थेन समायाति कर्मत्वं मूलकस्य, दंशधातुना सहार्थसम्बन्धस्य सत्त्वात् । यदि तृतीयायाः शब्दतः एवान्वये प्रत्यय इष्यते तर्हि 'करणे हनः' इतिवत् 'उपदंशः करणे' इत्येव ब्रूयात् । इत्थं च तृतीयाग्रहणसामर्थ्येन आर्थसम्बन्ध एवाऽत्रेष्टः । शब्दतस्तु मूलकं भुजिक्रियाम्प्रति करणमेव ।

**गेहमनुप्रवेशमनुप्रवेशम्** ( ई० ४८ )—अत्र 'विशिपतिपदिस्कन्दां व्याप्यमानाऽऽसेव्यमानयोः' इति सूत्रेण णमुलि विभक्त्यादिकार्ये सिद्धं रूपं भवति ।

**परावनुपात्यय इणः** ( ई० ४८ )—परौ उपपदे इण्धातोर्घञ् , अनुपात्यये गम्ये इत्यर्थः । 'तव पर्यायः' इत्युदाहरणम् ।

**कर्मणि चेति** ( ई० ४८, ५२ )—येन स्पृश्यमानस्य कर्तुः शरीरसुखमुत्पद्यते तस्मिन् कर्मण्युपपदे ल्युट् स्यादित्यर्थः । 'पयःपानं सुखम्' इत्युदाहरणम् ।

**न क्तिचि दीर्घश्च** (ई० ४८)-अनिटां वनतितनोत्यादीनां च दीर्घानुनासिकलोपौ न स्तः क्तिचि परे इत्यर्थः । यन्तिः, रन्तिः, वन्तिः, तन्तिः, इत्युदाहरणानि ।

**वा ल्यपि** ( ई० ४८ )—अनुदात्तोपदेशानां वनतितनोत्यादीनामनुनासिकलोपो वा स्याल्ल्यपि इत्यर्थः । आगत्य, आगम्य, प्रणत्य, प्रणम्य, प्रहत्य, प्रमत्य, प्रवत्य, वितत्य, इत्याद्युदाहरणानि ।

**कषादिषु यथाविध्यनुप्रयोगः** ( ई० ४८, ५२ )—यस्मात् 'निमूलसमूलयोः कषः' इत्यारभ्य 'उपमाने कर्मणि च' इत्यन्तैः सूत्रैः णमुलुक्तः, स एवानुप्रयोक्तव्य इत्यर्थः । 'निमूलकाषं कषति' इत्युदाहृतम् ।

**व्यावक्रोशी** ( ई० ४९, ५१, ५७ )—वि-अव इत्युपसर्गात् 'क्रुश आह्वाने' इति धातोः स्त्रीत्वविवक्षायां 'कर्मव्यतिहारे णच् स्त्रियाम्' इति सूत्रेण णच्प्रत्यये यणि 'व्यवक्रुश' इति, तस्मात् 'कृद्ग्रहण-' परिभाषया सोपसर्गधातोर्णजन्तत्वात् 'णचः स्त्रियाम्' इति सूत्रेण अञि 'न य्वाभ्याम्-' इति प्राप्तस्यैचोः 'न कर्मव्यतिहारे' इत्यनेन निषेधे 'तद्धितेष्वचामादेः' इत्युपसर्गस्यादिवृद्धौ अन्तत्वात् ङीपि विभक्तिकार्ये 'व्यावक्रोशी' इति । परस्परं निन्दक इत्यर्थः ।

**संपत्** ( ई० ४९ )—समुपसर्गात् पत्धातोः 'सम्पदादिभ्यः क्विप्' इति क्विपि क्विपः सर्वापहारे विभक्तिकार्ये 'सम्पत्' इति ।

**पुत्रकाम्या** ( ई० ४९ )—पुत्रकाम्यशब्दात् 'अप्रत्ययात्' इति सूत्रेण स्त्रियाम् अकारप्रत्यये स्त्रीत्वाट्टापि विभक्तिकार्ये 'पुत्रकाम्या' इति ।

**स्वाढ्यं भवम्** ( ई० ५९ )—अनाढ्येनाढ्येन सुखेन भूयते इति विग्रहः । अत्र 'कर्तृकर्मणोश्च्व्यर्थयोरिति वाच्यम्' इति वार्तिकेन खलि खित्वान्मुमि विभक्तिकार्ये 'स्वाढ्यं भवम्' इति सिद्धम् ।

**आरावः** ( ई० ५४ )—आङुपपदात् रुधातोः 'विभाषा ङि रुप्लुवोः' इति सूत्रेण घञि 'अचो ञ्णिति' इति वृद्धौ आवादेशे विभक्तिकार्ये 'आरावः' इति ।

**वरः** ( ई० ५४ )—वृधातोः 'ग्रहवृदृनिश्चिगमश्च' इति अप्प्रत्यये गुणे रपरत्वे विभक्तिकार्ये 'वरः' इति।

**समज्या** ( ई० ५४ )—समजन्त्यस्याम् इति विग्रहे 'संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः' इति क्यपि कृते अजेर्वीभावे प्राप्ते 'अजेः क्यपि वीभावो नेति वाच्यम्' इति वार्तिकेन निषेधे स्त्रीत्वाट्टापि विभक्तिकार्ये 'समज्या' इति।

**कृत्या** ( ई० ५४ )—'कृञः श च' इति सूत्रे 'कृञः क्यप् स्यात्' इत्यर्थक 'कृञ्' इति योगविभागेन कृधातोः क्यपि 'ह्रस्वस्य–' इति तुकि स्त्रीत्वाट्टापि विभक्तिकार्ये 'कृत्या' इति।

**क्रिया** ( ई० ५४ )—'कृञः श च' इति सूत्रे 'श च' इति पृथग्योगविभागेन कृधातोः शप्रत्यये 'रिङ्शयग्लिङ्क्षु' इत्यनेन ऋतो रिङादेशे शितः सार्वधातुकत्वेन ङित्त्वाद् गुणनिषेधे सति 'अचि श्नुधातु–' इतीयङि स्त्रीत्वाट्टापि विभक्तिकार्ये 'क्रिया' इति।

**मृडित्वा** ( ई० ५४ )—मृड्धातोः 'समानकर्तृकयोः पूर्वकाले' इति क्त्वाप्रत्यये इटि 'न क्त्वा सेट्' इत्यनेन किन्निषेधे प्राप्ते 'मृडमृदगुधकुषक्लिशवदवसः क्त्वा' इत्यनेन तं प्रबाध्य कित्त्वे कित्त्वाल्लघूपधगुणनिषेधे कृदन्तत्वात् सौ अव्ययत्वात् सुब्लुकि उक्तं रूपं जातम्।

**प्रगाय** ( ई० ५४ )—प्रोपसर्गात् गाधातोः 'समानकर्तृकयोः–' इति क्त्वाप्रत्यये 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति ल्यपि कृते 'घुमास्था' इति इत्त्वे प्राप्ते 'न ल्यपि' इति निषेधे कृदन्तत्वात् सौ अव्ययत्वात् सुब्लुकि 'प्रगाय' इति।

**संस्तावः** ( ई० ४४ )—समुपसर्गात् स्तुधातोः 'यज्ञे समि स्तुवः' इति सूत्रेण घञि ञित्वाद् वृद्धौ आवादेशे विभक्तिकार्ये 'संस्तावः' इति। समेत्य स्तुवन्ति यस्मिन् देशे छन्दोगाः स देशः संस्तावः।

**भीमः** ( ई० ५५ )—'भीमादयोऽपादाने' इति सूत्रेण 'भियो हेतुभये षुक्' इति मप्रत्ययसन्नियोगेन निपातनात् विभाषया षुकि विभक्तिकार्ये 'भीष्मः' इति। षुगभावे 'भीमः' इति च भवति।

**शारो वायुः** (ई० ५५)—शीर्यन्ते पर्णफलादीनि येनेति विग्रहे 'शॄवायुपर्णनिवृषु' इति सूत्रेण घञि 'अचो ञ्णिति' इति वृद्धौ रपरत्वे विभक्तिकार्ये 'शारः' इति।

**प्रस्तावः** ( ई० ५४ )—प्रोपसर्गात् स्तुधातोः 'प्रे द्रुस्तुस्रुवः' इति सूत्रेण घञ् प्रत्यये 'अचो ञ्णिति' इति वृद्धौ आवादेशे विभक्तिकार्ये 'प्रस्तावः' इति ।

**पटस्य विस्तारः** ( ई० ५५ )—विपूर्वात् स्तृधातोः 'प्रथने वावशब्दे' इति सूत्रेण घञि ञित्वाद् 'अचो ञ्णिति' इति वृद्धौ रपरत्वे विभक्तिकार्ये 'विस्तारः' इति ।

**हसः** ( ई० ५५ ) हस् धातोः 'स्वनहसोर्वा' इति सूत्रेण अप्प्रत्यये विभक्तिकार्ये 'हसः' इति । पक्षे अनेनैव घञि ञित्वाद् 'अचो ञ्णिति' वृद्धौ इति विभक्तिकार्ये 'हासः' इति ।

**यत्नः** ( ई० ५५ )—'यत्' धातोः 'यजयाचयतविच्छप्रच्छरक्षो नङ्', इति नङि विभक्तिकार्ये 'यत्नः' इति ।

**याच्ञा** ( ई० ५५ )—याच्धातोः 'यजयाचयतविच्छप्रच्छरक्षो 'नङ्' इति नङि नस्य श्चुत्वेन ञकारे । स्त्रीत्वात् टापि विभक्तिकार्ये 'याच्ञा' इति ।

**पक्तिः** ( ई० ५५ )—पच्धातोः 'स्थागापापचो भावे' इति सूत्रेण क्तिन्प्रत्यय कुत्वे विभक्तिकार्ये 'पक्तिः' इति ।

**चर्चा** ( ई० ५५ )—चर्च् धातोः 'चिन्तिपूजिकथिकुम्बिचर्चश्च' इति सूत्रेण अङि स्त्रीत्वात् टापि विभक्तिकार्ये 'चर्चा' इति ।

**उच्चैःकृत्य** ( ई० ५२, ५५ )—'तृतीया प्रभृतीन्यन्यतरस्याम्' इति समास-पक्षे 'अव्ययेऽयथाभिप्रेताख्याने कृञः क्त्वाणमुलौ' इति क्त्वाप्रत्यये कृते क्त्वो-ल्यपि अव्ययत्वात् सुब्लुकि उक्तं रूपं सिद्धम् ।

**नानाकृत्य** ( ई० ५५ ) अनाना नाना कृत्वा इति नानाकृत्य । अत्र 'नाधार्थप्रत्यये च्व्यर्थे' इति क्त्वाप्रत्यये कृते क्त्वोर्ल्यपि अव्ययत्वात् सुब्लुकि 'नानाकृत्य' इति ।

**पर्याप्तिवचनेरेष्वलमर्थेषु** ( ई० ५० )—पर्याप्तिः पूर्णता, तद्वाचिषु सामर्थ्य-वचनेषूपपदेषु तुमुन् स्यात्, इति सूत्रार्थः । पर्याप्तीत्यस्य विवरणं—पूर्णता । अल-मर्थेष्वित्यस्य विवरणं-'सामर्थ्यवचनेषु' इति । 'पर्याप्तो भोक्तुम्' इत्याद्युदाहरणम् ।

**पर्याप्तो भोक्तुम्** ( ई० ५६ )—भुज्धातोः 'पर्याप्तिवचनेष्वलमर्थेषु' इति सूत्रेण भुज्धातोः तुमुन्प्रत्यये गुणे कुत्वे अव्ययत्वात् सुब्लुकि 'भोक्तुम्' इति 'पर्याप्तो भोक्तुम्' इति भोक्तुं समर्थ इत्यर्थः ।

**यागाय याति** ( ई० ५६, ५७ )—यज्धातोः 'भावचनाश्च' इति सूत्रेण घञि उपधावृद्धौ जस्य कुत्वे विभक्तिकार्ये 'यागः' इति, तस्य चतुर्थ्येकवचने 'यागाय' इति । अत्र 'तुमर्थाच्च भाववचनात्' इति चतुर्थी । तादर्थ्ये चतुर्थी तु न, तादर्थ्यस्य प्रत्ययेनैव लाभात् ।

**सारः** ( ई० ५६ )—सरति कालान्तरमिति सारः । सृधातोः 'सृ स्थिरे' इति सूत्रेण घञि उपधावृद्धौ विभक्तिकार्ये 'सारः' इति ।

**रोगः** ( ई० ५५ )—रुजतीति रोगः । रुज्धातोः 'पदरुजविशस्पृशो घञ्' इति घञि गुणे जस्य कुत्वे विभक्तिकार्ये 'रोगः' इति ।

**तव पर्यायः** ( ई० ५६ )—परीत्युपपदकाद् 'इण्' धातोः 'परावनुपात्यय इणः' इति सूत्रेण घञि 'अचो ञ्णिति' इति वृद्धौ आयादेशे यणि विभक्तिकार्ये 'पर्यायः' इति ।

**गोमयानां निकेचायः** ( ई० ५६ )—अत्र 'निवासचितिशरीरोपसमाधानेष्वादेश्च कः' इति सूत्रेण घञि ककारादेशे च जाते वृद्धौ आयादेशे विभक्तिकार्ये 'निकेचायः' इति ।

**उत्पावः** ( ई० ५६ )—उत्पूर्वकात्पूधातोः 'अदि श्रयतियौतिपूद्रुवः' इति सूत्रेण घञि वृद्धौ आवादेशे विभक्तिकार्ये 'उत्पावः' इति ।

**धनमदः** ( ई० ५६ )—अत्र 'अदोऽनुपसर्गे' इति सूत्रात् अप्प्रत्यये विभक्तिकार्ये 'धनमदः' इति ।

**हवः** ( ई० ५६ )—अत्र 'भावेऽनुपसर्गस्य' इति सूत्रेण ह्वयतेः सम्प्रसारणे अप्प्रत्यये च कृते पूर्वरूपे गुणे अवादेशे विभक्तिकार्ये 'हवः' इति ।

**स्तम्बघनः** ( ई० ५६ )—स्तम्बोपपदकहन्धातोः 'स्तम्बे घ च' इति सूत्रेण अप्प्रत्यये चकारात् सन्नियोगशिष्टेन घनादेशे च जाते विभक्तिकार्ये उक्तं रूपं सिद्धम् । कप्रत्ययपक्षे तु 'गमहन–' इत्युपधालोपे 'स्तम्बघ्नः' इति भवति ।

**शय्या** ( ई० ५६ )—शेरतेऽस्यामिति शय्या । अत्र शीङ्धातोः 'संज्ञायां समजनिषद—' इति सूत्रेण क्यप्प्रत्ययो भवति ।

**प्रच्छदः** ( ई० ५६ )—प्रोपसर्गात् छादधातोः 'पुंसि संज्ञायां घप्रायेण' इति

घप्रत्यये 'छादेर्घे द्व्युपसर्गस्य' इति द्विप्रभृत्युपसर्गहीनस्य छादेर्ह्रस्वे विभक्त्यादिकार्ये 'प्रच्छदः' इति ।

**भवताद् भूतिः** ( ई० ५६ )—( आशिषि लोट् ) भूधातोः 'क्तिच्क्तौ च संज्ञायाम्' इति सूत्रेण कर्तरि क्तिच्प्रत्यये विभक्तिकार्ये 'भूतिः' इति । 'तितुत्र–' इति निषेधात् इण्न ।

**प्रथमं भोजम्** ( ई० ५६ )—भुज्धातोः 'विभाषाऽग्रे प्रथमपूर्वेषु' इति सूत्रेण णमुलि उपधागुणे विभक्तिकार्ये 'भोजम्' इति । क्त्वापक्षे तु 'भुक्त्वा' इति ।

**नामग्राहमाह्वयति** ( ई० ५६ )—द्वितीयान्ते नामन्शब्दोपपदे ग्रह्धातोः 'नाम्ना दिशिग्रहोः' इति सूत्रेण णमुलि अनुबन्धलोपे उपधावृद्धौ विभक्तिकार्ये 'नामग्राहम्' इति सिद्धम् ।

दाराः (ई० ५८)—दारयन्तीति चित्तं विद्रावयन्तीति दाराः । 'दृ विदारणे' इति धातुः । अस्मात् ण्यन्तात् 'दारजारौ कर्तरि णिलुक् च' इति वार्तिकेन कर्तरि घञि णिलोपं बाधित्वा णेर्लुकि च कृते 'निमित्तापाये'ति परिभाषया ण्याश्रयवृद्धस्यापि निवृत्तौ सत्याम् 'अचो ञ्णिति' इति वृद्धौ रपरत्वे स्त्रीत्वाट्टापि विभक्तिकार्ये 'दाराः' इति । ( दारशब्दो नित्यं बहुवचनान्तः ) ।

**चयः** ( ई० ५८ )—चिधातोः 'एरच्' इति अच्प्रत्यये गुणे अयादेशे विभक्तिकार्ये 'चयः' इति ।

**विश्नः** ( ई० ५८ )—विच्छ्धातोः 'यजयाचयतविच्छप्रच्छरक्षो नङ्' इति नङि 'च्छ्वोः शूड्–' इति शादेशे विभक्तिकार्ये 'विश्नः' इति ।

**कीर्तिः** ( ई० ५८ )—'कृत संशब्दने' इति धातोः स्वार्थिकण्यन्तात् 'ण्यासश्रन्थोयुच्' इति युचं बाधित्वा 'ऊतियूतिजूतिसातिहेतिकीर्तयश्च' इति सूत्रेण निपातनात् क्तिनि इत्त्वे रपरत्वे विभक्तिकार्ये 'कीर्तिः' इति ।

**वेदना** ( ई० ५८ )—लाभार्थाद् विद्धातोः 'घट्टिवन्दिविदिभ्यश्चेति वाच्यम्' इति युचि योरनादेशे गुणे स्त्रीत्वविवक्षायां टापि विभक्तिकार्ये 'वेदना' इति ।

**तूष्णीं भूय** ( ई० ५५, ५८ )—तूष्णीं शब्दे उपपदे भूधातोः 'तूष्णीमि भुवः' इति सूत्रेण क्त्वाप्रत्यये क्त्वोल्यपि कृदन्तत्वात् सौ सुब्लुकि उक्तं रूपं सिद्धम् । णमुल्पक्षे वृद्धौ आवादेशे 'तूष्णीं भावम्' इति ।

भाववचनाश्च ( ई० ५२ )—भावे इत्यधिकृत्य घृणादयो विधास्यन्ते ये सामान्यतस्ते क्रियार्थायां क्रियायामुपपदे भविष्यति काले विशेषविहितेनापि तुमुना समुच्चिता भवन्तीति सूत्रार्थः । 'यागाय याति' इत्युदाहरणम् । 'यागाय याति' इत्यत्र 'तुमर्थाच्च भाववचनात्' इति चतुर्थी । तादर्थ्यचतुर्थी तु न, तादर्थ्यस्य प्रत्ययेनैव लाभात् । न च वासरूपविधिनैव कार्ये सिद्धे सूत्रमिदं किमर्थमिति वाच्यम्, क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ती'त्युक्तेः ।

शूर्पनिष्पावौ ( ई० ५३ )—निष्पूयते तुषापनयनेन शोध्यते इति निष्पावः, तण्डुलादिराशिः । अत्र 'परिमाणाख्यायां सर्वेभ्यः' इति सूत्रेण घञि वृद्धौ आवादेशे विभक्तिकार्ये 'शूर्पनिष्पावौ' इति सिद्धम् । शूर्पेण निष्पावः शूर्पनिष्पावः 'कर्तृकरणे कृता बहुलम्' इति समासः । द्वित्वं तु शूर्पद्वारा निष्पावेऽन्वेति ।

दारजारौ कर्तरि णिलुक् च ( ई० ५३ )—वार्तिकमिदम् । दॄ विदारणे, जॄ वयोहानौ, आभ्यां ण्यन्ताभ्यां कर्तरि घञ्, णिलोपं बाधित्वा णिलुक् चेत्यर्थः । दारयन्ति = वित्तं विद्रावयन्तीति 'दाराः' इत्याद्युदाहरणम् ।

उपाध्याया-उपाध्यायी (ई० ५७)—उपेत्य = समीपं प्राप्य, अस्याः सकाशादधीयते, इत्यर्थः । 'इङ् अध्ययने' नित्यमधिपूर्वोऽयं धातुः । उपपूर्वकादध्युपसर्गाद् इङ्धातोः 'अपादाने स्त्रियामुपसंख्यानम्' 'तदन्ताच्च वा ङीष्' इति वार्तिकेन स्त्रीत्वे गम्ये घञि तदन्तात् ङीपि च कृते वृद्धौ आयादेशे सवर्णदीर्घे यणि विभक्त्यादिकार्ये 'उपाध्यायी' इति । ङीषभावपक्षे 'उपाध्याया' इति ।

उद्गारः ( ई० ५८ )—उदुपसर्गात् गॄधातोः 'उन्न्योर्ग्रः' इति सूत्रेण घञि वृद्धौ विभक्तिकार्ये 'उद्गारः' इति ।

न्यादः निघसः ( ई० ५३ )—निपूर्वकाद् अद्धातोः 'नौ ण च' इति सूत्रेण णप्रत्यये णित्वाद् वृद्धौ यणि विभक्तिकार्ये 'न्यादः' इति । घञि पक्षे 'घञपोश्च' इति सूत्रेण घस्लभावे 'निघसः' इति ।

प्रमादः ( ई० ५७ )—प्रोपसर्गकात् मद्धातोः घञि उपधावृद्धौ विभक्तिकार्ये 'प्रमादः' इति । 'प्रमदसंमदौ हर्षे' इति सूत्रस्थ 'हर्षे' इत्यस्य प्रत्युदाहरणमेतत् ।

विहवः ( ई० ५७ )—'वि' उपसर्गात् ह्वयतेः 'ह्वः सम्प्रसारणं च न्यभ्युप-

'विषु' इति सूत्रेण अप्प्रत्यये सम्प्रसारणे च कृते पूर्वरूपे गुणेऽवादेशे विभक्तिकार्ये 'विहवः' इति सिद्धम्।

पलिघः (ई० ५२)—परिहन्यतेऽनेनेति विग्रहे परिपूर्वकात् हन्धातोः 'परौ घः' इति सूत्रेण अप्प्रत्यये हस्य घत्वे च कृते 'परेश्च घाङ्कयोः' इति सूत्रेण रेफस्य लत्वे विभक्तिकार्ये 'पलिघः' इति। इह 'तरप्तमपौ घः' इति कृत्रिमस्य न ग्रहणं, व्याख्यानात्।

उप्त्रिमम् (ई० ५१)—'डुवप् बीजसन्ताने' इति धातोः 'ड्वितः क्त्रिः' इति क्त्रिप्रत्यये अनुबन्धलोपे कित्वाद् 'वचिस्वपि-' इति सम्प्रसारणे पूर्वरूपे 'क्त्रेर्मम् नित्यम्' इति मपि विभक्तिकार्ये उक्तं रूपं सिद्धम्।

समज्या (ई० ५३)—समजन्त्यस्यामिति विग्रहे सम्पूर्वादजेः 'संज्ञायां समजनिषदनिपतमनविदषुञ्शीङ्भृञिणः' इति क्यपि विभक्तिकार्ये 'समज्या' इति। 'समज्या तु सभा गोष्ठी' इत्यमरः।

निगृहीतिः (ई० ५१)—निपूर्वकात् ग्रह्धातो 'स्त्रियां क्तिन्' इति क्तिनि 'तितुत्रतथसिसु-' इति सूत्रस्थ 'तितुत्रेष्वग्रहादीनामिति वाच्यम्' इति वार्तिकेन इण्निषेधाभावे सति इटि 'ग्रहोऽलिटि-' इति दीर्घे 'ग्रहिज्ये'ति सम्प्रसारणे विभक्तिकार्ये 'निगृहीतिः' इति।

जरा (ई० ५३)—जॄधातोः 'षिद्भिदादिभ्योऽङ्' इति स्त्रियामङि ङित्वाद् गुणनिषेधे प्राप्ते 'ऋदृशोऽङि गुणः' इति गुणे रपरत्वे विभक्तिकार्ये 'जरा' इति।

विभाषाऽऽख्यानपरिप्रश्नयोरिञ्च (ई० ५०, ५३)—पूर्वं परिप्रश्नः पश्चादुक्तकथनमाख्यानम्। अल्पाच्तरत्वादाख्यानशब्दस्य पूर्वनिपातः। ततश्च—परिप्रश्ने आख्याने च गम्ये स्त्रियां नञ् वा स्यात्, चाण्वुल् इति सूत्रार्थः। वाऽसरूपविधिना सिद्धे विभाषाग्रहणं व्यर्थमित्यत आह मूले—'विभाषोक्तेर्यथाप्राप्तमन्येऽपि' इति। स्त्रियां वासरूपविधेरप्रवृत्त्या विभाषाग्रहणाऽभावे इञ्ण्वुलावेव स्याताम्, न तु प्रत्ययान्तरमित्यर्थः। परिप्रश्ने उदाहरति—कां त्वं कारिं कारिकां क्रियां कृत्यां कृतिं वाऽकार्षीः-इति। आख्याने उदाहरति—सर्वां कारिं कारिकां क्रियां कृत्यां कृतिं वाऽकार्षम्, इति। 'कारिकाम्' इति ण्वुलि रूपम्। 'क्रियाम्' इति 'कृञः श चे'ति शे रूपम्। 'कृत्याम्' इत्यत्र 'कृञः श चे'ति चकारात् क्यपि तुक्। 'कृतिम्' इत्यत्र तु चकारात् क्तिन्।

**पयःपानम्** ( ई० ५० )—'पयः' इति कर्मण्युपपदे पाधातोः 'कर्मणि च येन संस्पर्शात् कर्तुः शरीरसुखम्' इति सूत्रेण ल्युटि सुब्लुकि योरनादेशे सवर्णदीर्घे विभक्तिकार्ये 'पयःपानम्' इति ।

**उपालम्भः** ( ई० ५७ )—उप-आङ्पूर्वकात् लभ्धातोः 'ईषद्दुःसुषु–' इति 'उपसर्गात्खल्घञोः' इति मुमि सवर्णदीर्घे विभक्तिकार्ये 'उपालम्भः' इति ।

**सुलभम्** ( ई० ५३ )—सूपसर्गकात् लभ्धातोः 'ईषद्दुःसुषु–' इति खलि 'न सुदुर्भ्यां केवलाभ्याम्' इति सूत्रेण 'उपसर्गात् खल्घञोः' इति प्राप्तनुमो निषेधे विभक्तिकार्ये 'सुलभम्' इति ।

**स्वाढ्यङ्करः** ( ई० ५७ )—अनाढ्य आढ्यः सुखेन क्रियते इत्यर्थे 'कर्तृकर्मणोश्च्व्यर्थयोरिति वाच्यम्' इति वार्तिकेन कृधातोः खलि खित्त्वात् मुमि मस्यानुस्वारे परसवर्णे विभक्तिकार्ये उक्तं रूपं सिद्धम् ।

**मयतेरिदन्यतरस्याम्** ( ई० ५२ )—'वाऽन्यस्य संयोगादेः' इत्यतो वेति, 'न ल्यपि' इत्यतो नेति चानुवर्त्य-'मेङः इकारोन्तादेशः स्याद्वा ल्यपि' इति सूत्रार्थः सम्पद्यते । 'अपमित्य अपमाय वा याचते' इत्युदाहरणम् । त्वया गौर्दत्ता चेन्मया महिषो दीयते इत्येवं विनिमयं कर्तुं गां याचते इत्यर्थः ।

**परावरयोगे च** ( ई० ५० )—परावरयोर्योगे इति विग्रहः । योगशब्दस्य प्रत्येकमन्वयः । परेण कस्य योगः इत्याकांक्षायामवरस्येति लभ्यते । अवरेण कस्य योगः इत्याकांक्षायां परस्येति लभ्यते । ततश्च—परेण पूर्वस्य अवरेण परस्य योगे गम्ये धातोः क्त्वा स्यादित्यर्थः सम्पद्यते । अप्राप्य नदीं पर्वतः, 'अतिक्रम्य पर्वतं नदी' इत्याद्युदाहरणम् ।

**अप्राप्य नदीं पर्वतः** ( ई० ४१, ५७ )—अवरस्य परयोगे उदाहरणमेतत् । अत्र 'परावरयोगे च' इति सूत्रेण क्त्वाप्रत्यये 'समासेऽनञ्पूर्वे क्त्वो ल्यप्' इति ल्यपि कृदन्तत्वात् सौ अव्ययत्वात् सोर्लुकि 'अप्राप्य' इति । विन्ध्यपर्वताद् दक्षिणदेशे निवसतो विन्ध्यं गङ्गां च नदीमधिकृत्य प्रवृत्तमिदं वाक्यम् ।

**स्यन्दित्वा** ( ई० ५७ )—स्यन्दूधातोः 'समानकर्तृकयोः पूर्वकाले' इति क्त्वाप्रत्यये 'क्त्वि स्कन्दिस्यन्दोः' इति नलोपनिषेधे ऊदित्त्वात् 'स्वरतिसूति—' इति इटि कृदन्तत्वात् सौ अव्ययत्वात् सुब्लुकि 'स्यन्दित्वा' इति ।

उषित्वा ( ई० ५७ )—वस्धातोः क्त्वाप्रत्यये 'वसतिक्षुधोरिट्' इति इटि 'न क्त्वा सेट्' इति सूत्रं प्रबाध्य 'मृडमृदगुधकुषक्लिशवदवसः क्त्वा' इति किद्वद्-भावे 'वचिस्वपि–' इति सम्प्रसारणे पूर्वरूपे 'शासिवसी'ति षत्वे कृदन्तत्वात् सौ अव्ययत्वात् सुब्लुकि 'उषित्वा' इति।

अधीत्य ( ई० ५२ )—'इक् अध्ययने' नित्यमधिपूर्वः। तस्मात् क्त्वो ल्यपि सवर्णदीर्घे 'षत्वतुकोरसिद्धः' इति तुकि कर्तव्ये एकादेशशास्त्रस्य असिद्धत्वात् 'ह्रस्वस्य–' इति तुकि कृदन्तत्वात् सौ अव्ययत्वात् सुब्लुकि 'अधीत्य' इति।

प्रदाय ( ई० ५३ )—प्रोपसर्गात् दाधातोः क्त्वाप्रत्यये कृते 'दो दद्घोः' इति दत्त्वे प्राप्ते 'अदो जग्धि'रिति सूत्रस्य ल्यब्ग्रहणेन ज्ञापितया 'अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यब्बाधते' इति परिभाषया दत्त्वं प्रबाध्य क्त्वोल्यपि कृदन्तत्वात् सौ अव्ययत्वात् सुब्लुकि 'प्रदाय' इति।

न यद्यनाकाङ्क्षे ( ई० ५० )—'अनाकाङ्क्ष' इति पचाद्यजन्तेन नञ्-समासः। यच्छब्दे उपपदे पूर्वकाले यत् ( क्त्वा णमुल् चेति ) प्राप्तं तन्न, यत्र ( यस्मिन् वाक्ये ) पूर्वोत्तरकालिकक्रियापदे स्तः, तद्वाक्यं वाक्यान्तरं नाकाङ्क्षति चेत्, इत्यर्थः। पूर्वोत्तरकालिकक्रियापदद्वययुक्तं वाक्यं वाक्यान्तरं नाकांक्षति चेदिति यावत्। 'यदयं भुङ्क्ते ततः पठति' इत्युदाहरणम्। 'यदि'त्यव्ययम्। यदाऽयं भुंक्ते ततः परं पठतीत्यर्थः। इदमेकं वाक्यं भुजपठिक्रियापदद्वययुक्तं न वाक्यान्तरमाकाङ्क्षतीति भावः। इह क्त्वाणमुलौ न।

स्वादुमि णमुल् ( ई० ५२ )—स्वादुमीत्यर्थग्रहणं व्याख्यानात्। स्वाद्वर्थेषु कृञो णमुल् स्यादेककर्तृकयोः पूर्वकाले, इति सूत्रार्थः। अस्वाद्वीं स्वाद्वीं कृत्वा भुङ्क्ते स्वादुङ्कारं भुङ्क्ते, सम्पन्नकारं भुंक्ते, लवणङ्कारं भुङ्क्ते इत्याद्युदाहरणम्। अत्र निपातनात् पूर्वपदस्य मान्तत्वं बोध्यम्।

ब्राह्मणवेदं भोजयति (ई० ५६)—यं यं ब्राह्मणं वेदं जानाति लभते विचार-यति वा तं सर्वं भोजयतीत्यर्थः। विद ज्ञाने, विद्लृ लाभे, विद विचारणे, इति धातवः। कर्मोपपदेभ्यः तेभ्यो धातुभ्यः 'कर्मणि दृशिविदोः साकल्ये' इति णमुलि सुब्लुकि गुणे विभक्तिकार्ये 'ब्राह्मणवेदम्' इति।

समूलघातं हन्ति ( ई० ५२ )—समूलं हन्तीत्यर्थे 'समूलाऽकृतजीवेषु

हन्कृञ्ग्रहः' इति सूत्रेण हन्धातोर्णमुलि सुब्लुकि 'हनस्तोः—' इति तकारान्तादेशे 'हो हन्तेः' इति हस्य घत्वे उपधावृद्धौ विभक्तिकार्ये उक्तं रूपं सिद्धम्।

**उपदंशस्तृतीयायाम्** ( ई० ५० )—इतः प्रभृति पूर्वकाल इति मण्डूकप्लुत्या सम्बध्यते। तृतीयान्ते उपपदे उपपूर्वाद् दंशधातोर्णमुल् समानकर्तृकयोः पूर्वकाले इत्यर्थः। 'मूलकोपदशं भुंक्ते' इत्युदाहरणम्।

**सप्तम्यां चोपपीडरुधकर्षः** ( ई० ५१ )—अत्र तृतीयायामिति समुच्चीयते। पीड-रुध-कर्ष-एषां समाहार-द्वन्द्वात् पञ्चम्यर्थे प्रथमा। पुंस्त्वम् चार्षम्। उपपूर्वः पीडरुधकर्ष इति मध्यमपदलोपिसमासः। ततश्च—उपपूर्वेभ्यः पीडादिभ्यः सप्तम्यन्ते तृतीयान्ते चोपपदे णमुल् स्यादिति सूत्रार्थः सम्पद्यते। 'पार्श्वोपपीडं शेते-पार्श्वयोरुपपीडम्' इत्युदाहरणम्।

**अस्यतितृषोः क्रियान्तरे कालेषु** ( ई० ५२ )—क्रियामन्तरयति व्यवधत्ते इति क्रियान्तरः, तस्मिन् धात्वर्थे वर्तमानात् अस्यतेः तृष्यतेश्च कालवाचिषु द्वितीयान्तेषूपपदेषु णमुल् स्यादिति सूत्रार्थः। 'द्व्यहात्यासं गाः पाययति, द्व्यहमत्याशम्' इत्याद्युदाहरणम्। द्व्यहमतिक्रम्येत्यर्थः। अतिपूर्वादस्यतेर्णमुल्।

**द्व्यहतर्षम्** ( ई० ५१ )—द्व्यहं तृष्णावतीः कृत्वेत्यर्थः। कर्मोपपदकतृष्धातोः 'अस्यतितृषोः क्रियान्तरे कालेषु' इति सूत्रेण णमुलि सुब्लुकि गुणे रपरत्वे विभक्तिकार्ये उक्तं रूपं सिद्धम्।

**अन्वच्यानुलोम्ये** ( ई० ५३ )—अन्वक्शब्दे उपपदे भुवः क्त्वाणमुलौ स्तः आनुकूल्ये गम्यमाने, इत्यर्थः। 'अन्वग्भूय आस्ते-अन्वग्भूत्वा-अन्वग्भावम्' इत्युदाहरणम्।

इत्युत्तरकृदन्तप्रकरणम्।

इति दरभंगामण्डलान्तर्गत 'तरौनी' ग्रामवासिपण्डितश्रीमदनन्तलालझा-शर्मात्मजश्रीरामचन्द्रझाव्याकरणाचार्यविरचिता व्याकरण-मध्यमाचतुर्थखण्डप्रश्नोत्तरी समाप्ता।

# प्रश्नपत्राणि

१९५०

सिद्धान्तकौमुद्या भ्वादितः चुराद्यन्तेषु भागेषु प्रश्नाः ।

१ भवेयुः, एधिताहे, आनृजे, विव्यथे, निषीदति, स्थेयात् , जुहाव, एषु यथेच्छं पञ्चप्रयोगान् ग्रन्थोक्तदिशा साधयित्वा, षोपदेशलक्षणं प्रदर्शनीयम् । १०

२ जहि, शयीत, आत्थ, अध्यगीष्ट, असि, चकासति एतेषु पञ्च प्रयोगाः साधु साधनीयाः । १०

३ ह्रूयात् , अबिभरुः, नेनिजानि, जायते, विध्यति, मेद्यति, आप्नुवन्ति, एषु यथारुचि पञ्चप्रयोगान् संसाध्य, णोपदेशलक्षणं लेखनीयम् । १०

४ चकरतुः, विन्दति, अभुनक् , कुर्मः, ज्ञपयति, अर्थनिर्देशपुरस्सरमेते साध्याः । १०

५ परिहासे च मन्योपपदे मन्यतेरुत्तम एकवच्च, अभ्यासे चर्च, अस्तिसिचोऽपृक्ते, आम्प्रत्ययवत्कृञोऽनुप्रयोगस्य, सन्वल्लघुनि चङ्परेऽनग्लोपे, एतेषां सूत्राणाम् अर्थाः सिद्धान्तरीत्या साकल्येन प्रतिपादनीयाः । १०

अथवा

ङित्वोक्तेर्ज्ञायते—क्वचिदनुबन्धकार्येष्वनल्विधावितिप्रतिषेध इत्यादेराशयः प्रतिपादनीयः ।

१९५०

सिद्धान्तकौमुद्या णिजन्तप्रतिक्रियाद्युणादिप्रकरणान्ते प्रश्नाः ।

१ अशूशवत्, अपीप्यत् , दुद्यूषति, सुष्वापयिषति, अरारिता, अबोभूवीत् , चार्कर्ति, एषु पञ्च प्रयोगाः साधु साधनीयाः । १०

२ गव्याञ्चकार, स्वमनायत, शावयति, पुपुत्रीयिषति, एषु त्रीन् प्रयोगान् तत्तत्कार्यविशेषप्रदर्शनपूर्वकं संसाध्य विपादिकां व्याददाति, संविद्रते, क्रोधं विनयते, दर्शयते भवः, आदयते देवदत्तेन, एषां मध्ये चतुर्षु प्रयोगेषु पदव्यवस्थोपपादनीया । १०

३ दायिषीष्ट, अजागारि, युज्यते ब्रह्मचारी योगम्, एतान् संसाध्य वसन्तीह पुरा छात्राः, कथं धर्मं त्यजेस्त्यजसि वा, वसन् ददर्श, याहि याहीति याति, अपि गिरिं शिरसा भिन्द्यात, एषां मध्ये चतुर्षु सूत्र-निर्देशपुरस्सरं लकारार्थः प्रदर्श्यताम् । १०

४ आचर्यो देशः, साम्नाय्यम्, रजकः, उग्रंपश्यः, प्रस्वेदितश्चैत्रः, श्येनचित्, आदिवान्, एषु पञ्च प्रयोगानर्थनिर्देशपूर्वकं संसाध्य–'ब्रह्मभ्रूण-वृत्रेषु क्विप्' इति सूत्रस्य नियमाकारं काशिकाकारमतेन प्रदर्श्य फल-ञ्चोपवर्ण्य भाष्यकारमतमुच्यताम् । १०

५ [ सम्पृचेतिसूत्रमविकलमुल्लिख्य अध्यायपादादिनिर्देशपूर्वकं पदच्छेदं विधाय सूत्रस्यैकमुदाहरणं संस्कृत्य–मदिरा, ओम्, निद्रा, रशना, वत्सरः, परमेष्ठी, हरिः, भर्गः, ईश्वरः, एतेषां षट्सु प्रयोगेषु प्रकृतिप्रत्ययादि-निर्देशः कार्यः । ] १०

## १९५०

### सिद्धान्तकौमुद्या उत्तरकृदन्ते प्रश्नाः ।

१ कृष्णं दर्शको याति, रागः, साराविणम्, समज्या, पयःपानं सुखम्, पीत्वा खलु, परिवीय, गेहानुप्रपादम्, एषु षट् प्रयोगाः ससूत्रविशेष-कार्यनिर्देशं साध्यन्ताम् । १२

२ पर्याप्तिवचनेष्वलमर्थेषु, विभाषाख्यानपरिप्रश्नयोरिञ्च, परावरयोगे च, न यद्यनाकाङ्क्षे, उपदंशस्तृतीयायाम्, एषां सूत्राणां सोदाहरणमर्था लेख्याः ।

## १९५१

### सिद्धान्तकौमुद्या दशगणीभागे प्रश्नाः ।

१ अभूवन्, ऐधिढ्वम्, ऊखतुः, विवयिथ, तिप्सीष्ट, प्रक्रियाप्रदर्शनपूर्वक-मेषां साधुत्वमभिधाय, 'दन्त्यः केवलदन्त्यो नतु दन्तोष्ठजोऽपि' इत्यस्याः पङ्क्तेराशयः शङ्कासमाधिभ्यां स्फोरणीयः । १०

२ क्रादीनाञ्चतुर्णां ग्रहणं नियमार्थम् । संज्ञायाः कार्यकालत्वादित्यादि । अनयोरन्यतरा फक्किका शङ्कासमाधानाभ्यां विशदं व्याख्येया । १०

३ पर्यवसितं नियमयन्, रसो विश्रामयन्, न विश्वसेदविश्वस्ते। एषु पूर्वपक्षप्रदर्शनपूर्वकमधोरेखाङ्कितपदानां साधुत्वमन्वाख्याय, अवधीत्, अध्ययै, शाधि, अजागरीत्, एषां साधुत्वप्रकारोऽभिधीयताम्। १०

४ अबिभरुः, ऐयः, बन्धः, क्षीयते, मृग्यति, हन्धः, संचस्करतुः, एषां यथाशास्त्रं सिद्धिप्रकारमभिधाय ग्रन्थोक्तशङ्कासमाधाने विवृणुत। १०

५ अपप्रथत्, अचिकीर्तत्, औनमत्, एषां सिद्धिप्रकारं प्रदर्श्य 'णिच्यच आदेशो न स्यात्' इत्यादिपङ्क्तिः सप्रसंगं व्याख्यायताम्। १०

अथवा

णिच्यच आदेशो न स्यात्, चिन्तेतिपठितव्ये इदित्करणं णिचः पाक्षिकत्वे लिङ्गम्, पूर्वं वृद्धौ सत्यां टिलोपः। एते निर्देशाः फलप्रमाणप्रदर्शनमुखेन व्याख्येयाः।

१९५१

सिद्धान्तकौमुद्या णिजन्तप्रक्रियाद्युणादिप्रकरणान्तभागे प्रश्नाः।

तत्प्रयोजको हेतुश्चेत्यनेन कर्तुः प्रयोजकस्य, कर्तृसंज्ञायाः, हेतुसंज्ञायाश्च किं फलम्? प्रयोज्यस्य प्रयोजकस्य च कर्तृत्वे कुत्रचिद् वाक्ये रूपवैषम्यं प्रदर्श्य 'किंवृत्ते लिप्सायां' किंवृत्ते लिङ्लुटावित्यनयोः किंवृत्तत्वं किम् इति विलिख्य च तयोरुदाहरणं लिखत। १०

अथवा

औब्जिजत्, अध्यजीगपत्, ईर्त्सति, अधिजिगापयिषति, संचेस्कीयते, परीपृच्छ्यते, शाशय्यते एषु सप्तसु केचन पञ्चैव प्रयोगा वैकल्पिकरूपसंसाधनपुरःसरं संसाधनीयाः।

२ जङ्घनीति, जर्गृधीति, विद्वायते, औजिढत्, अशिश्वीयिषति, मासमृत, संपश्यते, एषु सप्तसु केचन पञ्चैव प्रयोगाः सम्यक् साधनीयाः। १०

३ शास्त्रे वदते, शिशयिते, अध्यापयति वेदम्, वत्स्यति, आरिती, घानिष्यते, भिद्यते काष्ठम्, सुप्तोऽहं किल विललाप। एषु अष्टसु केचन पञ्चैव प्रयोगाः सम्यक् सूत्रनिर्देशपुरःसरं साधनीयाः। १०

४ सूर्यः, समाजः, पादपदः, ददः, क्षेमङ्करः, विश्वः, धृष्टः, जरधः, आरिवान्, एषु नवसु पञ्चैव साधनीयाः। १०

५ [ सिन्धुः, भिषक् , भ्रूः, आयुः, तातः, कश्मीरो देशः, त्रयः, एषु सप्तसु पञ्चैव प्रयोगाः प्रकृतिप्रत्ययविभागप्रदर्शनपूर्वकं तत्तत्कार्यविशेषप्रदर्शनपूर्वकञ्च साधु साधनीयाः । ] १०

### १९५१

#### सिद्धान्तकौमुद्या उत्तरकृदन्ते प्रश्नाः ।

१ कम्बलदायो व्रजति, व्यावक्रोशी, उप्त्रिमम् , निगृहीतिः, दुष्प्रमयः, उषित्वा, धनपोषम् , द्रुपहतर्षम् , एषु षट्प्रयोगाः ससूत्र-विग्रह-विशेषकार्यनिर्देशं साध्यन्ताम् । १२

२ समानकर्तृकेषु तुमुन् , न सुदुर्भ्यां केवलाभ्याम् , अन्यथैवंकथमित्थंसु०, हिंसार्थानां च समानकर्मकाणाम् , विशिपतिपदिस्कन्दां व्याप्यमानासेव्यमानयोः, एषु चतुर्णां सूत्राणां सोदाहरणमर्था लेख्याः । ८

### १९५२

#### सिद्धान्तकौमुद्याः दशगण्यां प्रश्नाः ।

१ भविता, देधे, ऊखतुः, आञ्छ, विस्तम्भते, एतेषां शङ्कासमाधिभ्यां ससूत्रनिर्देशं साधुत्वं निर्वर्ण्य, षोपदेशणोपदेशकारिका सप्रयोजनं व्याख्येया । १०

२ विव्यथे, अगूढ, ऊयतुः, विव्याय, एतेषां साशङ्कं साधुत्वप्रकारमभिधाय, 'कथं संक्रामयति' 'कथं विज्ञापना भर्तृषु सिद्धमेतत्' इति अनयोर्विभक्तवाक्यघटकासाधुप्रयोगयोर्विचिकित्साप्रदर्शनपूर्वकं साधुत्वमभिधीयताम् । १२

३ अवधीत् , ऊर्णुनाव, आत्थ, अध्यये, रूयात् , सुसुष्वाप, एषां साधुत्वप्रक्रियामभिधाय, 'तेन स्फायन्निर्मोकसन्धीत्यादि सिद्धम्' इति । अस्य ग्रन्थस्योत्थानप्रकारं प्रदर्श्य साधु समाधानं प्रदर्शनीयम् । १०

४ धत्तः, अशात् , अश्लिक्षत्कन्यां देवदत्तः, एतान् निरुच्य 'स्थानषष्ठीनिर्देशाद्गोपधयोर्निवृत्ति' रित्यस्याशयो वर्णनीयः । ८

५ रुन्धः, शिण्ढि, अचान्धाम् , चिन्तति, कंसमजीघतत् , एषां साधनप्रणाली प्रदर्शनीया । १०

अथवा

'परत्वाद् वृद्धौ सत्यां टिलोपः' 'वृद्धेर्लोपो बलीयान्' यत्तु इदित्करणाद्यन्त्रतीत्यादि माधवेनोक्तं तच्चिन्त्यम्' आदिशब्दः प्रकारे, तेन येऽत्र नकारानुषक्तास्ते तृम्फादयः, एतानि वाक्यानि सप्रमाणफलनिर्देशं व्याख्येयानि । १०

१९५२

सिद्धान्तकौमुद्याः णिजन्तप्रक्रियाद्युणादिप्रकरणान्तभागे प्रश्नाः ।

१ धातुविशेषतोऽनिर्दिष्टाः कृत्प्रत्ययाः गणपठितेभ्यो धातुभ्यो भवन्ति ? आहोस्वित् सनाद्यन्ता धातवः इति विहितधातुभ्यः, उत वा उभाभ्यामिति विलिख्य ग्रन्थलिखितप्रयोगं प्रदर्श्य धातोरेकाच इति धातोरनुवर्तनात्सिद्धे पुनर्धातोरित्यधिकारसूत्रस्य किं फलम् ? साधु लिखत । पुत्रमिच्छति पुत्रीयति—खे शेते खशय इत्यादिषु सिद्धे प्रयोगे विभक्त्यदर्शनात्क्व गता विभक्तयः ? केन प्रकारेणेति समाधाय एकस्मादेव धातोः कृत्प्रत्यये पाचकः, पाचिका, पाचकमित्यादिषु लिङ्गज्ञानं यथा भवति, न तथा तिङ्प्रत्यये पक्ता पक्ष्यतीत्यादौ किं कारणम् ? तत्स्पष्टं लिखत । १०

अथवा

अशूशवत्, ऐर्ष्यियत्, दिद्युतिषते, यियावयिषति जाजापते, अररीति, जर्घट्, अविविष्वद्रापत्, आमुमुमुआयत्, एषु नवसु पञ्चैव साध्याः ।

२ पिप्रापयिषति, अयस्किरते, उपरमति, भावयामासे, अवधि, गौः पयो-दुग्धे, अपि जायां त्यजसि, एषु पञ्चैव सम्यक् साधनीयाः । १०

३ त्वं भारं वहेः, याहियाहीतियाति, जन्यः, अह्नोयम्, शिष्यः, प्रतिगृह्यम्, त्याज्यम्, एषु सप्तसु पञ्चैव साधनीयाः । १०

४ प्रघः, द्विपः, पूर्वसरः, दतिहरिः, वाचंयमः, आशीः, ब्रह्महा, वृत्तम्, द्युतितम्, जग्मिवान्, पवित्रम्, एष्वेकादशसु पञ्चैव साधनीयाः । १०

५ जरायुः, शिशुः, मधुः, वरेण्यः, कुची, रहः, पुण्यम्, वृषभः, मङ्गलम्, एषु पञ्चैव समाधेयाः । १०

## १९५२

### सिद्धान्तकौमुद्या उत्तरकृदन्ते प्रश्नाः ।

१ शक्नोति भोक्तुम्, उपाध्याया, पलिघः, मृगया, दुष्करः, अधीत्य, समूलघातम्, उच्चैः कारम्, एषु षट् प्रयोगाः ससूत्र-विग्रह-विशेषकार्य निर्देशं साध्यन्ताम् ।

२ भाववचनाश्च, कर्मणि च येन संस्पर्शात्कर्तुः शरीरसुखम्, मयतेरिदन्यतरस्याम्, स्वादुमि णमुल्, कषादिषु यथाविध्यनुप्रयोगः, एषु चतुर्णां सूत्राणां सोदाहरणमर्था लेख्याः । ८

## १९५३

### सिद्धान्तकौमुद्या नियतभागे प्रश्नाः ।

१ 'यासुट् परस्मैपदेष्वित्यत्र' यासुटः ङित्त्वविधानफलमभिधाय, अनुबन्धकार्ये अनल्विधौ इत्यस्य प्रवृत्तेरनुगमो विधेयः । १०

अथवा

'ण्यल्लोपाविति' वार्तिकं सोदाहरणं व्याख्याय सिद्धान्तपक्षं प्रद-प्रदर्शयत ।

२ वव्रके, उवोख, आनृजे, विव्युः, जह्वार, एते साधु साधनीयाः । १०

३ असु, बुध्, शो, वृञ् धातूनां लुङि प्रथमपुरुषैकवचने रूपाणि संसाध्य विलिखत । १०

४ अवधीत्, अख्यत्, सुवैः, अभीयात्, अध्यैष्ट, आयन्, एधि, अरुदत् एषु पञ्चैव सप्रपञ्चं साधनीयाः । १०

५ दिदीये, स्तरिषीष्ट, देभतुः, घस्तः, ऐयः, भृज्ज्यात्, आनर्छ, अभार्क्षीत्, शिण्ढि, शशरतुः, खौनीहि, एषु पञ्चैव संसाध्य, चितिस्मृत्यामित्यत्रेत्संज्ञकेकारग्रहणफलम्, पृपूरणे इत्यत्रत्यदीर्घग्रहणफलञ्च सुस्पष्टं विन्यस्यताम् । १०

## १९५३

### सिद्धान्तकौमुद्या नियतभागे प्रश्नाः ।

१ कृत्यप्रत्ययान्तानां, व्युत्पन्नपक्षे-उणादिप्रत्ययान्तानाञ्च कृदन्तभिन्नत्वेन कृतद्धितसूत्रप्रवृत्त्यभावात् , व्युत्पन्नत्वेनार्थवत्सूत्राप्राप्त्या च कथं प्रातिपदिकसंज्ञा ! इति सम्यग् विलिख्य वासरूपोऽस्त्रियामित्यस्य क उपयोगः इति साधु लिखत । १०

अथवा

अबिभ्रजत् , अचिकीर्तत् , विवरीषति, पुस्फारयिषति, वनीवच्यते, अपास्पाः, अवर्वर्त्, विद्वयति, अशिश्रियत्—एषु नवसु पञ्चैव केचन प्रयोगाः वैकल्पिकरूपनिर्देशपुरःसरं साधु साधनीयाः ।

२ विवारयिषति, शतं प्रकुरुते, शिशयिषते, शाययति, चिकल्पिषते, शंशामिता, अभाजि, अचिकीर्षिष्ट—एष्वष्टसु पञ्चैव प्रयोगाः साधनीयाः । १०

## १९५३

### सिद्धान्तकौमुद्या उत्तरकृदन्ते प्रश्नाः ।

१ द्वौ शूर्पनिष्पावौ, न्यादः, समज्या, जरा, सुलभम्, प्रदाय, दण्डोपघातम् , ब्राह्मणवेदम् , एषु षट् प्रयोगाः ससूत्रविग्रहविशेषकार्यनिर्देशं साध्यन्ताम् । १२

२ दारजारौ कर्तरि णिलुक् च, विभाषाख्यानपरिप्रश्नयोरिञ्च समासेऽनञ्पूर्वे क्त्वो ल्यप् , सप्तम्यां चोपपीडरुधकर्षः, अस्यतितृषोः क्रियान्तरे कालेषु, अन्वाच्यानुलोम्ये, एषु चतुर्णां सूत्राणां सोदाहरणमर्थो लेख्याः ८

३ अभिजानासि कृष्ण ! यद्वने अभुञ्जमहि, नाहं कलिङ्गान् जगाम, भवता यष्टव्यम् , चर्य्यम् , पण्या गौः, कुण्डपाय्यः, गम्यम्—एषु सप्तसु पञ्च प्रयोगाः साधनीयाः । १०

४ पापचकः, कर्णेजपः, सर्वं सहः, अन्यादृशः, जनौः, प्रस्तीमः, तूर्णः, सुत्वा, निषेदुषीम्, विदन् , नेमिः—एष्वेकादशसु पञ्चैव प्रयोगाः साधनीयाः । १०

५ खरुः, युवा, शद्रुः, चक्षः, सरयूः, धेनुः, शीलम् , वितस्तिः, त्रयः, प्रथमः—एषु दशसु केचन प्रयोगाः साधनीयाः । १०

१९५४

१ ( अतो येय इति सूत्रे सार्वधातुकपदानुवृत्तेः, कृ, सृ, भृ, वृ, इति सूत्रे क्रादिग्रहणस्य वा फलमभिधीयताम्। १०

२ ऐधिढ्वम्, जम्भते, पिप्ये, ऊयतुः, ऊर्णुनाव, अवेः, अजातः, एषु पञ्चानां सिद्धिप्रकारो लेख्यः। १०

३ दिदीये ), आस्थत, जिघाय, ववष्ठ, ममक्थ, संचस्करतुः, विष्कभ्नोति, एषु पञ्चैव प्रयोगास्साधनीयाः। १०

४ ऐयरुः, खौनीहि, व्यष्टभत्, अश्लिक्षत् कन्यां देवदत्तः, शशरतुः, रुन्धः, अचीकृतत्, एषु पञ्चानां सिद्धिं लिखत। १०

५ दशगणा नामतो निर्देश्याः, कथञ्च तेषां तत्तन्नामेति प्रदर्श्य औननत्, अपीपटत्, कंसमजीघतत्, एषु द्वयोस्सिद्धिप्रकारस्साधु लेख्यः। १०

१९५४

केऽपि पञ्चैव समाधेयाः।

१ अबीभवत्, अशूशवत्, अपीप्यत्, विलीनयति, ऐर्ष्ययत् एतानि संसाध्य विस्मापयन् विस्मितमात्मवृत्तावित्यत्र कानुपपत्तिः किञ्च समाधानम्। १०

२ सुषुप्सति, दुद्यूषति, ज्ञीप्सति, मोक्षते, अरिरिषति, अरार्यते, शाशय्यते, जङ्घमीति, आरति, मामोति—एतेषु ससूत्रं विशेषकार्यं लेख्यम्। १०

३ यङ्लुक्प्रकरणे ङित्वस्यात्मनेपदनिमित्तत्वाभावो मूलोक्तदिशा स्फुटीक्रियताम्। १०

४ समिधिता, विद्वयति, अकवयीत्, उत्पुच्छयते, वरिवस्यति, स्वापयति, अतितिरायत्, कनयति, ज्यापयति, पिप्रापयिषति एतानि साधनीयानि। १०

५ अपस्किरते वृषो हृष्टः, उदायत, अधि क्रमते बुद्धिः, शुश्रूषते, नियुङ्क्ते, दर्शयते भवः, माणवकं गर्धयते, बोधयति पद्मम्, गोपी शाययति, असाधारणकार्यविधायकसूत्रनिर्देशपुरस्सरमेते साध्याः। १०

६ भाविता, अन्वतप्त पापेन, गौर्दुग्धते पयः, पच्यते, कुष्यति कुष्यते वा पादः स्वयमेव एषु विशेषकार्याणि प्रदर्श्य स्मासिच्सीयुडिति सूत्रेऽनुवर्तमानोपदेशपदस्य फलं निरूप्यताम्। १०

७ एवं स्म पिता ब्रवीति, कदा कर्हि वा भुङ्क्ते, कृष्णश्चेद् भुङ्क्ते त्वं गाश्चारय, कथं धर्मं त्यजेः, त्वं भारं वहेः, एषु विशेषसूत्रं प्रदर्श्य क्रिया-समभिव्याहारे लोट् लोटो हिस्वौ वा च तध्वमोरिति सूत्रं सोदाहरणं व्याख्यायताम् । १०

१९५४

सिद्धान्तकौमुद्याः कृदन्तभागे प्रश्नाः ।

१ सूर्यः, स्तुत्यः, पुष्यः, भुजः, बुधः, जीवकः, गायनः, द्विपः, प्रष्ठः, द्विष्ठः, सर्वप्रदः, वचनकरः, आदायचरः, कर्मकरः, प्रभाकरः ।
एषु पञ्च यथेष्टं सूत्रोपन्यासपूर्वकं साधु साधनीयाः । १०

२ परन्तपः, सोमसुत्, विश्वम्भरः, अन्तगः, नुन्नः, पूरितः, योगी, यायावरः, भरिष्णुः ।
एषु शङ्कासमाधानपुरस्सरं सूत्रोपन्यासपूर्वकञ्च पञ्चैव साधनीयाः । १०

३ इ चेति ह्रस्वः सुपठ इति फक्किकां सविस्तरं व्याख्याय—अवदत्तं विदत्तं च प्रदत्तं चादि कर्मणि । सुदत्तमनुदत्तं च निदत्तमिति चेष्यते ॥ इति कारिकाशयो विशदरूपेण प्रदर्श्यताम् । १०

४ संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे इत्यादिकारिकामुदाहरण-सहितां व्याख्याय संस्तावः, पुष्पप्रचयः, आरावः, वरः, जलधिः, विद्या, क्रिया, अटाट्या, एषु पञ्च प्रयोगाः विग्रहप्रदर्शनसूत्रोपन्यासपूर्वकं साधनीयाः । १०

५ पत्रम्, अरित्रम्, संपर्को, अन्वग्भूय, मयूरिकाबन्धम्, प्रगाय, प्रणत्य, मृडित्वा, विमार्गः, वह्नः ।
एतेषु पञ्च प्रयोगाः साधु साध्यन्ताम् । १०

१९५५

सिद्धान्तकौमुद्या दिवादादिनामधात्वन्तभागे प्रश्नाः ।

१ ( अजुहवुः, धत्तः, नेनिजानि, ) दिदीये, अजनि, अश्लिक्षत् कन्यां देवदत्तः, प्रहिणोति, देभतुः—एषु पञ्चैव साधु साधनीयाः । १०

२ अकृक्षत्, शिण्ढि, उपास्किरत्, स्नौनीहि, अपीपृथत्, अलुलोकत्, अतिष्ठिपत्, प्राणिणत्, अत्रापि पञ्चैव विशेषकार्याणि प्रदर्श्य साध्याः । १०

३ ईप्सति, शिक्षति, तुष्टूषति, सोसूच्यते, जेघ्नीयते, वध्यात्, वर्वृतीति, तोतोर्ति। एषु चतुर्णां साधनप्रकारं सम्यगुपवर्णयत। १०

४ पुत्रकाम्यति, रोमन्थायते, हलयति, दारदयति, वर्षयति, इमानि कथं सिद्ध्यन्तीति स्फुटमभिधीयताम्। १०

५ (क) राघोऽकर्मकाद् वृद्धावेव, एवकारो भिन्नक्रमः।
(ख) बहुलमेतन्निदर्शनम्।
(ग) वार्त्तिकेऽवेत्युपसर्गविशिष्टपाठात् केवलादुपसर्गान्तरविशिष्टाच्च क्यङ्नेति माधवादयः। तन्नेति सूचितम्।
(घ) प्रातिपदिकाद्धात्वर्थे, इत्येव सिद्धे केषाञ्चिद् ग्रहणं सापेक्षेभ्योऽपि णिजर्थम्। अत्र भागचतुष्टये भागद्वयं स्फुटं व्याख्येयम्। १०

१९५५

सिद्धान्तकौमुद्याः कृदन्तान्तभागे प्रश्नाः।

१ भव्यः, प्रज्ञः, विन्दः, ददः, लवकः, सामगः, प्रियंवदः, प्रियङ्करः, अभयङ्करः, तमोपहः—एतेषु पञ्चानां प्रयोगाणां सूत्रनिर्देशपुरस्सरं साधु साधुत्वमभिधीयताम्। १०

२ शंस्थः, अदृष्टजः, सूनः, प्रतिशीनः, प्रस्तीमः, नदीष्णः, इद्धः अर्चितः, एषु पञ्च यथेष्टं संपूर्णसूत्रलेखनपूर्वकं साध्यन्ताम्। १०

३ मुकुन्दस्यासितमिदमिदं यातं रमापतेः।
भुक्तमेतदनन्तस्येत्यूचुर्गोप्यो दिदृक्षवः॥

इतिकारिकायास्तात्पर्यमुपवर्ण्य आखिवान्, बिभ्राणः, पवमानः, अधीयन्, प्रभुः, एतेषु त्रयः प्रयोगाः साधनीयाः। प्रथमो नोपेक्ष्यः। १०

४ भीमः, रागः, शारः, प्रस्तावः, पटस्य विस्तारः, हसः, यत्नः—एषु पञ्चैव साध्याः। १०

५ यूतिः, पक्तिः, चर्चा, उपदा, स्मारं स्मारम्, निमूलकाषम्, उच्चैः कृत्य, तूष्णींभावम्, नानाकृत्य, एतेषु सूत्रोपन्यासपूर्वकं पञ्च प्रयोगाः साध्यन्ताम्। १०

## १९५६

### सिद्धान्तकौमुद्या दिवादिनामधात्वन्तभागे प्रश्नाः ।

१ प्रण्यपादि, रधिता, पर्यास्थत, प्रणिचिकाय, अव्याचीत्, गिलति, तृणेढि, एषु केचित् पञ्च प्रयोगाः सूत्रनिर्देशपुरःसरं साधु साधनीयाः । १०

२ संचस्करिथ, स्तभान, खौनाति, अपीपिडत्, कीर्तयति, अलुलोकत्, अजीगणत्, अपीपटत्—अत्रापि केचन पञ्चैव साधु साधनीयाः । १०

३ ण्यन्तानाम्–इङ्–इण्–इक्धातूनां सन्नन्तानाञ्च—इङ्–इण्–इक्धातूनां लटि प्रथमपुरुषैकवचने रूपाणि लिखत । १०

४ चञ्चूर्यते, चेकीयते, अबोभूवीत्, सास्वपीति, मामोति, अत्र प्रयोगपञ्चके प्रयोगत्रयं संसाध्य–अजधातोः यङः सत्त्वं यङ्लुकश्चासत्त्वं विविच्य वक्तव्यम् । १०

५ क्षीरस्यति बालः, भृशायते, नमस्यति, देवान्, शुनयति, तिरायति—एषु सूत्रोपन्यासपूर्वकं साधनप्रकारं सम्यग् वर्णयत । १०

अथवा

उपसर्गसमानाकारं पूर्वपदं धातुसंज्ञाप्रयोजके प्रत्यये चिकीर्षिते पृथक्क्रियते—इति ज्ञापितस्य फलम् उपवर्ण्य अस्य विशेषविषयत्वे भाष्यवार्त्तिकयोः प्रामाण्यं साधु उपपादनीयम् ।

## १९५६

### सिद्धान्तकौमुद्याः कृदन्तान्तभागे प्रश्नाः ।

१ कण्ड्वादिभ्यो यगिति सूत्रे धातुग्रहणस्य फलं सम्यगुपवर्ण्य अकर्मकाधिकारे सकर्मकधातूनामकर्मकता कथं ग्रन्थकृता प्रतिपादितेति सम्यगुपपाद्यताम् । १०

२ अनयति सुखम्, सृज्यते स्रजं भक्तः, पुरा भुंक्ते, यजतां स्म, याहियाहीति याति, अकारि, इच्छेत्, चकार—एषु यथेष्टं पंचप्रयोगाः सूत्रनिर्देशपुरस्सरं साधनीयाः । १०

३ वास्तव्यः, आम्नायो देशः, मार्ग्यः, युग्यो गौः, याच्यम्, गायकः, स्तम्बकरिर्व्रीहिः, विहगः, भुजंगमः—एतेषु पंच प्रयोगाः सूत्रोपन्यासपूर्वकं साध्यन्ताम् । १०

४ सिनोभासः, पवितः, प्रमुदितः, दितः, इषितम् , अर्हन् । प्रवासी—एष्वपि पञ्चैव साध्याः ।

५ मधुसूदनः, शयालुः, इत्वरः, पूः, नेत्रम् , पवित्रम् , पर्याप्तो भोक्तुम् , यागाय याति, शारः—एषु पञ्चानां साधुत्वमभिधीयताम् । १०

६ उपाध्यायः, पर्यायः, निकेचायः, उत्पावः, धनमदः, गवामुपसरः, हवः, स्तम्बघ्नः, अमीषु पंचप्रयोगाः सूत्रोपन्यासपूर्वकं साधनीयाः । १०

७ प्रच्छदः, भूतिः, प्रथमम्भोजम् , ब्राह्मणवेदं भोजयति, शय्योत्थायं धावति, तिर्यक्कारं गमः, नामग्राहमाह्वयति—एतेषु पंचैव साधनीयाः । १०

## १९५७

### सिद्धान्तकौमुद्या दिवाद्यादिनामधात्वन्तभागे प्रश्नाः ।

१ दीव्यति, अशात् , आस्यत् , यसति, अपरेधतुः, भृज्ज्यात् , प्रतिक्लिकरति, आज्ञीत् , एषु कानिचन पञ्च धात्वर्थनिर्देशपुरस्सरं ससूत्रं साधनीयानि ।

२ परिष्करोति, एषिता, अपप्रथत् , चययति, अरवयति, रामो राज्यमचीकरत् , एषु त्रयाणां साधनप्रकारं प्रदर्श्य । 'यम च परिवेषणे । चान्मित् । परिवेषणमिह वेष्टनम् । नापि भोजना नापि वेष्टना' इत्यस्याः पङ्क्तेरभिप्रायः स्फोरणीयः । १०

३ चोरयति, वाजयति, अन्नं साधयति, जुघुक्षति, कूलं पिपतिषति, तुष्टूषति, वावश्यते, कोकूयते, अत्र प्रयोगाष्टके यथेच्छं चतुर्णां सिद्धिं विलिख्य प्रार्थयन्ति शयनोत्थितं प्रियाः—इत्यस्योपपत्तिं प्रदर्शयत । १०

४ बोभवीति, वर्वृतीति, समिधिता, हरितायते, माल्मति, सुखायते, हलयति, तपस्यति, अत्र अन्तिमावपरिहाय केषाञ्चित् पञ्चानां प्रक्रियां प्रदर्श्य हलेरदन्तनिपातनस्य फलं तपस्यतीत्यत्र रुत्वाभावं च समर्थय । १०

५ धूनोति चम्पकवनानि धुनोत्यशोकं
चूतं धुनाति धुवति स्फुटितातिमुक्तम् ।

वायुर्विधूनयति चम्पकपुष्परेणून्
यत्कानने धवति चन्दनमञ्जरीश्च ॥
शैषिकान्मतुबर्थीयाच्छैषिको मतुबर्थिकः ।
सरूपः प्रत्ययो नेष्टः सन्नन्तान्न सनिष्यते ॥
अत्र द्वयोः कारिकयोः कामप्येकामवलम्ब्य सुविशदं व्याख्यानं विधेयम् । १०

१९५७

सिद्धान्तकौमुद्याः कृदन्तान्तभागे प्रश्नाः ।

सर्वे प्रश्नाः समानाङ्कभाजः, एतेषु पञ्चैव समाधानमर्हन्ति ।

१ महीयते, विद्यामादत्ते, संक्रीडते, आयच्छते, हरिमुपकुरुते, छात्रा विकुर्वते, कारयते, वसन् ददर्श, अन्नं भुङ्क्ते, एषु पञ्च प्रयोगाः सूत्रोपन्यासपूर्वकं साधनीयाः ।

२ जन्यम्, अनुद्यं गुरुनाम, त्याज्यम्, वाच्यम्, लाप्यम्, पाय्यं मानम्, गम्यम्, एतेषु यथेच्छं सूत्रोपन्यासपूर्वकं पञ्चैव साध्याः ।

३ भवो देवः, भावः, बहुक्षामा, शक्तिग्रहः, कवचहरः, पुरस्सरः, बहुकरः, अमीषु पञ्चानां साधुत्वमभिधीयताम् ।

४ शुनिन्धयः, अभ्रंलिहो वायुः, द्विषतीतापः, प्रसूः, अग्रणीः, अग्रेभूः, सोमयाजी, एष्वपि पञ्चानां साधुत्वं सम्यगुपपाद्यताम् ।

५ कामी, विलापी, शुभङ्करः, भूषणः, पूः, धीः, प्रतिभूः, शंभुः, अत्रापि पञ्चानामेव साधु साधुत्वमुपवर्णय ।

६ संज्ञासु धातुरूपाणि प्रत्ययाश्च ततः परे ।
कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु ॥
इति कारिकामुदाहरणसहितां व्याख्याय आमलक भाति, उपाध्याया, व्यावक्रोशी, प्रमादः, विहवः, एषु त्रयाणां ससूत्रं साधुत्वमुपपाद्यताम् ।

७ हरिः सेव्यः, उपालम्भः, स्वाढ्यङ्करः, आसमीत्य सायते, अप्राप्य नदीं पर्वतः स्यन्दित्वा, गेहंगेहमनुप्रवेशम्, एषु पञ्चैव साध्यताम् ।

१९५८

सिद्धान्तकौमुद्या दिवादिनामधात्वन्तभागे प्रश्नाः ।

१ त्रेसतुः, अजनि, अशमत्, अमासीत्, अधावीत्, देभतुः, निष्फुरति, शिंषन्ति—एषु केचन पञ्च प्रयोगाः धात्वर्थनिर्देशपुरस्सरं ससूत्रं साधनीयाः । १०

२ स्तभान, अवारीत्, खौनाति, ज्ञपयति, आमयति, अजीगणत्, एषु त्रयाणां साधनप्रकारं प्रदर्श्य 'चिन्तेति पठितव्ये इदित्करणं णिचः पाक्षिकत्वे लिङ्गम्' अस्याः पङ्क्तेराशयं स्फुटं प्रतिपादयत । १०

३ औननत्, असयति, अपीप्यत्, चिकरिषति, आरिरात्सति, देदीयते, देध्मीयते, अस्मिन् प्रयोगाष्टके स्वेच्छया चतुर्णां सिद्धिं विलिख्य 'कथं तर्हि विस्मापयन् विस्मितमास्मवृत्तौ' अस्योपपत्तिमुपपादयत । १०

४ अपास्पाः, अजञ्जमीत्, विष्णूयति द्विजम्, कुमारायते, अकवयीत्, कष्टायते, वरिवस्यति, अर्थापयति, अत्राद्यावपरित्यज्य केषाञ्चित् पञ्चानां साधनिकां प्रदर्श्य 'स्वमनायत, इत्यत्र मनःशब्दात् प्रागट्' इत्यस्योपपत्तिं वर्णयत । १०

५ 'परत्वाद् वृद्धौ सत्यां टिलोपः, वृद्धेर्लोपो बलीयान्' इति ग्रन्थस्याशयं विशदं विलिखत । १०

१९५८

सिद्धान्तकौमुद्याः कृदन्तान्तभागे प्रश्नाः ।

१ कण्डूयति । हृणीयते । पुपुत्रीयिषति । व्यतिहे । निविशते । विक्रीणीते । संक्रीडते । समस्थित । एतेषु पञ्चानां सूत्रोपनिर्देशपूर्वकं साधुत्वम्प्रदर्श्य कण्ड्वादीनां द्वैविध्ये मानमुपदर्शयत । १०

२ आदित्यमुपतिष्ठते । वितपते । उत्कुरुते । शास्त्रे नयते । उपक्रमते । विरमति । एषु पञ्चानां साधुत्वमुपपाद्य हनिगम्यादीनामकर्मकत्वे युक्तिः प्रदर्शनीया । १०

३ भविता । अन्वतप्त पापेन । अदायि । पच्यते ओदनेन । प्रस्नुते । अगच्छत् किम् । एषु चतुरः प्रयोगान् प्रसाध्य चिण्णमुलोरिति सूत्रे दीर्घग्रहणस्य फलं प्रदर्शनीयम् । १०

४ वास्तव्यः । चेयम् । देयम् । वध्यः । ब्रह्मोद्यम् । हत्यः । मार्ग्यः । अमावस्या । एषु सप्तानां साधुत्वं सूत्रनिर्देशपूर्वकमुपवर्णयत । १०

५ लवणः । दायः । कुम्भकारः । अंशहरः । दिवाकरः । पतिघ्नी स्त्री । भुग्नः । पक्वः । विभुः । एषु सप्तानां साधुत्वं सूत्रनिर्देशपूर्वकमुपपादयत । १०

६ दाराः । उद्गारः । चयः । विश्नः । व्रज्या । वेदना । विगणय्य । तूष्णीम्भूय । एते प्रयोगाः साधु साधनीयाः । १०

इति पण्डितश्रीरामचन्द्रझाव्याकरणाचार्यविरचिता

चतुर्थखण्डप्रश्नावली समाप्ता ।

समाप्तश्चायं ग्रन्थः